स्तवं पठति, तस्य पन्नगभयं नास्ति । पन्नगाः सर्वे वैरोट्यया गुरोः पार्श्वमानीताः । उपदेशं श्राविताः । उपशान्तचित्ताः संवृत्ताः[1] । नागदत्तनामा वैरोट्यापुत्रः सौभाग्यरङ्गभूरभूत् । पद्मदत्तेन प्रियासहितेन व्रतं गृहीतम् । तपस्तप्त्वा स्वर्गं गतः । पद्मयशा अपि तस्य देवत्वं प्राप्तस्य इच्छासिद्धियुजो देवी सञ्जाता । वैरोट्या च फणीन्द्राणां ध्यानान्मृत्वा धरणेन्द्रपत्नीत्वेनोत्पन्ना । 5 तत्रापि 'वैरोट्या' इति नामास्याः ।

॥ इति आर्यनन्दिलप्रबन्धः ॥ २॥

## ३. अथ श्रीजीवदेवसूरिप्रबन्धः ।

§ १२) गूर्जरधरायां वायुदेवतास्थापितं वायटं[2] नाम महास्थानम् । तत्र धर्मदेवनामा श्रेष्ठी धनवान् । तस्य शीलवती नाम गेहिनी गेहश्रीरिव देहिनी । तयोः सुतौ महीधर-महीपालौ । महीपालः क्रिडाप्रियो न कलाऽभ्यासं करोति । ततः पित्रा हक्कितो रुष्टो देशान्तरमसरत् । धर्मदेवश्रेष्ठी 10 परलोकं प्राप्तः । महीधरोऽपि श्रीजिनदत्तसूरीणां वायट[3]गच्छीयानां पादमूले प्रवव्राज । स राशिल्लसूरिर्नाम सूरीन्द्रो बभूव । महीपालोऽपि पूर्वस्यां दिशि राजगृहे पुरे दिगम्बराचार्यदीक्षां प्राप्याचार्यपदमवाप । 'सुवर्णकीर्तिः' इति नाम पप्रथे । श्रुतकीर्तिना गुरुणा तस्मै द्वे विद्ये प्रदत्ते–चक्रेश्वरीविद्या परकायप्रवेशविद्या च । धर्मदेवे दिवंगते शीलवती दुःखिन्यासीत् । यतः–

१०. यथा नदी विनाऽम्भोदाद्यामिनी शशिनं[4] विना । अम्भोजिनी विना भानुं भर्त्रा कुलवधूस्तथा ॥ १ ॥ 15

राजगृहागतपरिचितमनुष्यमुखेन स्वपुत्रं स्वर्णकीर्तिं तत्रस्थं ज्ञात्वा तन्मिलनाय गता । मिलितः सुवर्णकीर्तिस्तस्याः । उन्मीलितो मातापुत्रस्नेहः । एकदा तया सुवर्णकीर्तिर्भाषितः– तव पिता दिवमगमत् । त्वमत्र सूरिः । महीधरस्तु राशिल्लसूरिर्नाम श्वेताम्बरसूरिपदे वर्तते । वायटप्रदेशे विहरति । युवां द्वावेकमतीभूय एकं धर्ममाचरतम् । वायटमानीतस्तया सः । द्वौ बान्धवावेकत्र मिलितौ । [5]सुवर्णकीर्तिर्भाषितो मात्रा–वत्स ! त्वं श्वेताम्बर एधि । सुवर्णकीर्तिर्वदति–राशिल्लसूरिर्दिगम्बराचार्यो भवतु मदनुसरणात्[6] । एवं वर्तमाने मात्रा द्वे रसवत्यौ 20 कारिते । एका विशिष्टा । द्वितीया[7] मध्यमा कुटुम्बार्थां । दिग्वासाः पूर्वमाकारितः । स विशिष्टां रसवतीं भुङ्क्ते स्वैरम्, कुरसवतीं पश्यत्यपि न । राशिल्लसूरिशिष्यौ द्वावागतौ । ताभ्यां निर्जरार्थिभ्यां कुरसवतीं विजह्रे । मात्रा भोजनादनु दिगम्बरः प्रोक्तः–वत्स ! एते श्वेताम्बराः शुद्धाः, त्वमाधाकर्मचिन्तां न करोषि । एते तु वदन्ति– 25

११. भुञ्जइ आहाकम्मं सम्मं न य जो पडिक्कमइ[8] लुद्धो । सव्वजिणाणाविमुहस्स तस्स आराहणा नत्थि ॥ २ ॥

तथैव च पालयन्ति । तस्मादेतेषां[9] मिल, मोक्षमिच्छसि चेत् । सुवर्णकीर्तिर्मातृवचसा प्रबुद्धः श्वेताम्बरदीक्षामाददे[10] । 'जीवदेवसूरिः' इति नाम तस्य दशसु दिक्षु विस्तृतम् । यतिपञ्चशती सहचरो विहरन् भव्यानां मिथ्यात्वादिरोगान् सुदेशनापीयूषप्रवाहेण निर्दलयति श्रीसूरिः[11] । 30

§ १३) एकदा देशनायां योगी कश्चिदागतः[12] । [† स त्रैलोक्यजयिनीं विद्यां साधयितुं द्वात्रिंश-

1 ABD नास्ति । 2 A वायडं । 3 A वायड० । 4 A शशिना । 5 ABD नास्त्येतत्पदम् । 6 A मदन्वशरणात् । 7 ACD अपरा । 8 P ०कम्मइ । 9 B ०एषां । 10 AD ०दत्ते । 11 P श्रीसूरेः । 12 AB ०द्यायातः । † एष कोष्ठकान्तर्गतः पाठः P विना नास्त्यन्यत्र ।

ल्लक्षणभूषितं नरं विलोकयति। तस्मिन्समये ते त्रय एव । एको विक्रमादित्यः, द्वितीयो जीवसूरिः, तृतीयः स एव योगी, नान्यः। राजाऽवध्यः। नरकपाले एकपुटी षण्मासीं यावद्भिक्षा याच्यते भुज्यते च, ततः सिध्यति । तेन सूरिं छलयितुमायातः। सूरीणां सूरिमन्त्रप्रभावाद्वस्त्राण्येव नीलीभूतानि न पुनर्वपुः। ततो गुरुसमीपस्थवाचकजिह्वा स्तम्भिता]। श्रीजीवदेव-
5 सूरिदृष्टौ[1] जिह्वया[2] योगपट्टपर्यस्तिकां बबन्ध । सभ्यलोको बिभाय । प्रभुभिः स कीलितः। ततस्तेन खटिकया भूमौ लिखितम्—

१२. उवयारह उवयारडउ सव्वु[3] लोउ करेइ। अवगुणि[4] कियइ जु गुणु[5] करइ विरलउ[6] जणणी[7] जणेइ ॥ ३ ॥

अहं तव च्छलनार्थमागतोऽभूवम्। त्वया ज्ञातः, स्तम्भितः, प्रसीद, मुञ्च, कृपां कुरु-इत्यादि। ततः कृपया[8] प्रभुभिर्मुक्तोऽसौ वायटनगरे बहिर्मठीं गत्वा तस्थौ। प्रभुभिः स्वगच्छः
10 समाकार्योक्तः—योगी दुष्टो बहिर्मठेऽस्ति अमुकदिशि। तस्यां दिशि केनापि साधुना साध्व्या वा न गन्तव्यमेव । तथेति तन्मेने सर्वैः। साध्व्यौ तु द्वे ऋजुतया कुतूहलेन तामेव दिशं गते। योगिना समेत्य चूर्णशक्त्या वशीकृते तत्पार्श्वं न मुञ्चतः। प्रभुभिः स्ववसतौ दर्भपुत्रकः कृतः। तत्करच्छेदे योगिनोऽपि करच्छेदः। मुक्ते साध्व्यौ। मस्तकक्षालनात्परविद्याविदलने सुस्थीभूते ते।

§ १४) अथान्यदोज्जयिन्यां विक्रमादित्येन वत्सरः[9] प्रवर्तयितुमारेभे। तत्र देशानामनृणीकरणाय
15 मन्त्री निम्बो गूर्जरधरादिशि प्रहितो विक्रमेण। स निम्बो वायटे श्रीमहावीरप्रासादमचीकरत्। तत्र देवं श्रीजीवदेवसूरीन्द्रः प्रत्यतिष्ठिपत्। अन्येद्युर्वायटे लल्लो नाम श्रेष्ठी महामिथ्यादृग्[10]। तेन होमः कारयितुमारब्धः। विप्रा मिलिताः। आसन्नादाम्लिकाद् द्रुमाद्धूमाकुलोऽहिः कुण्डासन्नोऽपतत्। निर्घृणैर्विप्रैः स वराक उत्पाट्य वह्नौ[11] जुहुवे। लल्लस्तद् दृष्ट्वा विरक्तो विप्रेषु उवाच[12]—अहो! निष्ठुरत्वमेतेषाम्। एवं जीवहिंसारता ये। तस्मादलमेभिर्गुरुभिः । एवं वदन् विप्रान्
20 विसृज्य स्वगृहमगमत्। [13]दर्शनानामाचारान्विलोकते। एकदा मध्याह्ने श्रीजीवदेवसूरीणां साधुसङ्घाटकस्तद्गृहे भिक्षार्थं गतः। तयोः शुद्धभिक्षाग्रहणात्तुष्टः । लल्लेन तौ मुनी आलापितौ—युवयोः के गुरवः?। ताभ्यां श्रीजीवदेवसूरयः कथिताः । लल्लस्तत्र गतः । श्रावकद्वादशव्रतीं ससम्यक्त्वां ललौ। अन्यदा लल्लेनोक्तम्—सूर्यपर्वणि मया द्रव्यलक्षं दाने कल्पितम्[14]। तस्यार्द्धं व्ययितम्, शेषमर्द्धं गृह्णीत। न गृह्णन्ति ते निर्लोभाः। लल्लो बाढं प्रीतः। गुरुभिरुक्तम्—अद्य
25 सायं प्रक्षालितैकपादस्य तव यत्प्राभृतमायाति तदस्मत्पार्श्वे आनेयम्। इति श्रुत्वा गृहं गतो लल्लः। सायं केनापि [15]द्वौ वृषभौ प्राभृतीकृतौ। लल्लेन गुरुपार्श्वमानीतौ। गुरुणोक्तम्—यत्रैतौ स्वयं यात्वा तिष्ठतः। तत्रैतद्[16]द्रव्यव्ययेन चैत्यं कार्यम् । तच्छ्रुत्वा तेन वृषौ स्वच्छन्दं मुक्तौ पिप्पलानकग्रामे[17] गतौ क्वचित् स्थितौ। तत्र भूमौ लल्लेन चैत्यमारब्धम्। निष्पन्नम्। तत्रावधूतः कोऽप्यायातः । तेनोक्तम्—अत्र प्रासादे दोषोऽस्ति । जनैरुक्तम्—को दोषः ? । तेनोक्तम्—
30 स्त्रीशल्यमास्ते। लल्लेन तच्छ्रुत्वा गुरवो विज्ञप्ताः । गुरुभिरुक्तम्—निःशल्यां भूमिं कृत्वा पुनः प्रासादः कार्यते। लल्ल! त्वया द्रव्यचिन्ता न कार्या। तदधिष्ठात्र्यो धनं पूरयिष्यन्ति। प्रसाद उत्कीलयितुमारेभे । शब्द उत्पन्नः—चैत्यं नोत्कीलनीयम् । गुरवो विज्ञप्ताः। तैर्ध्यानं दध्रे।

---

1 BD दृष्टौ । 2 B जिह्वाया, P स्वजिह्वाया। 3 P सव्वउ । 4 C अवगुण। 5 CD गुण। 6 A विरला। 7 C जणिणि। 8 P नास्ति। 9 A वर्तयि०, P संवत्सर प्रवर्त०। 10 AB नास्तीदं पदम्। 11 ABD अग्नौ। 12 AB नास्ति। 13 DP सर्वदर्शना०। 14 P कथित। 15 P द्वे। 16 B तत्रैव द्रव्य०। 17 AB ग्रामं।

अधिष्ठात्री देव्यायया । तयोक्तम्–कन्यकुब्जराजसुताऽहं महणीका[1]नाम्नी पूर्वं गूर्जरदेशे वसन्ती म्लेच्छसैन्ये समागते पलायमाना तेषु पृष्ठापतितेषु भियाऽत्र कूपेऽपतम्[2] । मृत्वा व्यन्तरी जाता । अतः स्वाङ्गास्थिशल्याकर्षणं नानुमन्ये । मामधिष्ठात्रीं कुरु[3] । यथा[4] ऋद्धिं वृद्धिं कुर्वे । गुरुभिः प्रतिपन्नम् । ततस्तद्दत्तभूमौ[5] तद्योग्या देवकुलिका कारिता । तत्र चामितं धनं लब्धम् । लल्लो निष्प्रतिमल्लसुखभाजनमभवत्; सङ्घश्च तुष्टः । लल्लरोपाद्[6] द्विजैर्मृतमूर्पुगौश्चैत्ये क्षिप्ता । सा तत्र मृता । श्रावकैर्विज्ञप्तं तद् गुरवे । गुरुणा विद्याबलाद्गौर्ब्रह्मभवने[7] क्षिप्ता । 'यच्चिन्त्यते परस्य तदायाति सम्मुखमेव' । ब्राह्मणैरनन्योपायत्वाज्जीवदेवसूरयोऽनुनीताः–जीवदेवसूरे! तारय नः । श्रीसूरिभिस्ते तर्जिताः, उक्ताश्च–यदि मच्चैत्ये मत्पट्टसूरेश्च श्रावकवत् सर्वां भक्तिं कुरुध्वे, मत्सूरेः सूरिपदप्रस्तावे हेममययज्ञोपवीतं †दत्थ, तत्सुखासनं स्वयं वहथ, तदा गामिमां ब्रह्मालयादाकृषामि; अन्यथा तु न । तैरपि[9] कार्यातुरैः सर्वमप्यङ्गीकृतम्[10] । अक्षरादिभिः स्थैर्यमुत्पादितम् । ततो गौराकृष्याचार्यैर्वहिः† क्षिप्ता । तुष्टं चातुर्वर्ण्यम् । कालान्तरे मरणासन्नैः[11] सूरिभिस्तस्याद्योगिनो बिभ्यद्भिः स्वकीयाखण्डकपालस्य सर्वसिद्धिहेतोर्भञ्जनं श्रावकाग्रे कथितम् । ‡अन्यथा विद्यासिद्धौ सङ्घोपद्रवं करिष्यति‡ । तथैव तैस्तदा चक्रे । योगी निराशश्चिरमरोदीत् ॥

॥ इति श्रीजीवदेवसूरिप्रबन्धः समाप्तः ॥ ३ ॥

---

## ४. अथार्यखपटाचार्यप्रबन्धः ।

§ १७) क्वापि गच्छेऽनेकातिशयलब्धिसम्पन्नाः श्रीआर्यखपटा[12] नाम आचार्यसम्राजः । तेषां शिष्यो भागिनेयो भुवनो नाम । ते सूरयो भृगुकच्छं विजहुः । तत्र बलमित्रो नाम बौद्धभक्तो राजा । बौद्धाश्च महाप्रामाणिकास्तादृग्यजमानगर्विताश्च दुर्दान्ताः । 'एकं वानरी, अपरं वृश्चिकेन जग्धा' इति न्यायात् ते[13] श्वेताम्बराणां धर्मस्थानेषु[14] तृणपूलकान्निक्षेपयन्ति । 'यूयं पशवः' इति भावः । तयो[15]ऽवज्ञया खपटाचार्या न चुक्रुधुः, गुरुत्वात् । यतः–

१३. उपद्रवत्सु क्षुद्रेषु न क्रुध्यन्ति[16] महाशयाः । उत्फालैः शफरैः किं स्याल्लोलः कल्लोलिनीपतिः ॥ १ ॥

भुवनस्तु चुकोप । श्रावकशतसहस्रसङ्कुलो राज्ञः पार्श्वं ययौ । श्रीसङ्घ-गुर्वनुज्ञां गृहीत्वा तत्रोच्चैरुवाच–

१४. तावड्डिण्डिमघोषणां विदधतां तावत्प्रशंसन्तु च, स्वात्मानं प्रथयन्तु तावदतुलां रीढां च पूज्ये खलाः ।
यावत् प्राज्यघृतप्रतर्पितबृहद्भानुप्ररोहत्पृथु- ज्वालाजालकरालजल्पनिवहैर्नोत्तिष्ठतेऽयं जनः ॥ २ ॥

राज्ञा बलमित्रेणोक्तम्–साधो ! किं किमात्थ ? । भुवनो बभाण–तव गुरवस्तार्किकंमन्या गेहेनर्दिनः श्वेताम्बरान्निन्दन्ति । ततो वयं वादाय त्वत्सदः सम्प्राप्ताः[17] । आस्फालय तान्[18]मया सहैकदा, भवतु श्रोतॄणां कर्णकौतुकम् । ततो राज्ञा ते आहूताः । चतुरङ्गसभायां वादं

---

1 P महणीना० । 2 C पतन्ती । 3 P प्रतोल्यां मामधिष्ठात्रीं त्वं कुरु । 4 D यद्वा । 5 P ०पक्षं तत् तद्दत्त० । 6 DP ०द्वेषात् । 7 A भुवने । 8 B 'मय' नास्ति । † एतदन्तर्गता पंक्तिः पतिता B आदर्शे । 9 D तैरेव । 10 P सर्वमङ्गी० । 11 DP मरणासन्नैः । ‡ एतदन्तर्गतः पाठो नास्ति ABD आदर्शे । 12 BD खपुटा । 13 'ते' नास्ति P । 14 BC धर्मस्थाने । 15 P अनया । 16 BD क्षुभ्यन्ति; C कुप्यन्ति । 17 AB प्राप्ताः । 18 A तावत् मया ।

कारिताः। भुवनमुनिपञ्चाननतर्कचपेटाताडिताः फेरण्डा इव तूष्णीकाः समजनिषत। राजादिभिर्घोषितो जयः श्वेताम्बरशासनस्य। वर्तन्ते चैत्येषु महोत्सवाः। बौद्धास्तु हिमहत[1]पद्मवनाभा जाताः। तं बौद्धापमानं श्रुत्वा बौद्धाचार्यो गुडशस्त्रपुराद् वृद्धकराख्यो महातार्किको भृगुपुरमगात्। राजानमवोचत्–श्वेताम्बरैः सह मां[2] वादं कारापय। राज्ञा भुवनप्रज्ञास्फूर्जितेन[3] वारितोऽपि नास्थात्। वादेऽजित[4] एव सोऽपि भुवनेन जितः। न खलु यमो भूतानां ध्रायते[5]। जित्वा[6] सभ्याः प्रभाषिताः–भो! भो! शृणुत–

१५. यट्टङ्को दृषदो यदुष्णकिरणो ध्वान्तस्य यच्छीतगुः, शेफालीकुसुमोत्करस्य च दशाकर्षः पतङ्गस्य यत्।
अद्रेर्यत्कुलिशः प्रचण्डपवनो मेघस्य यद्यत्तरोः, पर्शुर्यत्करिणो हरिः प्रकुरुते तद्वादिनोऽसावहम्॥ ३॥

सभ्याश्च चमत्कृता उज्जुघुषुः–जयति धवलाम्बरशासनम्। वृद्धकरः †पुनरप[7]मानाशनितसोऽनशनं† कृत्वा[8] गुडशस्त्रपुरे वृद्धकराख्यो यक्ष उत्पन्नः। प्राग्वैरेण जैनानुपद्रवति, व्याधिवर्द्धन-भापन-धनहरणादिप्रकारैः। गुडशस्त्रपुरसङ्घेन आर्यखपटास्तद्विज्ञप्ताः[9] ‡तत्र गताः। तत्र च यक्षायतनं प्रविश्य यक्षस्य कर्णयोरुपानहौ बबन्धुः; वक्षसि पादौ ददुः। लोको मिलितः। राजा तत्रत्यः‡ तत्रागतः। राज्ञि तत्रागते आचार्याः श्वेतवस्त्रेण स्वं सर्वमङ्गमावृत्य तस्थुः। राजा यत्र यत्रोद्घाटयति, तत्र तत्र स्फिचा[10]विव दृश्येते। ततः क्रुद्धो राजा घातान्दापयति खपटाचार्यस्याङ्गे। ते घाताः शिरीषकोषादपि कोमलेष्वन्तःपुरीणामङ्गेषु लेगुः। उच्छलितोऽन्तःपुरे स्त्रीणां कोलाहलः–हा नाथ! रक्ष रक्ष, हा! हन्यामहे केनाप्यदृष्टेन, कथं जीविष्यामः?। राजा सूरिशक्तिचमत्कृतमनाः सूरीणां पदो[11]र्लग्नः–प्रसद्य मम सपरिजनस्य जीवितभिक्षां देहि; कृपालुस्त्वम्–इत्याद्युवाच। यक्षस्तु[12] स्वस्थानादुत्थायोपसूरि समागतो विनीतः पादसंवाहनां कुरुते। मम कीटिकामात्रस्योपरि वः कः कटकारम्भः–इति ब्रूते। मिलितो लोकः। आर्यखपटैर्यक्ष ऊचे। रे अधम! अस्मद्यूथ्यान्पराबुभूषसि?। पराभव, यद्यस्ति प्राभवम्!। यक्षः प्राह स्म–'हनूमति रक्षति सति शाकिन्यः पात्राणि कथं ग्रसन्ते?'। तव भृत्योऽस्मि। मा मां पीडय। तव सङ्घं बान्धववद्रक्षिताऽस्मि। राजादयः सर्वे चमत्कृताः सूरिभक्ता बभूवुः। सूरयः प्रासादान्निर्गत्य यदा बहिर्गतास्तदा यक्षः पाषाणमूर्तिः सहायातः। द्वे दृषदौ, द्वे दार्षदकुण्डिके, सूक्ष्मयक्षाः सहागुः। [13]नगरप्राकारद्वारायातेन सूरीन्द्रेण यक्षाद्या विसृष्टाः स्वस्थानमगुः। कुण्डिके तु पुरद्वारे सूरिणा स्थापिते, लोके ख्यातिनिमित्तम्। राजा प्रबोध्य सद्यः श्रावकः कृतः। स्वसौधं गतः। 'प्रभावनानर्तकीरङ्गाचार्य' इति स[14] सूरीन्द्रस्तत्र चातुर्वर्ण्येन वर्णयामासे। तदैव भृगुपुरात्साधू द्वावागतौ। ताभ्यां प्रभवः प्रोक्ताः–भगवन्! भृगुपुरादत्रागच्छद्भिर्भवद्भिर्या कपरिका गूढमधारि, सा क्षुल्लकेनैकेनावाच्यत। वाचयता आकृष्टिलब्धिर्लब्धा। तद्वशादिभ्यानां गृहेषु निष्पन्नां रसवतीमाकृष्यानीय भुङ्क्ते स्म। तथा कुर्वन् गच्छेन ज्ञातो निषिद्धो न निवर्तते, रसनेन्द्रियपरवशत्वात्। ततः सङ्घेन हक्कितः। [15]क्रुद्धो गत्वा बौद्धानां मिलितः। तदाचार्य इव जातः। बौद्धानां पात्राणि मठात्खेन गृहमेधिनां गृहेषु नयति। ततो भक्तपूर्णानि तानि खेनैव

---

1 A हिमहत, B हिमवत्, D तुहिनमहत। 2 P नास्ति 'मा'। 3 B स्फूर्त्तितेन, P स्फूर्तिज्ञेन। 4 BD वादिजित। 5 P ध्रीयते। 6 P नास्ति। 7 P वृद्धकरोऽपमाना०। † एतद्वृत्त· पाठो नास्ति A आदर्शे। 8 A मृत्वा। 9 B विज्ञा.। ‡ एतदन्तर्गता पक्ति पतिता D आदर्शे। 10 BD स्फिजा०। 11 P पादौ। 12 'तु' नास्ति AB। 13 BD पुरमा०। 14 नास्ति 'स' P। 15 DP क्रुद्धा।

मठमायान्ति । तथा दृष्ट्वा लोको बौद्धभक्तो भवन्नास्ते । यदुचितं तत्कुरुध्वम् । तदवधार्यार्य[1]खपट-देवा भृगुपुरमगुः । प्रच्छन्नाः स्थिताः । बौद्धानां पात्राणि अन्नपूर्णान्यागच्छन्ति । शिलाविकुर्वणेन खे बभञ्जुः[2] । पतन्ति पात्रेभ्यः शालि-मण्डक-मोदकाद्यंशाश्च लोकस्य मस्तकेषु । चेल्लकः सूरीणां समागमनं सम्भाव्य भीतो नष्टो वराकः । सूरयः ससङ्घा बौद्धानां प्रासादमगमन् । बुद्ध उपल-मूर्तिः सम्मुख उत्थितः । जय जय महर्षिकुलशेखर !–इत्यादि स्तुतीरतनिष्ट । पुनर्जिनपति-शासनस्य प्रभावः [3]प्रोद्दिदीपे । आर्यखपटा अन्यत्र विजहुः ।

§ १६) इतश्च पाटलीपुत्र[4]पत्तने दाहडो नाम नृपो विप्रभक्तो जैनयतीनाह्वयत्, अवोचच्च–विप्रान्नमस्कुरुत इति । जैनैरुक्तम्–राजन् ! नेदं युक्तम्, गृहिणोऽमी, वयं च यतयो वन्द्याः । दाहडेनोक्तम्–न वन्दध्वे चेच्छिरांसि वः कृन्तामि । जैनयतिभिः सप्तदिनी याचिता । राज्ञा दत्ता । दैवादार्यखपटशिष्य उपाध्यायो महेन्द्रनामा भृगुकच्छात्तत्रायातः । तदग्रे यतिभिः स्वदुःखं कथितम् । तेन सन्धीरितास्ते । प्रातः करवीरकम्बे द्वे रक्तश्वेते लात्वा महेन्द्र उपदाहड-मगात् । तद[5]ऽष्टमदिनप्रत्यूषं वर्त्तते । राज्ञोक्तम्–श्वेताम्बरा विप्रप्रणामायाह्वयन्ताम्[6] । आहूताः; अग्रे ऊर्द्ध्वास्तस्थुः । महेन्द्रेण रक्तां कम्बां वाहयित्वा राजा भाषितः–किं प्रथममितो नमामः, [7]किं वा इतो नमामः ? इति । एतद्भणनसमकालमेव विप्राणां मस्तकास्त्रुटित्वा ताडफलवद्भूमौ पेतुः । तद् दृष्ट्वा भीतो राजा चाटूनि करोति स्म–पुनर्नैवमविनयमाचरिष्यामि–इति उवाच । तदा महेन्द्रेण [8]पठितम्–

१६. कः कण्ठीरवकण्ठके[9]सरसटाभारं स्पृशत्यंह्रिणा ?, कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ? ।
कः संनिह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये ?, यः श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ ४ ॥

विशेषतो भीतो नृपो दर्शनस्य पादेष्वलगीत् । तदा महेन्द्रेण धवला करवीरकम्बा दिग्[10]द्वयेऽपि वाहिता । पुनर्विप्राणां मस्तकाः स्वस्थानेषु ससञ्जुः । प्रतिबोधितो राजा विप्रलोकश्च । एवं प्रभा-वनाऽभूत् । [*भुवनोऽपि बौद्धान्परिहृत्य स्वगुरूणां मीलितः । तेन स्वगुरवः क्षामिताः । तैर्गुरुभि-स्तस्य भुवनस्य बहुमानं दत्तम् । पश्चाद्भुवनो गुणवान्, विनयवान्, चारित्रवान्, श्रुतवान्, जातः ततः ] आर्यखपटाः सूरिपदं भुवनाय दत्त्वाऽनशनेन द्यामारुरुहुः ।

१७. जीवितव्यं च मृत्युश्च द्वयमाराधयन्ति ये । त एव पुरुषाः शेषः पशुरेष जनः पुनः ॥ ५ ॥

॥ इति महाप्रभावकश्रीखपटाचार्यप्रबन्धः ॥ ४ ॥

## ५. अथ पादलिप्ताचार्यप्रबन्धः ।

§ १७) कोशलानाम नगरी तत्र विजयवर्मा राजा नयविक्रमसागरः । फुल्लनामा श्रेष्ठी जैनः प्राज्ञो दानभटः । तस्य प्रतिमाणा नाम पत्नी रूपशीलसत्यनिधिवसुधा । सा निष्पुत्रत्वेन खिद्यते । केनाप्युक्तम्–वैरोट्यां देवीमाराधय । तपोनियमसंयमैस्तयाऽऽराधिता सा प्रत्यक्षीबभूव;

---

1 AB 'आर्य' नास्ति । 2 A बभंज्जुः । 3 BD प्राद्दिदीपे; P प्रदिदीपे । 4 AB ०पुरे पत्तने, D पुत्रे पत्तने । 5 BP तदाष्टम० । 6 A आह्वयन्ताम् । 7 BD नास्तीद द्वितीयं वाक्यम् । 8 P महेन्द्रेणोक्तम् । 9 A केसरि० । 10 AB 'दिग्' नास्ति । * एषः कोष्ठकगतः पाठः P विनाऽन्यत्र नोपलभ्यते ।

अभिदधौ च–वत्से! किमर्थं स्मृताऽहम्? । श्रेष्ठिन्योक्तम्–पुत्रार्थम्। वैरोट्ययोक्तम्–वत्से! शृणु, विद्याधरवंशे श्रीकालिकाचार्योऽभूत्। तस्य विद्याधरो नाम गच्छः। तत्र आर्यनागहस्ती[1] नाम सूरिरास्ते। स सम्प्रति इमां नगरीमागतोऽस्ति । क्रियाज्ञानार्णवः, तस्य पादोदकं पिब। तत्र श्रेष्ठिनी भावनाभरभरिता गता। करस्थगुरुपदप्रक्षालनजलपात्रः शिष्यकः सम्मुखमा-
5 गच्छन् दृष्टः। श्रेष्ठिन्या पृष्टम्–तपोधन! किमेतत्? । शिष्यकेणोक्तम्–गुरूणां पादोदकम्। तया पीतम्। अथ गुरवोऽवन्दिषत। गुरवः प्राहुः–यन्मत्तो दशकरान्तरस्थया त्वयाऽम्भः पीतं तत्ते पुत्रस्त्वत्तो दशयोजनान्तरितः स्थाता। ततः[2] पश्चादन्ये नव पुत्रा भवितारः सारश्रियः। सा चम्पककुसुम[3]मकरन्दपानमत्तमधुपध्वनिकोमलया गिरा बभाषे–आद्यः पुत्रो युष्मभ्यं दातव्यो मया–इत्युक्त्वा निजसदनमगमत्। भर्त्रे गुरूक्तं स्वोक्तं चाचकथत्[4]। तुष्टः सः। श्रेष्ठिनी
10 काले नागेन्द्रस्वप्नसप्रभावं पुत्रं प्रासूत। [5]माङ्गल्योत्सवाः प्रसरन्ति स्म। गुरुसत्कः सन् वर्द्धते। नागेन्द्र इति नाम तस्य। शरीरावयवैर्गुणैश्च सकललोककमनीयै[6]र्ववृधे। गुरुभिरागत्याष्टमे वर्षे दीक्षितः। मण्डनाभिधस्य मुनेः पार्श्वे पाठितः। [7]बाल्येऽपि सर्वविद्यो जातः।

§१८) एकदा गुरुणा जलार्थं प्रस्थापितो[8] विहृत्यागत आलोचयति–

१८. अंबं तंबच्छीए अपुप्फियं पुप्फदंतपंतीए। नवसालिकंजियं नववहूइ कुडएण मे दिन्नम्॥ १॥

15 इति गाथया गुरुभिर्भणितम्–'पलित्तओ'–शृङ्गारगर्भभणितिश्रवणात्–किल त्वं विनेयक! रागाग्निना प्रदीप्त इति भावः। नागेन्द्रेणाचक्षे–भगवन्! मात्रया एकया प्रसादः क्रियताम्, यथा 'पालित्तओ' इति रूपं भवति। अत्र को भावः?–गगनगमनोपायभूतां पादलेपविद्यां मे दत्त येनाहं 'पादलिप्तक' इत्यभिधीये। ततो गुरुभिः पादलेपविद्या दत्ता। तद्वशात्खे भ्रमति। दशवर्षदेशीयः सन् सूरिपदे स्थापितः। बहुशिष्यपरिकरितो[9] भ्रमति। नित्यं शत्रुञ्जयोज्जयन्तादि-
20 पञ्चतीर्थीं वन्दित्वाऽरसविरसमश्नाति। तपस्तप्यते।

१९. यद्दूरं यद्दुराराध्यं यच्च दूरे प्रतिष्ठितम्[10]। तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्॥ २॥

ततः सर्वसिद्धयः।

§१९) एकदा पाटलीपुत्रं गताः। तत्र मुरुण्डो[11] नाम खण्डितचण्डारिमुण्डो राजा। तस्य षण्मासान् [12]यावच्छिरोर्तिरुत्पन्नाऽऽस्ते[13]। मन्त्रतन्त्रौषधैर्न निवृत्ता। विशेषविदुरान्सूरीनागतान्
25 श्रुत्वा राज्ञा मन्त्रिणः प्रहिताः प्रोचुः–भगवन्! राजराजेन्द्रस्य शिरोर्तिर्निवर्त्यताम्, कीर्तिधर्मौ संचीयेताम्। ततः सूरीन्द्रो राजकुलं गत्वा मन्त्रशक्त्या क्षणमात्रेण शिरोर्तिमपहरति स्म। ततोऽद्यापि पठ्यते–

२०. जह जह पएसिणिं जाणुयंमि पालित्तओ भमाडेइ। तह तह से सिरवियणा पणस्सइ मुरुंडरायस्स॥ ३॥

प्रीतो राजा। संवृत्ता उत्सवाः। पादलिप्तसूरीणां[14] यशसा पवित्रितानि सप्तभुवनानि। राजा स्तौति–

30 २१. चेतः सार्द्रतरं वचः सुमधुरं[15] दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता[16] श्रुतं हृतमदं श्रीर्दीनदैन्यापहा। रूपं शीलयुतं मतिः श्रितनया स्वामित्वमुत्सेकिता, निर्मुक्तं प्रकटान्यहो नव सुधाकुण्डान्यमूत्युत्तमे॥ ४॥

---

1 A आचार्य०। 2 P नास्ति 'तत'। 3 'कुसुम' नास्ति P। 4 P चाकथयत्। 5 AB मङ्गलोत्सवाः। 6 AB स्पृहणीयै। 7 C बालो। 8 AP स्थापितो। 9 A परिवारितो विहरति। 10 AB व्यवस्थित। 11 BC मुरुण्डो। 12 'यावत्' नास्ति P। 13 नास्ति 'आस्ते' A। 14 P सूरिणा। 15 AB समधुरं। 16 ABD क्षान्तिकला।

§२०) एकदा सभायां नृपेणोक्तम्–राजकुले महान्विनयः । आचार्यैरभिहितम्–गुरुकुले महीयान्[1]विनयः । तत आचार्याः प्राहुः–यो वः परमभक्तो राजपुत्रोऽस्ति, स आहूयताम् । इदं च तस्मै कथ्यताम्–गत्वा[2] विलोकय गङ्गा किं पूर्ववाहिनी, किं वा पश्चिमवाहिनी ? इति । आहूतो राजपुत्रः, प्रहितश्च विलोकनाय । यत्र तत्र भ्रमित्वा समागतः । भापितो भूपालेन–विलोकिता गङ्गा ?; किं पूर्ववाहिनी, पश्चिमवाहिनी वा ? । अथ राजपुत्रः प्रचख्यौ–किमत्र विलोकनीयम्[3] ? बाला अपि विदन्ति–'गङ्गा पूर्ववाहिनी' । गत्वा च विलोकिता मया, पूर्ववाहिन्येवास्ते[4] । राजा श्रुत्वाऽस्थात् । सूरिभिः साधुः स्वस्तस्मै कर्मणे प्रहितस्तत्र गतः । दण्डकं प्रवाह्य व्यलोकत, पूर्ववाहिनी सुरवाहिनी । उपसूरि समागतोऽभापत–अहं गङ्गां पूर्ववाहिनीं पूर्वमश्रौपम्, गत्वाऽपश्यंश्च तथैवाज्ञासिषम् । तत्त्वं तु [5]स्वयं सद्गुरवो विदन्ति । एतच्च[6] राजपुत्र-यत्योश्चरितं राज-सूर्योः प्रच्छन्नचरैरुक्तम् । राज्ञा[7] मेने स्वयं–महीयान्[8] गुरुकुले विनयः । ततः पठ्यते–

२२. निवपुच्छिएण गुरुणा भणिओ गंगा कओमुही वहइ । संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥ ५ ॥

§२१) पाटलिपुत्रादथ सूरीन्द्रो लाटान् गतः[9] । तत्रैकस्मिन्पुरे बालैः सह क्रीडति । मुनयो गोचरचर्यार्थं गताः । तावता श्रावकाः प्रवन्दनार्थमायाताः । आकारं संवृत्योपविष्टः प्रभुः । श्राद्धेषु[10] गतेषु पुनरपवरकमध्यं गत्वा खेलति । तावता केऽपि वादिनः समायाताः । तैर्विजनं दृष्ट्वा 'कूकुडूकू' इति शब्दः कृतः[11] । सूरीन्द्रेण तु 'म्याउं' इति बिडालशब्दः कृतः । ततो दर्शनं दत्तम् । वादिनः पादयोः पेतुः प्रभोः[12] । अहो ! प्रत्युत्पन्नमतित्वम् ते, चिरं जय बालभारति ! । तत आरब्धा प्रभुणा तैः सह गोष्ठी । तेष्वेकेन पृष्टम्–

२३. पालित्तय ! कहसु फुडं सयलं महिमंडलं भमंतेण । दिट्ठं सुयं च कत्थ वि[13] चंदणरससीयलो अग्गी ॥ ६ ॥

प्रभुणाऽभाणि–

२४. अयसाभिओगसंदूमियस्स पुरिसस्स सुद्धहिययस्स । होइ वहंतस्स दुहं चंदणरससीयलो अग्गी ॥ ७ ॥

तुष्टास्ते वादिनः, तुष्टुवुः–साक्षादमरगुरुरेव त्वम्, धन्या ब्राह्मी, या ते वदने वसति ।

इतश्च ये पूर्वं ब्राह्मणाः खपटाचार्यगच्छीयेनोपाध्यायेन महेन्द्रेण भापिताः, ते बलात्केचित्प्रव्राजिताः । तेपां स्वजनाः पाटलिपुत्रपत्तने वसन्ति । पूर्ववैराज्जैनयतीनुपद्रवन्ति । सा[14] वार्ता प्रभुश्रीपादलिप्ताचार्यैः श्रुता । स्वयं ते गगनेन तत्र गताः, अभ्यधुश्च–रे ! मयि वीरे सति के नाम जैनजनमुपद्रवन्ति[15] ? । 'जर्जराऽपि यष्टिः स्थालीनां भञ्जनाय प्रभवत्येव' । ततस्ते काकनाशं नष्टाः । प्रभुः पुनर्भृगुपुरमगमत् । तत्रार्यखपटसम्प्रदायात्सकलाः कलाः प्रजग्राह । ढंकपर्वते नागार्जुनः प्रभुणा खगमनविद्यां शिक्षापितः परमार्हतोऽजनि । तेन पादलिप्तकपुरं नव्यं कृतम्, दशार्हमण्डपोग्रसेनभवनादि च तत् तत् । तत्र प्रभुणा गाथायुगलेन स्तवनं बद्धम् । तत्र हेमसिद्धिविद्याऽवतारिताऽस्तीति[16] वृद्धाः प्राहुः । नागार्जुनेन च रसः प्रारब्धः । सोऽतिकृच्छ्रेऽपि कृते न बन्धमायाति । ततो वासुकिनागस्तेनाराद्धः । तेन श्रीपादलिप्तेन चोपायोऽर्पितः[17]–यदि कान्तीपुर्याः [18]श्रीपार्श्वनाथमानीय तदृष्टौ रसं बध्नासि, तदा बन्धमायाति,[19] नन्यथा । नागार्जुनेन पृष्टम्–

---

1 AB महान् । 2 CD यात्वा । 3 C विलोक्यम् । 4 ABD अस्ति । 5 P 'स्वयं' नास्ति । 6 AB नास्ति 'एतच्च' । 7 PD राजा । 8 ABD वंहीयान् । 9 A लाटानामागतः । 10 AB श्रावकेषु । 11 A प्रोक्तः । 12 'प्रभो.' नास्ति A । 13 AB कत्थइ । 14 P सा च । 15 AD दुदंति । 16 A ०तारिता तां ते वृद्धाः । 17 A दर्शितः । 18 ABD 'श्री' नास्ति । 19 A आयास्यति ।

कथमेति श्रीपार्श्वनाथः ? । वासुकिना पादलिप्तेन च प्रोक्तम्–उत्पाट्यानय गगनाध्वना । गतो नागार्जुनः कान्तीम् । तत्र चैत्यं पृच्छति । तत्र धनपतिश्रेष्ठी चैत्यगोष्ठिकः । तस्याग्रे नैमित्तिकेन प्रोक्तम्–पार्श्वं रक्षेः; धूर्त्त एकस्तद्धरणाय भ्रमन्नस्ति । स[1] सचतुष्पुत्रो देवं रक्षति । नागार्जुनस्तत्र गतः । तेषु रक्षत्सु हरणावसरो नास्ति । तैरेव सह नागार्जुनेन प्रीतिरारेभे । 5 विश्वास उत्पन्नः । आरात्रिकमङ्गलदीपकसमये[2] पितृ[3]पुत्रेषु प्रणामाधोमुखेषु पार्श्वं खेन गृहित्वा गतो नागार्जुनः । सेडीसंज्ञनदीतटे श्रीपार्श्वदृष्टौ रसः स्तम्भितः, स्तम्भनकं नाम तत्तीर्थं पप्रथे, स्तम्भनपुरं नाम पुरं च ।

§ २२) अथ श्रीपादलिप्ताचार्याः प्रतिष्ठानपुरं दक्षिणाशामुखभूषणं गोदावरीनदीतरङ्गरङ्गज्जलकणहृतपान्थश्रमभरं जग्मुः । तत्र सातवाहनो राजा विदुषां योधानां दानशौण्डानां 10 भोगिनां च प्रथमः । तस्य सभायां वार्त्ताऽभूत्, यथा–पादलिप्ताचार्याः सर्वविद्यावनितावदनरत्नदर्पणाः समागच्छन्तः सन्ति प्रातः । ततः सर्वैः पण्डितैः सम्भूय स्त्यानघृतभृतं कच्चोलकमर्पयित्वा निजः पुरुष एक आचार्याणां सम्मुखः प्रेषितः । आचार्यैर्घृतमध्ये सूच्येका क्षिप्ता; तथैव च प्रतिप्रेषितं तत्[4] । राज्ञा स वृत्तान्तो ज्ञातः । पण्डिताः पृष्टाः–घृत[5]पूर्णकच्चोलकप्रेषणेन[6] वः को भावः । तैरुक्तम्–एवमेतन्नगरं विदुषां[7] पूर्णमास्ते, यथा घृतस्य वर्तुलकम्; तस्माद्विमृश्य प्रवेष्टव्यम्– 15 इति भावो नः । राज्ञा निगदितम्–तर्हि आचार्यचेष्टाऽपि भवद्भिर्ज्ञायताम्–यथा निरन्तरेऽपि घृते निजतिक्ष्णतया सूची प्रविष्टा, तथाऽहमपि विद्वन्निबिडे नगरे प्रवेक्ष्यामि–इति दध्वनुः । पण्डिताः सर्वे[8] राजेन्द्रोऽपि संमुखं गताः[9] । सुरसरिल्लहरिहारिण्या वाण्या तुष्टुवुः[10] । नगरमानीतो गुरुः । निर्वाणकलिका-प्रश्नप्रकाशादिशास्त्राणि सन्ददर्भे । एकां च तरङ्गलोलां नाम चम्पूं राज्ञोऽग्रे नवां निर्माय सदसि व्याचख्ये प्रभुः । तुष्टो[11] राजा । भवत्ययं कवीन्द्रः ।

20 २५. शाणोत्तीर्णमिवोज्ज्वलद्युति पदं बन्धोऽर्द्धनारीश्वरः, श्लाघालङ्घनजाङ्घिको दिवि लतोद्भिन्नेव चार्थाद्गतिः ।
ईषच्चूर्णितचन्द्रमण्डलगलत्पीयूषहृद्यो रस- स्तत्किञ्चित्कविकर्ममर्म न पुनर्वाग्डिण्डिमाडम्बरः ॥ ८ ॥

इत्येवं कवयोऽपि तुष्टुवुः । एका तु वेश्या विदुषी राजसभ्या गुणज्ञाऽपि सूरीन्द्रान्न स्तौति । ततो राज्ञा भणितम्–वयं सर्वे तुष्टाः, स्तुमः सर्वे[12]; केवलमियमेका न स्तौति । तत्क्रियतां येन स्तुते । तदाकर्ण्य सूरयो वसतिमाययुः । रात्रौ गच्छसम्मत्या कपटमृत्युना मृताः, पवनजयसाम- 25 र्थ्यात् । [ विद्याबलात्[13] ] शबयानमाश्रितः[14] सूरिः । चातुर्वर्ण्यं रोदिति । वेश्यागृहद्वारे नीतं शबयानम् । वेश्याऽपि तत्रागता रुदती वदति[15]–

२६. सीसं कहवि न फुट्टं जमस्स पालित्तयं हरंतस्स । जस्स मुहनिज्झराओ तरङ्गलोला नई वूढा ॥ ९ ॥

पुनरजीवत्प्रभुः । वेश्ययाऽभाणि–मृत्वाऽऽत्माऽस्तावि ! । 'मृत्वाऽपि पञ्चमो गेयः' इति किं न श्रुतम् ? । अथ प्रभुः शत्रुञ्जये रदनसंख्योपवासानशनेन ईशानेन्द्रसामानिकत्वेनोदपद्यतेति ।

30 ॥ इति श्रीपादलिप्ताचार्यप्रबन्धः ॥ ५ ॥



1 'स' नास्ति AB । 2 A आरात्रिकप्रदीपमङ्गलसमये । 3 PB पितापु० । 4 A 'तत्' नास्ति, BD तत. । 5 AC सम्पूर्ण० । 6 CP प्रेषणे । 7 BP विदुषै । 8 P नास्ति सर्वे । 9 CD गत. । 10 BCP तुतुषु । 11 P नास्तीदं वाक्य । 12 P नास्ति । 13 A आदर्शे एवैतत्पद दृश्यते । 14 A आरोपित. । 15 A वक्ति ।

## ६. अथ श्रीवृद्धवादि-सिद्धसेनयोः प्रबन्धः ।

§ २३) विद्याधरेन्द्रगच्छे श्रीपादलिप्तसूरिसन्ताने स्कन्दिलाचार्याः साधितजैनकार्याः पुरस्कुरुः । ते यतनया विहरन्तो गौडदेशं ययुः । तत्र कोशलाख्यग्रामवासी मुकुन्दो नाम विप्रः । स तेषां सूरीणां मिलितः । इत्थं देशनामश्रौषीत्–

२७. भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं, दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम् ।
स्नेहे वैरभयं नयेऽनयभयं काये कृतान्ताद्भयं, सर्वं नाम भयं भवे यदि परं वैराग्यमेवाभयम् ॥ १ ॥ 5

श्रुत्वा भवोद्विग्नश्चारित्रं गृहीत्वा गुरुभिः समं भृगुपुरं गतः । स मुकुन्दमुनिस्तारस्वरेणाधीते । रात्रौ साधूनां निद्राभङ्गो भवति । ततस्तान् दुर्मनायमानान् ज्ञात्वा गुरुभिः पठन्निषिद्धोऽसौ । यथा–वत्स ! नमस्कारान् गुणय । रात्रावुच्चैर्भाषणे हिंस्रजीवजागरणादनर्थदण्डो मा भूदिति । ततो दिवापठने श्रावक-श्राविकादीनां कर्णज्वरो भवति । केनाप्युक्तम्–किमयमियद्वयाः पठित्वा मुशलं पुष्पापयिष्यति ? । तच्छ्रुत्वा मुकुन्दः खिन्नः । सद्यो महाविद्यार्थी एकविंशत्योपवासैर्जिनालये ब्राह्मीमाराराध । तुष्टा सा प्रत्यक्षीभूय जगाद–सर्वविद्यासिद्धो भव । ततः कवीन्द्रीभूय[1] स्वगुर्वन्तिकमागत्य सङ्घसमक्षमक्षामस्वरेण बभाण–यन्ममोपहासः केनापि कृतः–'यदयं किं मुशलं पुष्पापयिष्यति ?' विलोकयत लोकाः ! मुशलं पुष्पापयामि । इत्युक्त्वा मुशलमानाय्य चतुष्पथे स्थित्वा तत्पुष्पापयामास, मन्त्रशक्तिमाहात्म्यात् । स्कन्धस्थितेन[2] तेन भ्रमति पठति च– 10 15

२८. पत्तमवलंबियं तह जो जंपइ फुल्लए न मुसलमिह । तमहं निराकरित्ता फुल्लइ मुसलं ति ठावेमि[3] ॥ २ ॥

तथा–

२९. मद्रोः[4] शृङ्गं शक्रयष्टिप्रमाणं शीतो वह्निर्मारुतो निष्प्रकम्पः ।
यस्मै यद्वा रोचते तन्न किञ्चित् वृद्धो वादी भाषते कः किमाह ॥ ३ ॥ 20

अप्रतिमल्लो वादी सोऽभूत् । स्कन्दिलाचार्यैः स्वपदे निवेशितः । 'वृद्धवादी' इति ख्यातं तन्नाम । स्कन्दिलाचार्याः समाधिमृत्युरथेन द्यामगमन् ।

§ २४) एकदा वृद्धवादी भृगुपुरं गच्छन्नास्ते। इतश्चावन्त्यां विक्रमादित्यो राजा । यस्य दानानि–

३०. अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः, पञ्चाशन्मदगन्धलुब्धमधुपक्रोधोद्धुराः सिन्धुराः ।
लावण्योपचयप्रपञ्चितदृशां पण्याङ्गनानां[5] शतं, दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालिकस्यार्प्यताम्[6] ॥ ४ ॥ 25

इत्यादीनि ख्यातानि । तस्य राज्ये मान्यः कात्यायनगोत्रावतंसो देवर्षिर्द्विजः । तत्पत्नी देवसिका । तयोः सिद्धसेनो नाम पुत्रः । स प्रज्ञाबलेन जगदपि तृणवद्गणयति; प्रज्ञायाश्च इयत्ता नास्ति । जगति ततः पठ्यते–

३१. मिता भूः पत्यापां स च पतिरपां योजनशतं, सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः, सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ५ ॥ 30

येन वादे जीये तस्याहं शिष्यः स्याम्–इति प्रतिज्ञा तस्य । क्रमेण वृद्धवादिनः कीर्तिं श्रुत्वा स

---

1 BC कवीन्द्रो भूत्वा । 2 AB स्कन्धस्थाने । 3 P वाचेमि । 4 AP मद्रोश्च० । 5 A वाराङ्गनानां । 6 A वैतालिकायार्पितं, C ०स्यार्पितम् ।

तत्सम्मुखं धावति स्म। सुखासनारूढो भृगुपुरं गतः। तावद्भृगुकच्छान्निर्गतो वृद्धवादी मार्गे मिलितः। परस्परमालापः[जातः[1]]। सिद्धसेनो भाषते–वादं देहि। सूरिराह–दद्मः, परमत्र के सभ्याः?। सभ्यान् विना वादे जिताजिते[2] को वदेत्?। सिद्धसेनेनोक्तम्–एते गोपालकाः सभ्या भवन्तु। वृद्धवादिना भणितम्–तर्हि ब्रूहि। ततः सिद्धसेनस्तत्र नगरगोचरे चिरं संस्कृतेन
5 जल्पमनल्पम्[3]करोत्। क्रमेण [4]च स्थितः। गोपैरुक्तम्–किमप्ययं न वेत्ति। केवलमुच्चैः पूत्कारं पूत्कारं कर्णौ नः पीडयति। धिग् धिग्। वृद्ध! त्वं ब्रूहि किञ्चित्। ततो वृद्धवादी कालज्ञः कच्छां दृढं बद्ध्वा घीन्दिणि[5]च्छन्दसा क्रीडति–

३२. नवि मारियइ नवि चोरियइ परदारह गमणु निवारियइ। थोवाथोवं[6] दाइयइ[7] सग्गि टुकुटुकु[8] जाइयइ॥ ६॥

३३. [*गुलसिउं चावइं तिलतांदली वेडिइं वजावइं वांसली।
10 पहिरणि ओढणि हुइ कांवली इणपरि ग्वालइ पूजइ रुली॥ ७॥]

पुनः पठति नृत्यति च–

३४. कालउ कंबलु अनुनी चाटु[9] छासिहिं खालडु भरिउ नि पाटु[10]।
अइवडु[11] पडियउ नीलइ झाडि[12] अवर किसर गह सिंग[13] निलाडि॥ ८॥

गोपा हृष्टाः प्रोचुः–वृद्धवादी सर्वज्ञः। अहो! कीदृक् श्रुतिसुखमुपयोगि पठति। सिद्ध-
15 सेनस्तु असारपाठकः–इत्यनिन्दन्। ततः सिद्धसेनः प्राह–भगवन्! मां प्रव्राजय। तव शिष्योऽहं [भवामि[14]] वादे सभ्यसम्मतं जितत्वात्। अथ वृद्धवादी आह–भृगुपुरे राजसभायामावयोर्वादोऽस्तु। गोपसभायां को वादः?। सिद्धसेनेनोक्तम्–अहमकालज्ञः। त्वं [तु[15]] कालज्ञः। यः कालज्ञः स सर्वज्ञः। त्वयैव जितम्। इत्येवं वदन्तं तं तत्रैव दीक्षयामास। तत्र भृगुपुरनरेन्द्रेण तं वृत्तान्तं ज्ञात्वा तालारसो[16] नाम ग्रामः स्थापितः प्रौढः। नाभेयचैत्यं कारितम्। नाभेयबिम्बं
20 वृद्धवादिना प्रतिष्ठितम्। सङ्घो जगर्ज। सिद्धसेनस्य दीक्षाकाले 'कुमुदचन्द्र' इति नामासीत्। सूरिपदे पुनः 'सिद्धसेनदिवाकर' इति नाम पप्रथे। तदा 'दिवाकर' इति सूरेः संज्ञा। स्वामिशब्दवद्, [17]वाचकशब्दवच्च। वृद्धवादी अन्यत्र विहरति। सिद्धसेनस्त्ववन्तीं ययौ। सङ्घः सम्मुखमागत्य तं सूरिं 'सर्वज्ञपुत्रक' इति बिरुदे पठ्यमानेऽवन्तीचतुष्पथं नयति। तदा राजा विक्रमादित्यो हस्तिस्कन्धारूढः सम्मुखमागच्छन्नस्ति। राज्ञा श्रुतम्–'सर्वज्ञपुत्रक' इति। तत्परीक्षार्थं
25 हस्तिस्थ एव मनसा सूरेर्नमस्कारं चकार, न वाक्-शिरोभ्याम्। सूरिश्चासन्नायातो धर्मलाभं बभाण। राजेन्द्रेण भणितम्–अवन्दमानेभ्योऽस्माकं को धर्मलाभः?। किमयं समर्घो लभ्यमानोऽस्ति?। सूरिसुत्राम्णा[18]ऽभाणि–चिन्तामणिकोटितोऽप्यधिकोऽयं वन्दमानाय देयः। न च त्वया न वन्दिता वयम्, मनसः सर्वप्रधानत्वात्। अस्मत्सार्वज्ञपरीक्षायै हि मनसाऽस्मानवन्दथाः। ततस्तुष्टो राजेश्वरो हस्तिस्कन्धादवरुह्य सङ्घसमक्षं ववन्दे कनककोटिं चानाययत्।

---

1 केवल P आदर्शे दृश्यते। 2 A को जिताजितं वदेत्, B जिताजितं को वदेत्। 3 A 'अनल्पं' नास्ति। 4 ABD 'च' नास्ति। 5 B घीन्दण, C घींदिण, P घिन्दिणि। 6 B थोवाथोवडं। 7 P दावियइ। 8 CP टुगु टुगु। * P विहायैतत्पद्यमस्मदीयेष्वादर्शेषु नोपलभ्यते। 9 P वाटु, B वट्ट। 10 A छासिहिं भरिउ दीवढ पाटु, B ०दइअढ पट्ट। 11 B अडवड। 12 P डाढि। 13 A संगु। 14 केवलं A आदर्शे एष दृश्यते। 15 केवलं P आदर्शे लभ्यते। 16 B तालरसो। 17 'वाचकशब्दवत्' पतितं P आदर्शे। 18 P सूरि श्रुत्वा।

आचार्यैः सा न जगृहे, निर्लोभत्वात्। राज्ञाऽपि न जगृहे, कल्पितत्वात्। तत आचार्यानुज्ञया सङ्घपुरुषैर्जीर्णोद्धारे व्ययिता। राजवहिकायां त्वेवं लिखितम्–

३५. धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये। सूरये सिद्धसेनाय ददौ कोटिं धराधिपः॥ ९॥

श्रीविक्रमाग्रे अवसरे तेनैव भगवता भणितम्–

३६. पुन्ने वाससहस्से सयमि वरिसाण नवनवइकलिए। होही कुमरनरिन्दो तुह विक्कमराय! सारिच्छो॥ १०॥ 5

§२५) अन्यदा सिद्धसेनश्चित्रकूटमटति स्म। तत्र चिरन्तनचैत्ये स्तम्भमेकं महान्तं दृष्ट्वा कश्चिदप्राक्षीत्–कोऽयं स्तम्भो महान्?, किंमयः?। तेनोक्तम्–पूर्वाचार्यैरिह रहस्यविद्यापुस्तकानि न्यस्तानि सन्ति। स्तम्भस्तु तत्तदौषधद्रव्यमयः। जलादिभिरभेद्यो वज्रवत्। तद्वचनं श्रुत्वा सिद्धसेनस्तस्य स्तम्भस्य गन्धं गृहीत्वा प्रत्यौषधरसैस्तमाच्छोटयामास। तैः स प्रातरम्बुजवद्विचकास। मध्यात्पतिताः पुस्तकाः। तत्रैकं पुस्तकं छोटयित्वा वाचयन्नाद्यपत्र एव द्वे विद्ये 10 लभते स्म। एका सर्षपविद्या, अपरा हेमविद्या। तत्र सर्षपविद्या सा–ययोत्पन्ने कार्ये मान्त्रिको यावन्तः सर्षपान् जलाशये क्षिपति तावन्तोऽश्ववारा द्विचत्वारिंशदुपकरणसहिता निःसरन्ति। ततः परवलं भज्यते[1]। सुभटाः कार्यसिद्धेरनन्तरमदृश्यीभवन्ति। हेमविद्या पुनरक्लेशेन शुद्धहेमकोटीः[2] सद्यो निष्पादयति, येन तेन धातुना। तद्विद्याद्वयं सम्यग् जग्राह। यावदग्रे वाचयति तावत्स्तम्भो मिलितः पुस्तकगर्भः। खे च वागुत्पन्ना–अयोग्योऽसि ईदृशानां रहस्यानाम्, मा 15 चापलं कृथाः, सद्यो मा म्रियस्व–इति। ततो भीतः स्थितः। यद्विद्याद्वयं लब्धं तल्लब्धम्। नाधिकं लभ्यते, अप्रार्थितः। चित्रकूटात्सिद्धसेनोऽथ पूर्वदेशे कूर्मारपुरं गतः। तत्र देवपालं राजानं प्रबोध्य नीलीरागजैनमकार्षीत्। तत्रास्थात्। नित्यमिष्टा[3] गोष्ठी वर्त्तते। कियानपि कालो जगाम। एकदा राज्ञा रह एत्य साश्रुणा विज्ञप्तम्–भगवन्! पापा वयम्; नेदृग्मधुरभवद्[4]गोष्ठीयोग्याः, येन सङ्कटे पतिताः स्म। सूरीन्द्रः पप्रच्छ–किं सङ्कटं वः?। राजा प्राह–सीमाल- 20 भूपालाः सम्भूय मद्राज्यं जिघृक्षव आयान्ति। सूरिराह–राजन्! मा स्म विह्वलो भूः। तवैव राज्यश्रीर्वशे यस्याहं सखा। राजा हृष्टः। परचक्रमायातम्। विद्याद्वयशक्त्या राजेन्द्रः समर्थो विहितः सूरिणा। भग्नं परवलम्। गृहीतं तत्सर्वस्वम्। वादितान्यातोद्यानि। ततो बाढं राजा सूरिभक्तः सम्पन्नः। सूरयः सगच्छा अपि क्रियाशैथिल्यमाटपत। यतः–

३७. चाटुकारगिरां गुम्फैः कटाक्षैर्मृगचक्षुषाम्। केलिकल्लोलितैः श्रीणां[5] भिद्यते कस्य नो मनः॥ ११॥ 25

३८. सुअइ[6] गुरू निच्चिंतो[7] सीसावि सुअंति तस्स अणुकमसो। ओसाहिज्जइ मुक्खो[8] हुड्डाहुड्डं[9] सुअंतेहिं॥१२॥

श्रावकाः पौषधशालायां प्रवेशमेव न लभन्ते।

३९. दगपाणं पुप्फफलं अणेसणिज्जं गिहत्थकिच्चाइं। अजया पडिसेवंती[10] जइवेसविडंबगा नवरं॥ १३॥

इति गाथा समाचार्यते। तदपयशः श्रुत्वा वृद्धवादी कृपया तं निस्तारयितुमेकाकीभूय गच्छं वृषभेषु न्यस्य तत्रागतः[11]। द्वारे स्थितः। सूरीणामग्रे कथापयति द्वास्थैः। यथा–वादी 30

---

1 C भक्ष्यते, D भक्ते। 2 P कोटीं। 3 AP ०मिष्टगोष्ठी। 4 BC 'भवद्' नास्ति। 5 AP स्त्रीणां। 6 AC सूयइ। 7 A निचंतो, C निचंतो, D निज्जंतो। 8 B मुक्खो। 9 AD हुड्डाहुड्डं। 10 BCD सेहंती। 11 P तत्र गतः।

एको ज्यायानायातोऽस्ति । मध्ये सूरिभिराहूतः । पुर उपवेशितः । वस्त्रावगुण्ठितसर्वकायो वृद्धवादी वदति । व्याख्याहि–

४०. अणफुल्लियं[1] फुल्ल म तोडहिं मा[2] रोवा मोडहिं । मणकुसुमेहिं अच्चि निरंजणु हिंडहि[3] कांइ[4] वणेण वणु ॥१४॥

सिद्धसेनश्चिन्तयन्नपि न वेत्त्यर्थम् । ततो ध्यायति–किमेते मे गुरवो वृद्धवादिनः? येषां भणितिमहमपि व्याख्यातुं न शक्नोमि । पुनः पुनः पश्यता उपलक्षिता गुरवः । पादयोः प्रणम्य क्षामिताः, पदार्थं पृष्टाः । तेऽथ व्याचक्षिरे । यथा–'अणफुल्लियफुल्ल०' प्राकृतस्यानन्तत्वात् अप्राप्तफलानि पुष्पाणि मा त्रोटय । को भावः ?–योगः कल्पद्रुमः । कथम् ?–यस्मिन्मूलं यमनियमाः, ध्यानं प्रकाण्डप्रायम्, स्कन्धश्रीः समता, कवित्व-वक्तृत्व-यशः-प्रताप-मारण-स्तम्भनोच्चाटन-वशीकरणादिसामर्थ्यानि पुष्पाणि, केवलज्ञानं फलम् । अद्यापि योगकल्पद्रुमस्य पुष्पाण्युद्गतानि सन्ति; तत्केवलफलेन तु पुरः फलिष्यन्ति । तान्यप्राप्तफलान्येव किमिति त्रोटयसि मा त्रोटय इति भावः । 'मा रोवा मोडहिं' इह रोपाः पञ्चमहाव्रतानि, तानि मा मोटय । मनःकुसुमैर्निरञ्जनं जिनं पूजय । वनाद्वनं किं हिंडसे–राजसेवादीनि कृच्छ्राणि विरसफलानि कथं करोषि; इति पदार्थः । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्यः पूर्वगतश्रुतानि लेभे । वृद्धवादी द्यां गतः ।

§ २६) एकदा सिद्धसेनः सङ्घं मेलयित्वाह स्म–सकलानप्यागमानहं संस्कृतान्[5] करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म–किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थकरा गणधरा वा । यदर्धमागधेनागमान्[6]अकृषत? । तदेवं जल्पतस्तव महत्प्रायश्चित्तमापन्नम् । किमेतत्तवाग्रे कथ्यते ?; स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ–सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं पाराञ्चिकं नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशे वर्षे श्रीमदुज्जयिन्यां महाकालप्रासादे शेफालिकाकुसुमरञ्जिताम्बरालङ्कृतशरीरः समागत्यासांचक्रे । ततः–देवं कथं न नमसि? इति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा विक्रमादित्यदेवः समागत्य जल्पयांचकार–क्षीरलिलिक्षो! भिक्षो[7]! किमिति त्वया देवो न वन्द्यते? । ततस्तु [राजानं प्रति[8]] इदमवादि वादिना–मया नमस्कृते देवे[9] लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे–भवतु, क्रियतां नमस्कारः । तेनोक्तम्–श्रूयतां तर्हि । ततः[10] पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि–

४१. स्वयम्भुवं भूतसहस्रनेत्रमनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोकमनादिमध्यान्तमपुण्यपापम् ॥ १५ ॥

इत्यादि [†श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । परं तस्मात्तादृक्षं चमत्कारमनालोक्य पश्चात् श्रीपार्श्वनाथद्वात्रिंशिकामभिकर्तुं कल्याणमन्दिरस्तवं चक्रे] प्रथमश्लोके एव प्रासादस्थितात् शिखिशिखाग्रादिव लिङ्गाद्धूमवर्त्तिरुदतिष्ठत् । ततो जनैर्वचनमिदमूचे–अष्टविद्येशाधीशः

---

1 AB अणहुल्लियं । 2 B मन मारोवा । 3 AC हिंडयं, P हिंडइ । 4 P नास्ति 'कांइ' । 5 B संस्कृतमयान् । 6 B मागधिना । 7 B नास्ति । 8 केवलं P पुस्तक एवैतत्पदं दृश्यते । 9 AP नास्ति 'देवे' । 10 P नास्ति । † एषः कोष्ठकान्तर्गत पाठ P पुस्तके एवोपलभ्यते नान्यत्र, प्रक्षिप्तप्राय एष. ।

कालाग्निरुद्रोऽयं भगवांस्तृतीयनेत्रानलेन भिक्षुं भस्मसात्करिष्यति । ततस्तडित्तेज इव सतड-त्कारं प्रथमं ज्योतिर्निर्गतम् । ततः श्रीपार्श्वनाथबिम्बं प्रकटीबभूव । तद्वादिना विविधस्तुतिभिः स्तुतं क्षमितं च । राजा विक्रमादित्यः पृच्छति–भगवन् ! किमिदमदृष्टपूर्वं[1] दृश्यते ?, कोऽयं नवीनो देवः प्रादुरभूत ? । अथ सिद्धसेनः प्रोवाच–राजन् ! पूर्वमस्यामेवावन्त्यां श्रेष्ठिनीभद्रासू-नुर्द्वात्रिंशत्पत्नीयौवनपरिमलसर्वस्वग्राही 'अवन्तीसुकुमाल' इति ख्यातः श्रेष्ठ्यासीत् । स शालि-भद्र इव गृहव्यापारं कमपि नाकार्षीत् । किन्तु मातैव सर्वामपि गृहतप्तिमकृत । एकदा दशपू-र्वधर आर्यसुहस्त्याख्यो मौर्यवंशमुकुटसम्प्रतिनृपगुरुः सगच्छो विहरन्नवन्तीमागत्य भद्रानुमत्या गृहैकदेशेऽस्थात् । रात्रौ ते नलिनीगुल्माख्यस्य स्वर्विमानस्य विचारं गुणयन्ति । तपोधनजने विश्रान्ते सति तं विचारं शृण्वन् सान्द्रचन्द्रातपायां निशि स्वैरं पद्भ्यां भ्रमन्नवन्तीसुकुमालस्त-त्रायातः सम्यगश्रौषीत् । आगत्य गुरून् जगौ–भगवन् ! किमेतद् गुण्यते ? । आर्यैरुक्तम्–वत्स ! नलिनीगुल्मविमान[2]विचारः । अवन्तीसुकुमालः प्राह स–ईदृशमेवेदं प्रेत्य मयाऽनुभूतम् । इदं केनोपायेन लभ्यते ? । आर्यैर्भणितम्–चारित्रेण । अवन्तीसुकुमालोऽप्याविभातात् गृही-तनलिनीगुल्मविमानग्रहणप्रतिज्ञः स्वयं कृतलोचः पश्चाद्गुरुभिरपि दत्तसामायिकः [3]कन्थार-कुडङ्गाख्यं[4] श्मशानमेत्य कायोत्सर्गी भवान्तरभार्यया शृङ्गालीत्वमापन्नया सार्भया क्षुधितया दर्भसूचीवेधक्षरत्तद्रुधिरधारागन्धलुब्धागतया भक्षितः, सद्भावनाजर्जरितपापकर्मा नलिनीगुल्म-माप । प्रातस्तन्माता सस्नुषा गुरुमुखादवगतपुत्रवृत्तान्ता तच्छ्मशानमागत्य विललाप विविधं विविधम् । पुनर्गृहमागता । एकां सगर्भां वधूं गृहे मुक्त्वा एकत्रिंशता वधूभिः सह संयममा-दाय दिवं लेभे । सगर्भस्थितवधूकाजातपुत्रेण स्फीतयौवनेनायं[5] प्रासादः कारितः । मम पितुर्महाकालोऽत्राभूदिति 'महाकाल'नाम दत्तम् । श्रीपार्श्वनाथबिम्बं[6] मध्ये स्थापितम् । कत्यप्यहानि लोकेन[7] पूजितम् । अवसरे द्विजैस्तदन्तरितं कृत्वा मृडलिङ्गमिदं स्थापितम् । अधुना मत्कृतस्तुतितुष्टः श्रीपार्श्वनाथः प्रादुरासीत् । मत्प्रेरितशासनदेवताबलात्तु मृडलिङ्गं विदध्रे । सत्यासत्ययोरन्तरं पश्य । तच्छ्रवणान्नृपः शासने ग्रामशतान्यदत्त देवाय । उपगुरु ससम्यक्त्वां द्वादशव्रतीमुपादत्त । अश्लाघत वादीन्द्रम्–

४२. अहयो बहवः सन्ति भेकभक्षणदक्षिणाः[8] । एक एव स शेषो[9] हि [10]धरित्रीधरणक्षमः ॥ १६ ॥

तथा त्वम् । अहो कवित्वशक्तिस्ते !

४३. पदं सपदि कस्य न स्फुरति शर्करापाकिमं, रसालरससेकिमं भणितिवैभवं कस्य न ।
तदेतदुभयं किमप्यमृतनिर्झरोद्गारिमै-स्तरङ्गयति यो रसैः स पुनरेक एव क्वचित् ॥ १७ ॥

४४. न नाम्ना नो[11] वृत्त्या परिचयवशाच्छन्दसि न वा, न शब्दव्युत्पत्त्या निभृतमुपदेशान्न च गुरोः ।
अपि त्वेताः स्वैरं जगति सुकवीनां मधुमुचो, विपच्यन्ते वाचः सुकृतपरिणामेन महता ॥ १८ ॥

इति स्तुत्वा सम्राट् स्वस्थानमयासीत् । वादीन्द्रोऽपि प्रभावनातुष्टेन सङ्घेन मध्येकृतः ।

§ २७) अन्येद्युः सिद्धसेनो विहरन् ॐकाराख्यं मालवेषु नगरं ययौ । तत्र भक्तैः श्रावकैर्विज्ञप्तं

---

1 P ०मिदमपूर्वं । 2 'विमान' नास्ति P । 3 B सन्थार, D कन्थाए । 4 CD कुडुङ्ग० । 5 B स्फीतवधुका यौवनेन । 6 BC श्रीपार्श्वविम्बं । 7 P लोके । 8 P भक्षणतत्पराः । 9 P श्रीशेषो । 10 P धरणी० । 11 P मा ।

सूरये। यथा–भगवन्! अस्यैव नगरस्यासन्नो ग्राम एक आसीत्। तत्र सुन्दरो नाम राजपुत्रो ग्रामणीः[1]। तस्य द्वे पत्न्यौ। एका प्रथमां पुत्रीं प्रासूत, अखिद्यत च। तदैव सपत्न्यप्यासन्नप्रसवा वर्तते। मा स्म इयं पुत्रं प्रसूय भर्तुः सविशेषं वल्लभा भूत्–इति स्त्रीत्वोचितया तुच्छया बुद्ध्या सूतिकामेकामवोंचत–यदा इयं मे सपत्नी प्रसवकाले दैववशात्त्वामाह्वयति, तदा त्वया परस्था-
5 नात्प्रथमं सङ्गृहीतं मृतं कञ्चिदपत्यं तत्र सञ्चार्यम्। तज्जातकं चेत्पुत्रो भवति तदा स्वयं गृहीत्वा ग्रामाद्दूरे व्युत्स्रष्टव्यम्। इदं हेम गृहाण–इति सूत्रणां चकुषी। विधिवशात्तत्र तत्तया तथैव कृतम्। राजपुत्रो जातमात्रो ग्रामाद्दूरे क्षिप्तो ही। स राजपुत्रः[2] पुण्याधिक इति तत्कुलदेवतया धेनुरूपेण दुग्धं दत्त्वा पालयन्त्याऽष्टवर्षदेशीयः कृतः। अत्रैव ॐकारनगरे शिवभवनाधिका-
रिणा भरटकेन दृष्टः, आलापितः, स्वां दीक्षां ग्राहितः। अन्यदा कन्यकुब्जदेशाधिपतिर्नरेन्द्रो
10 जात्यन्धो दिग्विजयकार्येण प्रत्यासन्नः समावासितः। रात्रौ लघुभरटकस्य शिवादेशः सञ्जातः–त्वया कन्यकुब्जेशाय शेषा देया। तयाऽसौ सज्जाक्षो भावी। तद्वाक्यं लघुर्वृद्धगुरवे समाख्याय तदाज्ञया शेषामादाय स्कन्धावारमध्यमेत्य राजामात्यानुवाच–भो! भो! स्वनाथमस्तसम्मुखमानयध्वम्। यथा सद्यः कमलदलललितं स्वविषयग्रहणक्षमाक्षं कुर्महे। ततोऽमात्य-
नुन्नो राजा तत्रायातः। ऋषिदत्तां शेषामादायाक्ष्णोर्निवेश्य सज्जाक्षो जातः। प्रीतः[3] भक्त्या
15 ग्रामशतानि शासनेऽदात्। अत्रैव च ॐकारे इममुत्तुङ्गं प्रासादमचीकरत्। वयमिह पुरे वसामः। जैनः प्रासादः कारयितुं न लभ्यते। मिथ्यादृशो बलिनः। तस्मात्तत्कुरु येन इतोऽधिकं तुङ्गं रम्यं चैत्यं निष्पद्यते। बली त्वमेवेति। तद्वचनं श्रुत्वा वादी अवन्तीमागत्य चतुःश्लोकीं हस्ते कृत्वा विक्रमादित्यद्वारमेत्य द्वास्थेनोपराजं श्लोकमचीकथत्। स तेन कथितो यथा–

४५. दिदृक्षुर्भिक्षुरायातस्तिष्ठति द्वारि वारितः[4]। हस्तन्यस्तचतुःश्लोक उतागच्छतु गच्छतु ॥ १९ ॥

20 तं श्लोकं श्रुत्वा विक्रमादित्येन प्रतिश्लोकः कथापितो यथा–

४६. दत्तानि दशलक्षाणि शासनानि चतुर्दश। हस्तन्यस्तचतुःश्लोक उतागच्छतु गच्छतु ॥ २० ॥

वादिना तं श्लोकं श्रुत्वा द्वास्थद्वारेण भाणितं राज्ञे[5]–दर्शनमेव भिक्षुरीहते नार्थम्। ततो राज्ञा स्वदृष्टो आहूतः। उपलक्षितो भाषितश्च–भगवन्! किमिति चिराद् दृश्यध्वे?। आचार्यैरुक्तम्–धर्मकार्यवशाच्चिरादायाताः। श्लोकचतुष्टयं शृणु। राज्ञि शृण्वति पठितं तत्। यथा–

25 ४७ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः। मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥ २१ ॥

४८. सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे। कीर्तिः किं कुपिता राजन्! येन देशान्तरं गता ॥ २२ ॥

४९. कीर्तिस्ते जातजाड्येव चतुरम्भोधिमज्जनात्। आतपाय धरानाथ! गता मार्त्तण्डमण्डलम् ॥ २३ ॥

५०. सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः। नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ २४ ॥

श्रुत्वा तुष्टो विक्रमश्चतुरो गजान् यथासंख्यं वसन-सुगन्धद्रव्य-हेमनाणक-हारादिपूर्णान्
30 आनाय्य सूरिमभाणीत्–इमे गृह्यन्ताम्। सूरिरूचे–नैतदर्थ्यहम्। पुनर्विक्रमो भणति–मन्महीसारभूतांश्चतुरो देशान् स्वैरमादत्स्व। वाद्याह–इदमपि नेच्छामि। तर्हि किमिच्छसीति?। श्रूयताम्–ॐकारे चतुर्द्वारं जैनप्रासादं शिवप्रासादादुच्चं कारय। स्वयं सपरिच्छदः

1 P राजपुत्राग्रणी। 2 P राजपुत्रोऽपि। 3 B नास्ति 'प्रीत'। 4 BCE द्वारि तिष्ठति वारित। 5 CD राज्ञः।

प्रतिष्ठां च तत्र कारयेति। राज्ञा तत्तथैव कृतम्। प्रभावनया सङ्घस्तुष्टः। एवं जैनं धर्मं द्योतयन् वादी दक्षिणस्यां पृथ्वीस्थानपुरं विहरन् गतः। तत्रायुरन्तं ज्ञात्वाऽनशनं लात्वा स्वर्गलोकमध्यवात्सीत्। तत्रत्यसङ्घेन चित्रकूटे सिद्धसेनगच्छं तं वृत्तान्तं ज्ञापयितुं वाग्मी भट्ट एकः प्रस्थापितः। स तत्सूरिसभायां श्लोकपूर्वार्द्धं पुनः पुनः पठति स्म यथा–

५१. स्फुरन्ति वादिखद्योताः साम्प्रतं दक्षिणापथे। 5

पुनः पुनः पाठे सिद्धसारस्वतया सिद्धसेनभगिन्योक्तम्–

नूनमस्तंगतो वादी सिद्धसेनो दिवाकरः ॥ २५ ॥

पश्चाद् भट्टेन प्रपञ्च्योक्तम्। ततः शोको विहितो विसृष्टश्च।

॥ इति वृद्धवादि-सिद्धसेनयोः प्रबन्धः[1] ॥ ६ ॥

## ७. अथ श्रीमल्लवादिप्रबन्धः। 10

§ २८) श्रीइन्द्रभूतिमानम्य प्रभावकशिरोमणेः।
श्रीमल्लवादिसूरीन्दोश्चरितं कीर्त्यते मया ॥ १ ॥

खेटाभिधं महास्थानमस्ति गूर्ज्जरमण्डले। देवादित्याह्वयस्तत्र विप्रोऽभूद्वेदपारगः ॥ २ ॥
सुभगाख्या सुता तस्य विधवा बालकालतः। कस्मादपि गुरोर्मन्त्रं सौरं सा प्राप भक्तिभाक् ॥ ३ ॥
आकृष्टस्तेन मन्त्रेण भास्करस्तामुपागमत्। तद्भोगलाभादापन्नसत्त्वा सा न चिरादभूत् ॥ ४ ॥ 15
वैक्रियेभ्यः सुराङ्गेभ्यो गर्भो यद्यपि नोद्भवेत्। तदानीं त्वौदारिकाङ्गधातुयोगात्तु सम्भवी ॥ ५ ॥
आपाण्डुगण्डफलकां ग्लानाङ्गीं वीक्ष्य तां पिता। बभाषे किमिदं वत्से! निन्द्यमाचरितं त्वया? ॥६॥
सा प्राह स्म पितर्नैयं प्रमादविकृतिर्मम। मन्त्राकृष्टागतोष्णांशुन्यासः पुनरयं बलात् ॥ ७ ॥
इत्युक्तोऽपि विषण्णात्मा देवादित्यः कुकर्मणा। तां पुत्रीं प्रेषयामास सभृत्यां वलभीं पुरीम् ॥८॥
कालेन तत्र साऽसूत पुत्रं पुत्रीं च सुद्युतम्। तत्रैवोवास सुचिरं जनकार्पितजीविका ॥ ९ ॥ 20
क्रमेण ववृधाते तौ पुत्रौ बालार्कतेजसौ। यावदष्टौ व्यतिक्रान्ता वत्सराः क्षणवत्तयोः ॥ १० ॥
तावदध्यापकस्यान्ते पठितुं तौ निवेशितौ। कलहेऽर्भं निष्पितृकमूचिरे लेखशालिकाः ॥ ११ ॥
तद्गिरा खिद्यमानोऽर्भः पप्रच्छ जननीं निजाम्। किं मातर्नास्ति मे तातो येन लोकोक्तिरीदृशी ॥१२॥
माता जगाद नो वेद्मि किं पीडयसि पृच्छया। ततः खिन्नः स सत्त्वाढ्यो मर्त्तुमैच्छद्विषादिभिः ॥१३॥
साक्षादागत्य तं भानुरूचेऽहं वत्स! ते पिता। पराभवकरो यस्ते तस्याहं प्राणहारकः ॥ १४ ॥ 25
इत्युक्त्वा कर्करं सूक्ष्मामेकं तस्य समार्पयत्। ताड्योऽनेन[2] त्वया[3] द्वेषी सद्यो मर्त्तेति चादिशत् ॥१५॥
तेन कर्करशस्त्रेण बालः स बलवत्तरः। विघ्नुवन्तं विघ्नुवन्तमवधील्लेखशालिकम्[4] ॥ १६ ॥
वलभीपुरभूपेन श्रुतो बालवधः स तु। कुपितस्तं शिशुं सद्यो जनैः स्वान्तिकमानयत् ॥ १७ ॥
उक्तश्च–रे! कथं हंसि नृशंस! शिशुकानमून्?। बालः प्रत्याह–न परं बालान्हन्मि नृपानपि ॥१८॥
इत्थं वदन् महीपालमहन् कर्करकेण तम्। मृतस्य तस्य साम्राज्ये स राजाऽजनि विक्रमी ॥ १९ ॥ 30

1 AC प्रबन्धौ। 2 PD तेन। 3 BC सदा। 4 B शालकम्।

§ २९) शिलादित्य इति ख्यातः सुराष्ट्राराष्ट्रभास्करः।
लेभे सूर्याद्वरं वाहं[1] परचक्रोपमर्दकम् ॥ २० ॥

निजां स्वसारं स ददौ भृगुक्षेत्रमहीभुजे। असूत सा सुतं दिव्यतेजसं[3] दिव्यलक्षणम् ॥ २१ ॥

शत्रुञ्जये गिरौ चैत्योद्धारमारचयच्च सः। श्रेणिकादिश्रावकाणां श्रेणावात्मानमानयत् ॥ २२ ॥

5 कदाचिदागतास्तत्र बौद्धास्तर्कमदोद्धुराः। ते शिलादित्यमगदन्–सन्ति श्वेताम्बरा इमे ॥ २३ ॥

वादे जयन्ति यद्यस्मांस्तदैते सन्तु नीवृति। वयं यदि जयामोऽमूंस्तदा गन्तव्यमेतकैः ॥ २४ ॥

दैवयोगाज्जितं बौद्धैः सर्वे श्वेतम्बराः पुनः। विदेशमाशिश्रियिरे पुनः कालबलार्थिनः ॥ २५ ॥

शिलादित्यनृपो बौद्धान् प्रपूजयति भक्तितः[4]। शत्रुञ्जये च ऋषभस्तैर्बुद्धीकृत्य पूजितः ॥ २६ ॥

§ ३०) इतश्च सा शिलादित्यभगिनी भर्तृमृत्युतः।
10 विरक्ता व्रतमादत्त सुस्थिताचार्यसन्निधौ ॥ २७ ॥

अष्टवर्षं निजं बालमपि व्रतमजिग्रहत्। सामाचारीमपि प्राज्ञं किञ्चित्किञ्चिदजिज्ञपत् ॥ २८ ॥

एकदा मातरं साध्वीं सोऽपृच्छदभिमानवान्।
अल्पः कथं नः सङ्घोऽयं प्रागप्यल्पोऽभवत्कथम् ॥ २९ ॥

साऽप्युदश्रुरभाषिष्ट–वत्स! किं वच्मि पापिनी। श्रीश्वेताम्बरसङ्घोऽभूद् भूयानपि पुरे पुरे ॥३०॥

15 तादृक्प्रभावनावीरसूरीन्द्राभावतः परैः। स्वसात्कृतः[5] शिलादित्यो भूपालो मातुलस्तव ॥ ३१ ॥

तीर्थं शत्रुञ्जयाह्वं यद्विदितं मोक्षकारणम्। श्वेताम्बराभावतस्तद्बौद्धैर्भूतैरिवाश्रितम् ॥ ३२ ॥

विदेशवासिनः श्वेताम्बराः खण्डितडम्बराः। क्षिपन्ति निहतौजस्काः[6] कालं क्वचन केचन ॥ ३३ ॥

इति श्रुत्वाऽकुपद्बालस्तथागतभटान् प्रति। प्रतिज्ञां च चकारोच्चैः प्रावृडम्भोधरध्वनिः ॥ ३४ ॥

नोन्मूलयामि चेद्बौद्धान् नदीरय इव द्रुमान्। तदा भवामि सर्वज्ञध्वंसपातकभाजनम् ॥ ३५ ॥

20 इत्युक्त्वाऽम्बां समापृच्छ्य बालः कालानलद्युतिः। मल्लनामा[7] गिरिं गत्वा तेपे तीव्रतरं तपः ॥३६॥

आसन्नग्रामभैक्षेण पारणं च चकार सः। दिनैः कतिपयैस्तत्र जज्ञौ शासनदेवता ॥ ३७ ॥

भूत्वा व्योमनि साऽवादीत्–केमिष्टाः?, सोऽपि बालकः।
तच्छ्रुत्वाऽऽख्यत्सानुभवं 'वल्ला' इति स्वदत्तदृक् ॥ ३८ ॥

षण्मास्यन्ते पुनः सोचे स्वस्था 'केन सह' त्यथ?। बालर्षिरप्यभाषिष्ट 'समं घृतगुडैः शुभैः' ॥३९॥

25 अवधारणशक्त्या तं योग्यं शासनदेवता। प्रत्यक्षा न्यगदद्वत्स! भूयाः परमतापहः ॥ ४० ॥

नयचक्रस्य तर्कस्य पुस्तकं लाहि मानद!। वाणी सेत्स्यति ते सम्यक् कुतर्कोरगजाङ्गुली ॥ ४१ ॥

भूमौ मुमोच तं तर्कपुस्तकं बालको मुनिः। प्रमादः सुलभस्तत्र वयोलीलाविशेषतः ॥ ४२ ॥

रुष्टा शासनदेव्यूचे विहिताशातना त्वया। सान्निध्यं ते विधाताऽस्मि प्रत्यक्षीभविता न तु ॥४३॥

तं लब्ध्वा पुस्तकं मल्लवादी देदीप्यते स्म सः। शास्त्रं पाशुपतमिव मध्यमः पाण्डुनन्दनः ॥ ४४ ॥

30 आगत्य वलभीद्रङ्गं सुराष्ट्राराष्ट्रभूषणम्। शिलादित्यं युगप्रान्तादित्यद्युतिरुवाच सः ॥ ४५ ॥

---

1 A राष्ट्रे। 2 CD वाडं। 3 A नास्ति पदमेतत्। 4 A भक्त.। 5 B स्वसात्कृत्य। 6 AP निहितौ०। 7 A मल्लनाम।

बौद्धैर्मुधा जगज्जग्धं प्रतिमल्लोऽहमुत्थितः । अप्रमादी[1] मल्लवादी त्वदीयो भगिनीसुतः ॥ ४६ ॥
शिलादित्यनृपोपान्ते बौद्धाचार्येण वाग्मिना । वादिवृन्दारकश्चक्रे तर्कबर्करं[2]मुल्बणम् ॥ ४७ ॥
मल्लवादिनि जल्पाके नयचक्र[3]बलोल्बणे । हृदये हारयामास षण्मासान्ते स शाक्यराट् ॥ ४८ ॥
षण्मासान्तनिशायां स स्वं निशान्तमुपेयिवान् । तर्कपुस्तकमाकृष्य कोशात्किञ्चिद्वाचयत् ॥४९॥
चिन्ताचक्रहते चित्ते नार्थांस्तान्धर्त्तुमीश्वरः । बौद्धः स चिन्तयामास प्रातस्तेजोवधो मम ॥ ५० ॥ 5
श्वेताम्बरस्फुलिङ्गस्य किञ्चिदन्यदहो ! महः । निर्वासयिष्यन्तेऽमी हा ! बौद्धाः साम्राज्यशालिनः ॥

५२. धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् । परहस्तगतां भार्यां मित्रं चापदि संस्थितम् ॥ ५२ ॥

*इति दुःखौघसंघट्टाद्विदद्रे तस्य हृत्क्षणात् । नृपाह्वानं समायातं प्रातस्तस्य द्रुतं द्रुतम् ॥ ५३ ॥
नोद्घाटयन्ति तच्छिष्या गृहद्वारं वराककाः । मन्दो गुरुर्नाद्य भूपसभामेतेति भाषिणः ॥ ५४ ॥
तद्गत्वा तत्र तैरुक्तं श्रुत्वा तन्मल्ल उल्लसन् । अवोचच्च शिलादित्यं मृतोऽसौ शाक्यराट् शुचा ॥ 10
स्वयं गत्वा शिलादित्यस्तं तथास्थमलोकत । बौद्धान्प्रावासयद्देशाद्धिक् प्रतिष्ठाच्युतं नरम् ॥ ५६ ॥
मल्लवादिनमाचार्यं कृत्वा वागीश्वरं गुरुम् । विदेशेभ्यो जैनमुनीन् सर्वानाजूहवन्नृपः ॥ ५७ ॥
शत्रुञ्जये जिनाधीशं भवपञ्जरभञ्जनम् । कृत्वा श्वेताम्बरायत्तं यात्रां प्रावर्तयन्नृपः ॥ ५८ ॥

§ ३१) कालान्तरे तत्र पुरे रङ्को नामाभवद्वणिक् ।
तस्य कार्पटिको हट्टे न्यासीचक्रे महारसम् ॥ ५९ ॥ 15

रसेन तेन स्पृष्टस्य लोहस्य तपनीयताम् । स दृष्ट्वा हट्टसदनपरावर्त्तं चकार च[4] ॥ ६० ॥
वञ्चयित्वा कार्पटिकं रङ्कः सोऽभून्महाधनः । तत्पुत्र्या राजपुत्र्याश्च सख्यमासीत्परस्परम् ॥ ६१ ॥
हैमीं कङ्कतिकामेकां[5] दिव्यरत्नविभूषिताम् । रङ्कपुत्रीकरे दृष्ट्वा याचते स्म नृपात्मजा ॥ ६२ ॥
तां न दत्ते पुना रङ्को राजा तं याचते बलात् । तेनैव मत्सरेणासौ म्लेच्छसैन्यमुपानयत् ॥ ६३ ॥
भग्ना पूर्वलभी तेन सञ्जातमसमञ्जसम् । शिलादित्यः क्षयं नीतो वणिजा स्फीतऋद्धिना ॥ ६४ ॥ 20
ततोऽथाकृष्य[6] वणिजा प्रक्षिप्ताश्च रणे[7] शकाः[8] । तृष्णया ते स्वयं मत्वा[9]ऽर्हतो व्याधिर्महानयम् ॥ ६५ ॥
विक्रमादित्यभूपालात्पञ्चर्षित्रिक(५७३)वत्सरे । जातोऽयं वलभीभङ्गो ज्ञानिनः प्रथमं ययुः ॥६६॥
स्ववर्त्मना गतान्यर्हद्बिम्बानि विषयान्तरम् । देवताधिष्ठितानां हि चेष्टा सम्भविनी[10] तथा ॥ ६७ ॥
एतच्च प्रथमं ज्ञात्वा मल्लवादी महामुनिः । सहितः परिवारेण पञ्चासरपुरीमगात् ॥ ६८ ॥
नागेन्द्रगच्छसत्केषु धर्मस्थानेष्वभूत्प्रभुः । श्रीस्तम्भनकतीर्थेऽपि सङ्घस्तस्येशतामधात् ॥ ६९ ॥ 25

श्रीमल्लवादिचरितं जिनशासनीयतेजःसमुन्नतिपवित्रमिदं निशम्य ।
भव्याः ! कवित्ववचनादिविचित्रलब्धिव्रातैः[11] प्रभावयत शासनमार्हतं भोः ! ॥७०॥

॥ इति श्रीमल्लवादिचरित्रम् ॥ ७ ॥



1 B अप्रवादी; D अप्रमादो । 2 P बर्बर० । 3 P नयतर्क० । * एषः श्लोकः B आदर्शे नोपलभ्यते । 4 B सः । 5 P हैमीकङ्कनीका० । 6 A ततोऽप्याकृष्य । 7 ACD रिणे, P अरिणे । 8 C शिकाः; 9 P मृत्वा । 10 ACD सम्भाविनी । 11 B प्राहया ।

## ८. अथ श्रीहरिभद्रसूरिप्रबन्धः ।

§ ३२) श्रीचित्रकूटे हरिभद्रो विप्रश्चतुर्दशविद्यास्थानज्ञः[1] । †दृश्यौ[2] पादुकाः; पञ्चमदूरीकृत-दर्शनाऽन्यानि पञ्चममाध इति कृत्वा; उदरे पट्टः, उदरं विद्यया स्फुटतीति कृत्वा;† जालं कुद्दालो निःश्रेणी सह चलन्ति[3] । यत्पठितमहं न जानामि तस्य शिष्यो भवामीति प्रतिज्ञा । एकदा 5 चतुष्पथासन्नभूमिमव्रजत्[4] । ‡याकिनी नाम साध्वी तया[5]

५३. चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की । केसवचक्की केसवदुचक्किकेसी य चक्की य ॥ १ ॥

इति गाथा पेठे । न च तेन बुद्धा । अग्रे गत्वोक्तम्—मातः! खरं चिकचिकापितम् । साध्व्योक्तम्—नवं लिप्तम् । अहो! अनयाऽहमुत्तरेणापि जितः—इति तां ववन्दे । त्वच्छिष्योऽस्मि । गाथार्थं ब्रूहि मातः!। सा प्राह स्म—मम गुरवः सन्ति । हरिभद्रः प्राह क्व ते? 10 [*अत्र सन्ति । ततः केनापि श्रावकेण स] चैत्यं नीतः । जिनदर्शनं तत्प्रथमम् । हर्षः ।

५४. वपुरेव तवाचष्टे भगवन्! वीतरागताम् । नहि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः ॥ २ ॥

५५. जं दिट्ठी करुणातरङ्गियपुडा एयस्स सोमं मुहं, आयारो पसमायरो परियरो संतो पसन्ना तणू ।
तं नूणं जरजम्ममच्चुहरणो देवाहिदेवो इमो, देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ ३ ॥

इत्यादिनवीननमस्काराः । ततो जिनभटाचार्यदर्शनम् । प्रतिपत्तिः । चारित्रम् । सूरिपदवी । 15 आवश्यके 'चक्की'त्यादि[6] तेनैव विवृतम् । 'कलिकालसर्वज्ञः' इति बिरुदम् । रहस्यपुस्तका देवताभ्यो लब्धाः । ते चादरेण जितदिक्पटाचार्याच्छिन्न ८४ मठप्रतिबद्धचउरासीनामकप्रासादस्तम्भे विविधौषधनिष्पन्ने जलज्वलनाद्यसाध्ये क्षिप्ताः ।

§ ३३) एकदा भागिनेयौ हंस-परमहंसौ पाठयति प्रभुः । निष्पन्नौ परं बौद्धतर्कांस्तन्मुखेन पिपठिषतः । गुरुणा ज्ञानिना[7] वार्यमाणावपि तत्पार्श्वे गतौ । जरतीगृहे उत्तारकः । बौद्धाचार्यान्तिके 20 तद्वेषस्थौ पठतः । कपलिकायां रहस्यानि लिखतः । प्रतिलेखनादिसंस्कारवशाद्दयालू इव ज्ञात्वा गुरुणाऽचिन्ति—ध्रुवं श्वेताम्बरावेतौ । द्वितीयाहे सोपानश्रेण्यां खट्याऽर्हद्बिम्बमालिलिखे । तदासन्नायातौ तौ पादौ[8] न दत्तः । [*यतः, नरकफलमिदं न कुर्वहे श्रीजिनपतिमूर्द्धनि पादयोर्निवेशम् । ] रेखात्रयाङ्कस्तत्कण्ठश्चक्रे । बुद्धोऽयं जात इति कृत्वा उपरि पादो दत्तः । उपरि चटितौ । गुरुणा दृष्टौ । गुरोः समक्षं[9] निषण्णौ तौ । गुर्वास्यच्छायापरावर्त्तं दृष्ट्वा तत्कैतवं तत्कृतमेव मत्वा 25 जठरपीडामिषेण ततो निरक्रामताम् । कपलिकां लात्वा गतौ । तौ चिरान्नायातौ[10] । विलोकापितौ न स्तः । राजाग्रे कथितम्—सितपटावुत्कटकपटौ तत्त्वं लात्वा यातः । कपलिकामानायय । पृष्ठे सैन्यमल्पं गतम् । दृष्टिदृष्टिः । द्वावपि सहस्रयोधौ तौ । ताभ्यां निहतं राजसैन्यम् । उद्वृत्त[11]-नष्टैरुपराजं गत्वा कथितं तत्तेजः । पुनर्बहुसैन्यप्रैषः[12] । दृष्टिमेलापकः । युद्धमेकः करोति ।

1 B ०ज्ञानज्ञ । 2 BD दृश्यं पादुकामदूरी० । † एतदन्तर्गतपाठस्थाने G आदर्शे 'स्वविद्यया तिरस्कृतपंचदर्शनानि वदति च जनेपु विद्ययोदर स्फाटयति, अतो मयोदरे पट्टबन्ध क्रियते ।' एतादृश पाठ । 3 ADP चलति । 4 A भूमिमाव्रजन्, B भूमिं व्रजन् । ‡ P भूमिं व्रजता गाथामेकां पठ्यमाना याकिनी नाम साध्वी श्रुता । 5 BD नास्ति 'तया' । * P पुस्तक एवैष कोष्ठकगत पाठो दृश्यते, प्रक्षिप्तप्रायोऽयम् । 6 P चक्कीत्यादि दुष्करत्वादावश्यकं तेनैव । 7 P नास्ति । 8 BD पादं, P पादौ तत्र । * कोष्ठकगत. पाठ AD आदर्शे लभ्यते, D आदर्शे पुन एतदग्रे 'परसटितत्तरौ वरे विभतो निजचरणौ न तु जैनदेहलग्नौ' एषा अधिका पङ्क्तिर्विद्यते । 9 B नास्ति 'गुरो समक्षं' । 10 P नास्ति पदमेतत् । 11 P उद्धृत । 12 P सैन्यमप्रैपि ।

अपरः कपलिकापाणिर्नष्टः। हंसस्य शिरश्छित्त्वा राज्ञे दर्शितं तैः। तेनापि गुरवे दत्तम्। गुरुराह–किमनेन कपलिकामानायय। गता भटाः। रात्रौ चित्रकूटे प्राकारकपाटयोर्दत्तयोस्तदासन्ने सुप्तस्य परमहंसस्य शिरश्छित्त्वा तैस्तत्रार्पितम्। तेषां बौद्धानां तत्सूरेश्च सन्तोषः। प्रातः श्रीहरिभद्रसूरिभिः शिष्यकबन्धो दृष्टः। कोपः। तैलकटाहाः कारिताः। अग्निना तापितं तैलम्। १४४० बौद्धा होतुं खे आकृष्टाः [*शकुनिकारूपेण पतन्ति]। गुरुभिर्वृत्तान्तो ज्ञातः[1] 5
[*प्रतिबोधाय] साधू प्रहितौ। ताभ्यां गाथा दत्ताः–

५६. गुणसेण-अग्गिसम्मा सीहा-णंदा य तह पिया-पुत्ता। सिहि-जालिणि माइ-सुया, धण-धणसिरिमो य पइ-भज्जा ॥४॥
५७. जय-विजया य सहोयर धरणो लच्छी य तह पई भज्जा। सेण-विसेणा पित्तिय-उत्ता जम्मंमि सत्तमए ॥ ५ ॥
५८. गुणचन्द-वाणवंतर-समराइच्च-गिरिसेण पाणो उ। एगस्स तओ मुक्खोऽणंतो बीयस्स संसारो ॥ ६ ॥
५९. जह जलइ जलउ लोए कुसत्थपवणाहओ कसायग्गी। तं चुज्जं जं जिणवयणअमियसित्तो वि पज्जलइ ॥ ७ ॥ 10

बोधः। शान्तिः। १४४० ग्रन्थाः प्रायश्चित्तपदे कृताः। चित्रकूटतलहट्टिकास्थेन तैलवणिजा प्रतयः कारिताः। तत्प्रथमं याकिनीधर्मसूनुरिति हारिभद्रग्रन्थेष्वन्तेऽभूत्। १४४० पुनर्भवविरहान्तता। 'गुणसेणअग्गिसम्मा' इत्यादिगाथात्रयप्रतिबद्धं समरादित्यचरित्रं नव्यं शास्त्रं क्षमावल्लीविजं कृतम्। १०० शतक-पञ्चाशत्-षोडशक-अष्टक-पञ्चलिङ्गी-अनेकान्तजयपताका-न्यायावतारवृत्ति-पञ्चवस्तुक-पञ्चसूत्रक-श्रावकप्रज्ञप्ति-नाणायत्तकप्रभृतीनि हारिभद्राणि। 15

§ ३४) अत्रान्तरे श्रीमालपुरे कोऽपि धनी श्रेष्ठी जैनश्चतुर्मासके सपरिकरो देवतायतनं व्रजन् सिद्धाख्यं राजपुत्रं द्यूतकारयुवानं देयकनकपदे निर्दयैर्द्यूतकारैर्गर्तायां निक्षिप्तं[2] कृपया तद्देयं दत्त्वा अमोचयत्। गृहमानीयाभोजयत्। अपाठयत्। सर्वकार्याध्यक्षमकरोत्। पर्यणाययत्। माता प्रागप्यासीत्। पृथग्[3] गृहमण्डनिका। श्रेष्ठिप्रसादाद्धनम्[4]। सिद्धो रात्रावतिकाले एति, लेख्यकलेखलेखनपरवशत्वात्[5]। श्वश्रू-स्नुषे अतिनिर्विण्णे अतिजागरणात्। वध्वा श्वश्रूरुक्ता–मातः! 20
पुत्रं तथा बोधय, यथा निशि सकाले एति। मात्रा उक्तः सः–वत्स! निशि शीघ्रमेहि। 'यः कालज्ञः स सर्वज्ञः'। सिद्धः प्राह–मातः! येन स्वामिनाऽहं सर्वस्वदानेन जीवितव्यदानेन च समुद्धृतस्तदादेशं कथं न कुर्वे। तौष्णीक्येन स्थिता माता। अन्यदाऽऽलोचितं श्वश्रू-स्नुषाभ्याम्–अस्य चिरादागतस्य निशि द्वारं नोद्घाटयिष्यावः। द्वितीयरात्रावतिचिराद्[6] द्वारमागतः स कटकं खटखटापयति[7]। ते तु न ब्रूतः। तेन क्रुद्धेन गदितम्–किमिति द्वारं नोद्घाटयेथे? 25
ताभ्यां मन्त्रितपूर्विणीभ्यामुक्तम्–यत्रेदानीं द्वाराणि उद्घाटितानि भवन्ति, तत्र व्रज। तच्छ्रुत्वा क्रुद्धश्चतुष्पथं गतः। तत्रोद्घाटे हट्टे उपविष्टान् सूरिमन्त्रस्मरणपरान् श्रीहरिभद्रान्दृष्टवान्। सान्द्रचन्द्रिके नभसि देशना। बोधः। व्रतम्[8]। सर्वविद्यता। दिव्यं कवित्वम्। हंसपरमहंसवद् विशेषतर्काञ्[9] जिघृक्षुर्बौद्धान्तिकं जिगमिषुर्गुरुमवादीत्–प्रेषयत बौद्धपार्श्वे। गुरुभिर्गदितम्–तत्र मागाः। मनःपरावर्त्तो भावी। स ऊचे–युगान्तेऽपि नैवं स्यात्। पुनर्गुरवः प्रोचुः–तत्र गतः 30
परावर्त्यसे चेत् तदा अस्मद्दत्तं वेषमत्रागत्यास्मभ्यं ददीथाः। ऊरीचक्रे। स गतस्तत्र पठितुं

* P पुस्तक एवैतद् वाक्यं लभ्यते। 1 C ज्ञापितः। 2 A क्षिप्तं। 3 P पृथग् गृहेऽस्थात्। मात्रा प्रियया च समं स गृहमण्डनिका। 4 P ०धनं बभूव। 5 A पारवश्यात्। 6 C चिरेण। 7 B खटापयति। 8 P व्रतं जगृहे। 9 B तर्कानाजिघृक्षुः।

लग्नः । सुघटितैस्तत्कुतर्कैः परावर्त्तितं मनः । तद्दीक्षां ललौ । वेषं दातुमुपश्रीहरिभद्रं ययौ । तैरप्यागच्छन् जटितः । [P तैरप्यागच्छन्नावर्जितः वादं कुर्वन्वादेन जितः । बौद्धाचार्यस्य बौद्धवेषं दातुं गतः । तेनापि बोधितः । पुनरागत उपश्रीहरिभद्रं श्वेताम्बरवेषं दातुम् । पुनर्वादेन जितः*।] एवं वेषद्वयप्रदानेन एहिरेयाहिराः २१ कृताः । द्वाविंशवेलायां गुरुभिश्चिन्तितम्-
5 माऽस्य वराकस्य आयुःक्षयेण मिथ्यादृष्टित्वे मृतस्य दीर्घभवभ्रमणं भू[या]त् । पुराऽपि २१ वारं[1] वादैर्जितो[2]ऽसौ । अधुना वादेनालम् । 'ललितविस्तराख्या' चैत्यवन्दनावृत्तिः सतर्का कृता । तदागमे पुस्तिकां पादपीठे मुक्त्वा गुरवो बहिरगुः । तत्पुस्तिकापरामर्शाद्बोधः सम्यक्[3] । ततस्तुष्टो निश्चलमनाः प्राह-

६०. नमोऽस्तु हरिभद्राय तस्मै प्रवरसूरये । मदर्थं निर्मिता येन वृत्तिर्ललितविस्तरा ॥ ८ ॥

10 ततो मिथ्यात्वनिर्विण्णेन सिद्धर्षिणा[4] १६ सहस्रा 'उपमितिभवप्रपञ्चा' कथाऽरचि श्रीमाले सिद्धिमण्डपे । सा च सरस्वत्या साध्व्याऽशोधि । समये श्रीहरिभद्रसूरयोऽपि सोऽपि अनशनेन सुरलोकमवापन् ।

॥ इति श्रीहरिभद्रसूरिप्रबन्धः ॥ ८ ॥

## ९. अथ श्रीबप्पभट्टिसूरिप्रबन्धः ।

15 § ३५) गूर्जरदेशे पाडलापुर[5]नगरे जितशत्रू राजा राज्यं करोति स्म । तत्र[6] श्रीसिद्धसेननामा सूरीश्वरोऽस्ति स्म । स मोढेरपुरे महास्थाने श्रीमहावीरनमस्करणाय गतः । श्रीमहावीरं नत्वा तीर्थोपवासं कृत्वा रात्रावात्मारामरतो योगनिद्रया स्थितः सन् स्वप्नं ददर्श । यथा-केसरिकिशोरको देवगृहोपरि क्रीडति । स्वप्नं लब्ध्वाऽजागरीत् । माङ्गल्यस्तवनान्यपाठीत् । प्रातश्चैत्यं गतः । तत्र षड्वार्षिको बाल एको बालांशुमालिसमद्युतिराजगाम । सूरिणा पृष्टः-भो अर्भक! कस्त्वम्?
20 कुत आगतः? । तेनोक्तम्-पञ्चालदेशे डूंबाउधीग्रामे बप्पाख्यः क्षत्रियः । तस्य भट्टिर्नाम सधर्मचारिणी । तयोः [7]सूरपालो नाम पुत्रोऽहम् । मत्तातस्य बहवो भुजबलगर्विताः प्रचुरपरिच्छदाः शात्रवः सन्ति । तान्सर्वान्हन्तुमहं सन्नह्य चलन्नासम् । पित्रा निषिद्धः-वत्स! बालस्त्वम्, नास्मै कर्मणे प्रगल्भसे । अलमुद्योगेन । ततोऽहं क्रुद्धः । किमनेन निरभिमानेन पित्रापि, यः स्वयमरीन्न हन्ति मामपि घ्नन्तं निवारयति । अपमानेन मातापितरावनापृच्छयात्र समागतः ।
25 सूरिणा चिन्तितम्-अहो दिव्यं रत्नम्! । न मानवमात्रोऽयम् । 'तेजसां हि न वयः समीक्ष्यते ।' इति विमृश्य बाल आलेपे-वत्सक! अस्माकं पार्श्वे तिष्ठ, निजगृहाधिकसुखेन । बालेनोक्तम्-महान्प्रसादः । स्वस्थानमानीतः । सङ्घो हृष्टस्तद्रूपविलोकनेन । दृष्टयस्तृप्तिं न [8]मन्वते । पाठयित्वा विलोकितः । एकाहेन श्लोकसहस्रमध्यगीष्ट । गुरवस्तुतुषुः[9] । 'रत्नानि पुण्यप्रचयप्राप्यानि ।' धन्या वयम् । तेन बालेनाप्यल्पदिनैर्लक्षण-तर्क-साहित्यादीनि भूयांसि शास्त्राणि पर्यशीलिषत ।

* एषा कोष्टकगता पङ्क्ति केवलं P पुस्तके दृश्यतेऽत प्रक्षिप्तप्राया चेयम् । 1 P वारान् । 2 P वादे जितो । 3 P समजनि । 4 B सिद्धिऋषिणा । 5 P पाटला० । 6 B अत्र । 7 B सुर० । 8 B मन्यन्ते, P तन्वते । 9 C तुतुष्ट, D तुष्टा, P तुष्टुवु ।

ततो गुरवो डुंबाउधीग्रामं जग्मुः। बालस्य पितरौ वन्दितुमागतौ। गुरुभिरालापितौ–पुत्रा भवन्ति भूयांसोऽपि। किं तैः संसारावकरकृमिभिः[1]?। अयं तु युवयोः पुत्रो व्रतमीहते। दीयतां नः। गृह्यतां धर्मः। 'नष्टं मृतं सहन्ते हि पितरो निजतनयम्।' श्लाघ्योऽयं भवं निस्तितीर्षुः। पितृभ्यामुक्तम्–भगवन्! अयमेक एव नः कुलतन्तुः। कथं दातुं शक्यते?। तावता सविधस्थेन सूरपालेन गदितम्–अहं[2] चारित्रं गृह्णाम्येव। 5

६१. यतः–सा बुद्धिर्विलयं प्रयातु कुलिशं तत्र श्रुते[3] पात्यताम्, वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः।
यैः सर्वैः शरदेन्दुकुन्दविशदैः प्राप्तैरपि प्राप्यते, भूयोऽप्यत्र पुरन्धिरन्ध्रनरकक्रोडाधिवासव्यथा॥ १॥

ततो ज्ञाततन्निश्चयाभ्यां तन्मातरपितृभ्यां जल्पितम्–भगवन्! गृहाण पात्रमेतत्। परं 'बप्पभट्टिः' इति नामास्य कर्तव्यम्। गुरुभिर्भणितम्–एवमस्तु। कोऽत्र दोषः। पुण्यवन्तौ युवाम्। ययोरयं लाभः सम्पन्नः। बप्प-भट्टी आपृच्छ्य सूरपालं गृहीत्वा सिद्धसेनाचार्यो मोढेरकं गताः। 10

६२. शताष्टके वत्सराणां गते विक्रमकालतः। सप्ताधिके राधशुक्लतृतीयादिवसे गुरौ॥ २॥

दीक्षा दत्ता। 'बप्पभट्टिः' इति नाम विश्ववल्लभं जुघुषे। सङ्घप्रार्थनया तत्र चतुर्मासकं कृतम्।

§३६) अन्यदा बहिर्भूमिं गतस्य बप्पभट्टेर्महतीं वृष्टिमतनिष्ट घनः। क्वापि देवकुले स्थितः सः। तत्र देवकुले महाबुधः[4] कोऽपि पुमान् समागतः। तत्र देवकुले प्रशस्तिकाव्यानि रसाढ्यानि गम्भीरार्थानि तेन बप्पभट्टिपार्श्वाद्व्याख्यापितानि। ततः स बप्पभट्टिना समं वसतिमायातः। गुरुभिराशीर्भिरभिनन्दितः। आम्नायं स पृष्टः। ततोऽसौ जगाद–भगवन्! कन्यकुब्जदेशे गोपालगिरिदुर्गनगरे यशोवर्मनृपतेः[5] सुयशा[6]देवीकुक्षि[7]जन्मा नन्दनोऽहम्। यौवने[8] च निरर्गलं धनं लीलया व्ययन् पित्रा कुपितेन शिक्षितः–वत्स! धनार्जकस्य कृच्छ्रमस्थानव्ययी पुत्रो न वेत्ति तातस्य। मितव्ययो भव। ततोऽहं कोपादिहागमम्। गुरवोऽप्यूचुः–किं ते नाम?। तेनापि खटिकया भुवि लिखित्वा दर्शितम्–'आम' इति। महाजनाचारपरंपरेदृशी 'स्वनाम नामाददते न साधवः।' तस्यौन्नत्येन गुरवो हृष्टाः। चिन्तितं च तैः–पूर्वं श्रीरामसैन्ये[9] दृष्टोऽसौ षाण्मासिकः शिशुः। 15 20

६३. पीलुवृक्षमहाजाल्यां[10] वस्त्रान्दोलकं[11]मास्थितः। अचल[या]छायया च पुण्यपुरुषो निर्णीतः॥ ३॥

ततस्तज्जननी वन्यफलानि विचिन्वानाऽस्माभिर्भणिता–वत्से! का त्वम्?। किं च[12] ते कुलम्?। [*साऽवादीत् निजं कुलम्] अहं राजपुत्री कन्यकुब्जेशयशोवर्मपत्नी सुयशा नाम। अहमस्मिन्सुते गर्भस्थे सति दृढकार्मणवशीकृतधवया[13] कृतप्रमाणयाऽकृत्ययेव क्रूरया सपत्न्या मिथ्या परपुरुषदोषमारोप्य गृहान्निष्कासिता। अभिमानेन श्वशुरकुल-पितृकुले हित्वा भ्रमन्तीह समागता वन्यवृत्त्या जीवामि। बालं च पालयामि। इदं श्रुत्वाऽस्माभिः सा उक्ता–वत्से! अस्मच्चैत्यं समागच्छ। स्वं वत्सं प्रवर्द्धय[14]। तया तथा कृतम्। सपत्न्यपि बहुसपत्नीकृतमारणप्रयोगैः[15]-र्ममार। ततो विशिष्टपुरुषैः कन्यकुब्जेशो यशोवर्मा विज्ञप्तः–देव! सुयशा राज्ञी निर्दोषाऽपि तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्यानीयते। राज्ञा सा स्वसौधमानायिता सपुत्रा गौरविता च। 25 30

1 A कृतिभिः। 2 P नास्ति। 3 A श्रुतः। 4 B महाबोधः। 5 C यशोधर्म॰। 6 P सुयशो॰। 7 'कुक्षि' नास्ति। 8 CP यौवनेन। 9 PC ॰सैन्ये ग्रामे। 10 P महाजल्यां। 11 P वस्त्रदोलकं॰। 12 BC वा तव। * PC आदर्शे एवैष पाठः। 13 PC यत्कृत॰। 14 C वर्धय। 15 PC प्रयोगेण।

अन्यदा विहरन्तो वयं तस्या देशं गताः। तया पूर्वप्रतिपन्नं स्मरन्त्या वयं वन्दिताः पूजिताः। अनेन आमनाम्ना तत्सुतेन भाव्यम्। एवं चिरं विभाव्य सूरयस्तमूचुः–वत्स! वस निश्चिन्तो निजेन सुहृदा बप्पभट्टिनाम्ना सममस्मत्सन्निधौ। त्वं गृहाण कलाः। कास्ताः?–लिखितम् १. गणितम् २. गीतम् ३. नृत्यम् ४. पठितम् ५. वाद्यम् ६. व्याकरणम् ७. छन्दो ८. ज्योतिषम् ९. शिक्षा १०. निरुक्तम् ११. कात्यायनम् १२. निघण्टुः १३. पत्रच्छेद्यम् १४. नखच्छेद्यम् १५. रत्नपरीक्षा १६. आयुधाभ्यासः १७. गजारोहणम् १८. तुरगारोहणम् १९. तयोः शिक्षा २०. मन्त्रवादः २१. यन्त्रवादः २२. रसवादः २३. खन्यवादः २४. रसायनम् २५. विज्ञानम् २६. तर्कवादः २७. सिद्धान्तः २८. विषवादः २९. गारुडम् ३०. शाकुनम् ३१. वैद्यकम् ३२. आचार्यविद्या ३३. आगमः ३४. प्रासादलक्षणम् ३५. सामुद्रिकम् ३६. स्मृतिः ३७. पुराणम् ३८. इतिहासः ३९. वेदः ४०. विधिः ४१. विद्यानुवादः ४२. दर्शनसंस्कारः ४३. खेचरीकला ४४. अमरीकला ४५. इन्द्रजालम् ४६. पातालसिद्धिः ४७. धूर्त्तशम्बलम् ४८. गन्धवादः ४९. वृक्षचिकित्सा ५०. कृत्रिममणिकर्म ५१. सर्वकरणी ५२. वश्यकर्म ५३. पणकर्म ५४. चित्रकर्म ५५. काष्ठघटनम् ५६. पाषाणकर्म ५७. लेपकर्म ५८. चर्मकर्म ५९. यन्त्रकरसवती ६०. काव्यम् ६१. अलङ्कारः ६२. हसितम् ६३. संस्कृतम् ६४. प्राकृतम् ६५. पैशाचिकम् ६६. अपभ्रंशम् ६७. कपटम् ६८. देशभाषा ६९. धातुकर्म ७०. प्रयोगोपायः ७१. केवलीविधिः ७२. एताः सकलाः कलाः शिक्षितवान्। लक्षण-तर्कादिग्रन्थान् परिचितवान्। बप्पभट्टिना साकमस्थिमज्जन्यायेन प्रीतिं बद्धवान्।

६४. यतः–आरंभगुर्वी[1] क्षयिणी क्रमेण ह्रस्वा पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम्॥ ४॥

कियत्यपि गते[2] काले यशोवर्मनृपेणासाध्यव्याधितेन पट्टाभिषेकार्थमामकुमाराकारणाय प्रधानपुरुषाः प्रेषिताः। अनिच्छन्नपि तैस्तत्र नीतः। पितुर्मेलितः[3]। पित्राऽऽलिङ्गितः सबाष्पगद्गदमुपालब्धश्च–

६५. धिग् वृत्तनृत्तमुचितां शुचितां धिगेतां धिक् कुन्दसुन्दरगुणग्रहणाग्रहित्वम्।
चक्रेऽङ्कसीम्नि तव मौक्तिक! येन वृद्धिर्वार्द्धेर्न तस्य कथमप्युपयुज्यसे यत्॥ ५॥

अभिषिक्तः स्वराज्ये। शिक्षितश्च प्रजापालनादौ। एतत्कृत्वा यशोवर्मा अर्हन्तं त्रिधा[4] शुद्ध्या शरणं श्रयन् द्यां गतः। आमराजा पितुरौर्द्धदेहिकं कृतवान्। द्विजादिदीनलोकाय वित्तं दत्तवान्। लक्षद्वितयमश्वानाम्, हस्तिनां रथानां च प्रत्येकं चतुर्दशशती, एका कोटी पदातीनाम्। एवं राज्यश्रीः श्रीआमस्य न्यायरामस्य। तथापि बप्पभट्टिमित्रं विना पलालपूलप्रायं मन्यते स्म। ततो मित्रानयनाय प्रधानपुरुषानप्रैषीत्। तैस्तत्र गत्वा विज्ञप्तम्–हे श्रीबप्पभट्टे! आमराजः समुत्कण्ठयाऽऽह्वयति। आगम्यताम्। बप्पभट्टिना गुरूणां वदनकमलमवलोकितम्। तैः सङ्घानुमत्या गीतार्थयतिभिः समं बप्पभट्टिमुनिः प्रहितः। आमस्य पुरं गोपालगिरिं प्राप। राजा सबलवाहनः संमुखमगात्। प्रवेशमहमकार्षीत्। सौधमानैषीत्। अवोचत च–भगवन्! अर्द्धराज्यं गृहाण। तेनोक्तम्–अस्माकं निर्ग्रन्थानां सावद्येन राज्येन किं कार्यम्?। यतः–

1 C आपातगुर्वी। 2 P नास्ति। 3 C मिलित.। 4 P त्रिविध०।

६६. अनेकयोनिसम्पाताऽनन्तबाधाविधायिनी । अभिमानफलैवेयं राज्यश्रीः सा विनश्वरी ॥ ६ ॥

§ ३७) ततो राज्ञाऽसौ तुङ्गे धवलगृहे स्थापितः । प्रातः सभामागताय बप्पभट्टये नृपेण सिंहासनं मण्डापितम् । तेन गदितम्–ऊर्वीपते! आचार्यपदं विना सिंहासनं न युक्तम् । गुर्वाशातना भवेत् । ततो राज्ञा बप्पभट्टिः प्रधानसचिवैः सह गुर्वन्तिके प्रहितः । विज्ञप्तिका च[1] दत्ता–यदि मम प्राणैः कार्यं तदा प्रसद्य सद्योऽयं महर्षिः सूरिपदे स्थाप्यः । 5

योग्यं सुतं च शिष्यं च नयन्ति गुरवः श्रियम् ।

स्थापितमात्रश्चात्र शिघ्रं प्रेषणीयः । अन्यथाऽहं न भवामि । मा विलम्ब्यतामिति । अखण्डप्रयाणकैर्मोढेरकं प्राप्तः[2] । सचिवैः सूरयो विज्ञप्ताः–प्रभो! राजविज्ञप्त्यर्थोऽनुसार्यः । उचितज्ञा हि भवादृशाः ।

अथ श्रीसिद्धसेनाचार्यैर्बप्पभट्टिः सूरिपदे स्थापितः । तदङ्गे श्रीः साक्षादिव सङ्क्रामन्ती दृष्टा । 10 रहश्च शिक्षा दत्ता–वत्स! तव राजसत्कारो भृशं भावी । ततश्च लक्ष्मीः प्रवर्त्स्यति । तत इन्द्रियजयो दुष्करः । त्वं महाब्रह्मचारी भवेः[3] ।

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः[4] ।

अनेन महाव्रतेन महत्तरः स्फुरिष्यसि ।

६७. एकादशाधिके तत्र जाते वर्षशताष्टके । विक्रमात्सोऽभवत्सूरिः कृष्णचैत्राष्टमीदिने ॥ ७ ॥ 15

गुरुणा आमराजसमीपे प्रेषितः । तत्र प्राप्तः । गोपगिरेः प्रासुकवनोद्देशे स्थितः । राजा अभ्यागत्य महामहेन तं[5] पुरीं प्रावीविशत् । श्रीबप्पभट्टिसूरिणा तत्र देशना क्लेशनाशिनी दत्ता–

६८. श्रीरियं प्रायशः पुंसामुपस्कारैककारणम् । तामुपस्कुर्वते ये तु रत्नसूत्तैरसौ रसा ॥ ८ ॥

आमेन गुरूपदेशादेकोत्तरशत[6]हस्तप्रमाणः प्रासादः कारयामासे गोपगिरौ । अष्टादशभारप्रमाणं श्रीवर्द्धमानबिम्बं तत्र निवेशयांबभूवे । प्रतिष्ठा विधापयांचक्रे । तत्र चैत्ये मूलमण्डपः 20 सपादलक्षेण सौवर्णटङ्कैर्निष्पन्न इति वृद्धाः[7] प्राहुः । आमः कुञ्जरारूढः सर्वर्द्ध्या चैत्यवन्दनाय याति । मिथ्यादृशां दृशौ सैन्धवेनेव[8] पूर्येते सम्यग्दृशां त्वमृतेनेव । एवं प्रभावना । प्रातर्नृपो मौलमनर्घ्यं स्वं सिंहासनं सूरये निवेशापयति । तद् दृष्ट्वा विप्रैः क्रुधा ज्वलितैर्भूपो विज्ञप्तः–देव! श्वेताम्बरा अमी शूद्राः । एभ्यः सिंहासनं किम् । अथास्तां तत् । परं [9]ह्रसीयो भवतु[10] । मुहुर्मुहुस्तैरित्थं विज्ञप्त्या कदर्थ्यमानः पार्थिवो मौलसिंहासनं कोशगं कारयित्वाऽन्यल्लघ्वारू- 25 रुपत । प्रत्यूषे सूरीन्द्रेण तद् दृष्ट्वा रुष्टेनेव राज्ञोऽग्रे पठितम्–

६९. मर्दय मानमतङ्गजदर्पं विनयशरीरविनाशनसर्पम् । क्षीणो दर्पाद्दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि ॥९॥

इदं श्रुत्वा राज्ञा ह्रीणेन तदा[11] भूयो मूलसिंहासनमनुज्ञातम् । अपराधः क्षमितः ।

एकदा सपादकोटी हेम्नां दत्ता गुरुभ्यः । तैर्निरीहैः सा जीर्णोद्धारे ऋद्धियुक्तश्रावकपार्श्वाद् व्ययिता । 30

---

1 P 'च' नास्ति । 2 PC प्राप्तो बप्पभट्टिः । 3 C भव । 4 P वीराः । 5 CD तां । 6 B ०हस्तशत० । 7 P बुधाः । 8 P सैन्धवेन । 9 A ह्रसायो (काष्ठमयः इति टिप्पनी); CP ह्रस्वीयो । 10 P भवतु न महत् । 11 CP सदा ।

अन्यदा शुद्धान्ते प्रम्लानवदनां वल्लभां दृष्ट्वा प्रभोः पुरो गाथार्द्धं राजाऽऽह–

७०. अज्जवि सा परितप्पइ कमलमुही अत्तणो पमाएण ।

समस्येयम् । प्रभुः साह–

पढमविबुद्धेण तए जीसे पच्छाइयं अंगं ॥ १० ॥

5 राजा आत्मसंवादाच्चमत्कृतः । अन्यदा प्रियां पदे पदे मन्दं मन्दं सञ्चरन्तीं दृष्ट्वा गाथार्द्धं राजा जगाद

७१. बाला चंकमंती पए पए कीस कुणइ मुहभंगं ।

सूरिराह–

नूणं रमणपएसे मेहलिया छिदइ[1] नहपंर्ति ॥ ११ ॥

10 इदं श्रुत्वा राजा मुखं निःश्वासहतदर्पणसमं दध्रे–अमी मदन्तःपुरे कृतविप्लवा इति धिया । तच्चाचार्यैः क्षणार्द्धेनावगतम् । चिन्तितं च–अहो विद्यागुणोऽपि दोषतां गतः ! ।

७२. जलधेरपि कल्लोलाश्चापलानि कपेरपि । शक्यन्ते यत्नतो रोद्धुं न पुनः प्रभुचेतसः ॥ १२ ॥

रात्रौ सूरिः संघमप्यनापृ॑च्छय राजद्वारकपाटसम्पुटतटे काव्यमेकं लिखित्वा पुराद्बहिर्ययौ । तद्यथा–

15 ७३. यामः स्वस्ति तवास्तु रोहणगिरे ! मत्तः स्थितिप्रच्युता, वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः । श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा, ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १३ ॥

७४. [ *अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान् किं वा विमुञ्चसि विभो ! यदि वा विमुञ्च । हा हन्त ! केकिवर ! हानिरियं तवैव भूपालमूर्द्धनि पुनर्भविता स्थितिर्नः ॥ १४ ॥

७५. *हंस जिहिं गय तिहिं गया महिमण्डणा हवंति । छेहु तांह सरोवरह जं हंसे मुचंति ॥ १५ ॥]

20 § ३८) दिनैः कतिपयैर्गौडदेशान्तर्विहरन् लक्षणावतीनाम्न्याः पुरो[3] बहिरारामे समवात्सीत्[4] । तत्र पुरि धर्मो नाम राजा । स च गुणज्ञः । तस्य सभायां वाक्पतिनामा कविराजोऽस्ति । तेन सूरीणामागमनं लोकादवगतम् । ज्ञापितश्च राजा । राज्ञा प्रवेशमहः कारितः । पूर्मध्येऽसौ[5] सौधोपान्ते गुरुस्तुङ्गगृहे स्थितः[7] । राजा नित्यं वन्दते । कवयो जिता[6] रञ्जिताश्च । प्रभावनाः प्रैधते स्म । यशश्च कुन्दशुभ्रम् । [ †राजा प्रोचे–

25 ७६. अदृष्टे दर्शनोत्कण्ठा दृष्टे विरहभीरुता । दृष्टेन वाप्यदृष्टेन भवता नाप्यते सुखम् ॥ १६ ॥

निर्बन्धे सूरिराह–आमश्चेत्स्वयमायास्यति तदा वयं यास्यामो नान्यथा–इति प्रतिज्ञाय स्थापिताः पुण्यलाभं कुर्वन्ति ।]

इतश्च यदा बप्पभट्टिः कृतविहारः प्रातः श्रीआमपार्श्वे नायातस्तदा तेन सर्वत्रावलोकितो न लब्धः । राजा[8] जातो विलक्षः । 'यामः स्वस्ति तवास्तु' इत्यादि काव्यं दृष्टम्[9] । अक्षराण्युपल-30 क्षितानि । ध्रुवं स मां मुक्त्वा क्वापि गत एवेति निर्णीतम् । अन्यदा बहिर्गतेन राज्ञा [10]महाभुजङ्गमो दृष्टः । तं मुखे धृत्वा वाससाऽऽच्छाद्य सौधं गतः । कविवृन्दाय समस्यामर्पितवान्–

1 BG छिन्नइ, PC छिवइ । 2 P ०मनापृ० । * एतत्पद्यद्वयं P पुस्तके एवोपलभ्यते, नान्यत्र । 3 P नगर्याः । 4 BDP समवासार्षीत् । 5 BP नास्ति 'असौ' । 6 P स्थापित । 7 AC नास्ति 'जिता.' । † P पुस्तक एवैष कोष्ठकगतः पाठ प्राप्यते । 8 CP नास्ति । 9 P काव्यानि दृष्टानि । 10 P 'महा' नास्ति ।

७७. शस्त्रं शास्त्रं कृषिर्विद्या अन्यो यो येन जीवति ।

इति । पूरिता सर्वैरपि । न तु नृपश्चमचकार, हृदयाभिप्रायाकथनात् । तदा बप्पभट्टिं बाढं स्मृतवान् । सा हृदयसंवादिनी गीस्तत्रैव । अथ स पटहमवीवदत् । तत्रेदमजूघुषत्–यो मम हृद्गतां समस्यां पूरयति तस्मै हैमटङ्कलक्षं ददामि । तदा गोपगिरीयो द्यूतकारः कश्चिद् गौडदेशं गतः । स बप्पभट्टिसूरीणामग्रे तत्समस्यापदद्वयं कथितवान् । सूरिणा पश्चार्द्धं पेठे– 5

सुगृहीतं च कर्तव्यं कृष्णसर्पमुखं यथा ॥ १७ ॥

इति । स हि भगवान् षड्विकृतित्यागी सिद्धसारस्वतो गगनगमनशक्त्या विविधतीर्थवन्दन-शक्तियुक्तस्तस्य कियदेतत् । स द्यूतकारस्तत्पादद्वयं गोपगिरौ श्रीआमाय[1] निवेदितवान् । राजा दध्वान–अहो सुघटितत्वमर्थस्य ! । तं पप्रच्छ–केन क्वेयं पूरिता समस्या? । द्यूतकृदाह–लक्षणावत्यां बप्पभट्टिसूरिणा ज्ञानभूरिणा[2] इति । तस्योचितं दानं चक्रे । 10

अन्यदा राजा नगर्या बहिर्ययौ । न्यग्रोधद्रुमाधः पान्थं मृतं ददर्श । शाखायां लम्बमानं करपत्रकमेकं विप्रुषां व्यूहं स्रवन्तं गाथार्द्धं च विशिष्टे ग्राविण लिखितं खटिकया[3] तदपश्यत् ।

७८. तइया मह निग्गमणे पियाइ थोरंसुएहिं जं रुण्णं ।

तदपि समस्यापादद्वयं राज्ञा कविभ्यः कथितम् । न केनापि सुष्ठु पूरितम् । राजा चिन्तयति स्म– 15

७९. वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् ।
हृदयग्राहिणस्तासां[4] द्वित्राः सन्ति न सन्ति वा ॥ १८ ॥

हृदयग्राही स एव मम मित्रं सूरिवरः । स एव दौरोदरिको नृपेणोपसूरि प्रैषि । सूरिणाऽक्षि-निमेषमात्रेण पूरिता समस्या–

करवत्तयबिंदुअनिवडणेण तं मज्झ संभरियं ॥ १९ ॥ 20

तत्पुनर्द्यूतकाराच्छ्रुत्वा राज्ञा हृष्टेनोत्कण्ठितेन सूरेराह्वानाय वाग्मिनः सचिवाः प्रस्थापिताः । उपालम्भसहिता विज्ञप्तिश्च ददे । प्रासास्ते तत्र । दृष्टास्तैस्तत्र सूरयः । उपलक्ष्य वन्दिताः । राजविज्ञप्तिर्दत्ता । तत्र लिखितं वाचितं गुरुभिः–

८०. न गङ्गां गाङ्गेयं सुयुवतिकपोलस्थलगतं न वा शुक्तिं मुक्तामणिरुरसिजस्पर्शरसिकः ।
न कोटीरारूढः स्मरति च सवित्रीं मणिचयस्ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥ २० ॥ 25

८१. छायाकारणि सिरि[5] धरिय पच्चवि[6] भूमि पडंति । पत्तहं इहु[7] पत्तत्तणउं तरुअर कांइ करंति ॥ २१ ॥

सचिवा अप्यूचुः–स्वामिन् ! आमराजो निर्व्याजप्रीतिर्विज्ञापयति–शीघ्रमागम्याऽयं देशो वसन्तावतंसितोद्यानलीलां लम्भनीयः । भवद्वाग्रस[8]लुब्धानामस्माकमितरकविवाग् न रोचते ।

८२. कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु । न ग्रन्थिपर्ण[9]प्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ॥२२॥

तदाकर्ण्य लेखं दत्त्वा सूरिभिः सचिवाः प्रोचिरे–श्रीआमो गीष्पतिसमप्रज्ञ एवं भाषणीयः– 30

1 CP आमाग्रे । 2 P नास्त्येतत्पदम् । 3 BCP कठिन्याऽपश्यत् । 4 P तेषां । 5 P सिर । 6 BCG पच्चिवि । 7 C एहु; P पउ; G यहु । 8 AB वाक्यरस० । 9 C निग्रन्थि; P न गन्धि ।

अस्माकमिति हि[1] प्रतिज्ञाऽऽस्ते धर्मेण राज्ञा सह–स्वयमामः समेत्य त्वत्समक्षं यदाऽस्माना-कारयते किल, तदा तत्र यामो नान्यथा इति। प्रतिज्ञालोपश्च नोचितः सत्यवादिनां प्रतिष्ठा-वताम्। ततो मन्त्रिण उपकन्यकुब्जेशं[2]माजग्मुः। सूरीणां तदुक्तमुक्तं लेखश्चादर्शि। तत्र लिखितं यथा–

5 ८३. अस्माभिर्यदि वः कार्यं तदा धर्मस्य भूपतेः। सभायां छन्नमागम्य स्वयमापृच्छ्यतां द्रुतम्॥ २३॥

८४. विंझेण विणावि गया नरिंदभवणेसु हुंति गारविया। विंझो न होइ वंझो गएहिँ वहुएहिँ वि गएहिँ॥ २४॥

८५. माणसरहिएहिं सुहाइं जह न लब्भंति रायहंसेहिं। तह तस्स वि तेहिं विणा तीरुच्छंगा न सोहंति॥ २५॥

८६. परिसेसियहंसउलं पि माणसं माणसं न संदेहो। अन्नत्थ वि जत्थ गया हंसा वि वया न भण्णंति॥ २६॥

८७. हंसा जहिँ गय तहिँ जि गया महिमंडणा हवंति। छेहउ तांह महासरहं जे हंसेहिं मुचंति॥ २७॥

10 ८८. मलऔं सचंदणु चिय नइसुहहीरंतचंदणदुमोहो। पब्भट्ठं पि हु मलयाऔं चंदणं जायइ महग्घं॥ २८॥

८९. अग्घायंति महुअरा विमुक्ककमलायरा वि मयरंदं। कमलायरो वि दिट्ठो सुओ वि किं महुअरविहीणो॥ २९॥

९०. इक्केण कुत्थुहेणं विणावि रयणायरु चिय समुद्दो। कुत्थुहरयणं पि उरे जस्स ठिऔं सोवि हु महग्घो॥ ३०॥

९१. पइं मुक्काण वि तरुवर फिट्टइ पत्तत्तणं न पत्ताणं। तुह पुणु च्छाया जइ होइ कह वि ता तेहिं पत्तेहिं॥ ३१॥

९२. जे के वि पहू महिमंडलंमि ते उच्छुदंडसारिच्छा। सरसा जडाण मज्झे विरसा पत्तेसु दीसंति॥ ३२॥

15 ९३. संपइ पहुणो पहुणो पहुत्तणं किं चिरंतणपहूणं। दोसगुणा गुणदोसा एहिं कया नहु कया तेहिं॥ ३३॥

एतद्वाचयित्वा सोत्कण्ठं नृपः सारकतिपयपुरुषवृतोऽचालीत्। गोदावरीतीरग्राममेकमगमत्। तत्र खण्डदेवकुले वासमकार्षीत्। देवकुलाधिष्ठात्री व्यन्तरी सौभाग्यमोहिता गङ्गेव भरतं तं भेजे। प्रभाते करभमारुह्य तां देवीमापृच्छ्य प्रभुपादान्तं प्राप। गाथार्द्धं पपाठ–

९४. अज्जवि सा सुमरिज्जइ को नेहो[3] होइ एगराईए।

20 सूरीन्द्रः प्राह–

गोलानईय[4] तीरे सुन्नउले जंसि वीसमिओ॥ ३४॥

इति। अन्योऽन्यं गाढमालिलिङ्गतुरुभौ। तत आम आह स्म–

९५. अद्य मे सफला प्रीतिरद्य मे सफला रतिः। अद्य मे सफलं जन्म अद्य मे सफलं कुलम्[5]॥ ३५॥

रात्रौ इष्टगोष्ठी वव्रृते मधुमधुरा। ततः प्रभाते सूरिर्धर्मनृपास्थानमगमत्। आमनृपोऽपि 25 प्रधानैः स्वैः पुरुषैः सह स्थगीधरो भूत्वाऽऽगच्छत्। [‡'आम आवउ' इति ब्रुवाणैः] सूरिभिर्धर्माय आमस्य विशिष्टपुरुषा दर्शिताः। एते आमनृपनराः किलास्मानाह्वातुमायाताः–इति। धर्मेण राज्ञा पृष्टं विशिष्टजनपार्श्वे–भो आमप्रधाननराः! स भवतां स्वामी कीदृशरूपः। तैर्निगदितम्–यादृगयं स्थगीधरस्तादृगस्ति। प्रथमं मातुलिङ्गं करे धारयित्वा आम आनीतोऽस्ति। सूरिभिः पृष्टम्–भोः स्थगीधर! तवकरे किमेतत्?। स्थगीधरीभूतेन श्रीआमेनोक्तम्– 30 'वीजउरा' इति। क्षणार्द्धेन वार्त्तामध्ये[6] सूरिभिः सूक्तमवतारितम्–

---

1 P नास्ति। 2 A कन्यकुब्जेशसमीपे। 3 P नास्ति। 4 A गोदानईइ। 5 AC फलम्। ‡ P पुस्तक एवैतद्वाक्यं लभ्यते। 6 A वार्त्तार्द्धमध्ये।

९६. तत्ती सीयली मेलावा[1] केहा धण[2] उत्तावली पिउ[3] मंदसणेहा ।[4]
विरहिं माणुसु जो मरइ[5] तसु कवणु निहोरा[6] कण्णि[7] पवित्तडी जणु जाणइ दोरा ॥ ३६ ॥

[†गुरुणा कथितम्–आम आवउ, आम आवउ । धर्मेण राज्ञा तूअरिछोडं दृष्ट्वा पृष्टम्–अहो स्थगीधर ! किमिदम् ? । तेनोक्तम्–'तूअरि' तवारीत्यर्थः ।] इत्यादिगोष्ठ्यां वर्तमानायां शनैः शनैः श्रीआमराजश्छिद्रूपो मेलापकान्निःसृत्य पुराद्बहिः स्थाने स्थाने स्थापितैर्वाहनैः कियतीमपि भूमिमत्यक्राम्यत् । तावता सूरीश्वरो विलम्बाय प्रहरद्वयं कामपि कथामचीकथत् । रसावतारः स कोऽपि जातो यो रम्भा-तिलोत्तमाप्रेक्षणीयकेऽपि दुर्लभः । आमो राजाऽमूल्यं कङ्कणं ग्रहणके मुक्त्वा वेश्यागृहे उषित आसीत् । सा तु लक्षणावतीपतेर्वारस्त्री । एकं कङ्कणमामो राजद्वारे मुञ्चन्नगात् । अपराह्णे राज्ञः पार्श्वाद् बप्पभट्टिसूरिभिर्मुत्कलापितम्–देव ! गोपगिरावामपार्श्वे यामः, अनुज्ञां दीयताम् । धर्मेण भणितम्–भवतामपि वाणी विघटते ? । भवद्भिर्भणितमभूत्–यदा तव दृष्टौ आमः समेत्यास्मानाह्वयिष्यति[8] तदा यामो नार्वाक् । तत्किं विस्मृतम् ? । जिह्वे किं वो द्वे स्तः ? । आचार्या जगदुः–श्रीधर्मदेव ! मम प्रतिज्ञा पूर्णा । राजाऽऽह–कथम् ? । सूरिर्वदति–आमो राजाऽत्र स्वयमागतस्तव दृष्टौ । राजाऽऽह–कथं ज्ञायते ? । सूरिः–यदा भवद्भिः पृष्टं भवतां स्वामी कीदृशः ? । विशिष्टैस्तदा भणितम्–स्थगिकाधररूपः । तथा 'बीजउरा' शब्दोऽपि विमृश्यताम् । 'दोरा'शब्दोऽपि यो मयोक्तोऽभूत् । तस्मात्प्रतिज्ञा मे पूर्णा । अत्रान्तरे केनापि राजद्वाराद् आमकङ्कणं धर्मनृपहस्ते दत्तं आमनामाङ्कितम् । द्वितीयं वेश्यया दत्तम् । तद् दृष्ट्वा नष्टसर्वस्वस्तद्धन[9] इव धर्मः शुशोच–धिग्माम् ! यन्मया शत्रुः स्वगृहमायातो नार्चितः, न च साधितः[10] । धर्मेण मुत्कलिताः सूरयः पुरः क्वापि स्थितेनामेन सह जग्मुः । मार्गे गच्छता आमेन पुलिन्द[11] एको जलाशयमध्ये जलं छगलवन्मुखेन पिबन्दृष्टः । आमराजेन सूरीणामग्रे एत्योक्तम्–

९७. पसु जेम पुलिंदउ पउ पियइ पंथिउ[12] कवणिण कारणिण ।

सूरिभिरभाणि–

कर वे वि करंविअ कज्जलिण मुद्धह अंसु निवारणिण ॥ ३७ ॥

राज्ञा प्रत्ययार्थं स समाकार्य पृष्टः । तेनोक्तम्–सत्यं सूरिवचः । हस्तौ दर्शितौ । राजा तेन वाक्संवादेन प्रीतः । 'अज्जवि सा परितप्पइ' इत्यादि तदुक्तं सर्वं सारस्वतविलसितमिति निरवैपीत् । शीघ्रशीघ्रं गोपालगिरिं गतः । पताकातोरणमञ्चप्रतिमञ्चादिमहास्तत्रासुः । दिवसाः कत्यप्यतिक्रान्ताः ।

§ ३९) ततः श्रीसिद्धसेनसूरयो वार्द्धक्येन पीडिता अनशनं गृहीतुकामाः श्रीबप्पभट्टिसूरीणामाकारणाय गीतार्थमुनियुगलं प्रैपिपुः[13] । तद् गुरोर्लेखमदीदृशत् । तत्र लिखितं यथा–

९८. अध्यापितोऽसि पदवीमधिरोपितोऽसि तत्किञ्चनापि कुरु वत्सक ! बप्पभट्टे ! ।
प्रायोपवेशनरथे विनिवेश्य येन सम्प्रेषयस्यमरधाम नितान्तमस्मान् ॥ ३८ ॥

1 BD मलावा । 2 PC धणि उत्तावली । 3 C प्रिय । 4 BD ०सिणेहा । 5 P विरहि जो मणु सुमरइ, D विरहि जइ माणु० । 6 BD नहोरा । 7 C किन्न । † P पुस्तकस्थः प्रक्षिप्त- पाठोऽयम् । 8 BDP ०आह्वयति । 9 BP तद्वन; C तद्धन । 10 CP आदर्शे एतत्पदं प्राप्यते नान्यत्र । 11 D पुलीन्द्रः । 12 A पंथिअ । 13 प्रैपिष्ट ।

तद् दृष्ट्वा आमभूपतिमापृच्छ्य मोढेरकपुरं ब्रह्मशान्तिस्थापितवीरजिनमहोत्सवाढ्यं प्रापुस्ते। गुरून् ववन्दिरे। गुरवोऽपि तान् बाढमालिङ्ग्यालापिषुः—वत्स! गाढमुत्कण्ठितमस्माकं हृदयम्। मुखकमलकमपि ते विस्मृतम्। राजानुगमनं तेऽस्माकं दुःखायासीत्। कारय साधनाम्। अनृणो भव। ततोऽन्त्याराधना चतुःशरणगमन-दुष्कृतगर्हा-सुकृतानुमोदना-तीर्थमालावन्दनादिका
5 विधिना विधापिता। गुरवो देवलोकललनानयनत्रिभागपात्रत्वमानञ्जुः। शोक उच्छलितः। ततो बप्पभट्टिः श्रीमद्गोविन्दसूरये श्रीनन्नसूरये च गच्छभारं समर्प्य श्रीआमपार्श्वमगमत्[1]। पूर्ववत्समस्यादिगोष्ठ्यः स्फुरन्ति।

§४०) एकदा सूरिर्नृपसभायां चिरं पुस्तकाक्षरदत्तदृक् तस्थौ। तत्रैका नर्त्तकी नृत्यन्ती आसीत् रूपदासीकृताप्सराः। सूरिर्दृग्नीलि[2]निवारणाय तस्याः शुकपिच्छनीलवर्णायां नील-
10 कञ्चुलिकायां दृशं निवेशयामास। आमस्तद्[3] दृष्ट्वा मनसि पपाठ—

९९. सिद्धंततत्तपारंगयाण जोगीण जोगजुत्ताणं। जइ ताणं पि मयच्छी मणंमि ता तच्चिय पमाणं॥ ३९॥

आमो रात्रौ पुंवेषां तां नर्त्तकीं सूरिवसतौ प्रैषीत्। तया सूरीणां विश्रामणाऽऽरब्धा। करस्पर्शेन ज्ञाता युवतिः सूरिणा। अभिहिता सा—का त्वम्?, कस्मादिहागता?। अस्मासु ब्रह्मव्रतनिबिडेषु वराकि! भवत्याः कोऽवकाशः।'वात्याभिर्न चलति काञ्चनाचलः।' तयोक्तम्—भवद्भ्य
15 उपदेष्टुमागता।

१००. राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्। सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥ ४०॥

इति। किञ्च—

१०१. प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः। प्राप्यते येन निर्वाणं सरागेणापि चेतसा॥ ४१॥

श्रीआमेन प्रेषिताऽहं प्राणवल्लभा भवतां शुश्रूषार्थम्। ततः सूरिशक्रो वदति स—अस्माकं
20 ज्ञानदृक्प्रपातदृष्टद्रष्टव्यानां नैव व्यामोहाय प्रगल्भसे।

१०२. मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम्। रतिं करोति को नाम सुधीर्वर्चोगृहेष्विव॥ ४२॥

सापि निर्विकारं सूरिवरं निश्चित्य ध्वनच्चेताः प्रातर्नृपतिसमीपं गता। पृच्छते राज्ञे रात्रीयः सूरिवृत्तान्तः सम्यक् कथितस्तया—पाषाणघटित इव तव गुरुः। नवनीतपिण्डमयः शेषो[4]'वराको लोकः। यावन्तः कूटप्रपञ्चा हावभाव-कटाक्ष-भुजाक्षेप-चुम्बन-नखरदनक्षता[5]दिविलासास्ते सर्वे
25 आजन्मशिक्षितास्तत्र प्रयुक्ताः। पुनस्तिलतुषत्रिभागमात्रमपि मनोऽस्य नाचालीत्। अनुराग-बलात्कार-पूत्कार-भीदर्शन-हत्यादानादिबिभीषिकाभिरपि नाक्षुभत्। तदेष मन्ये महावज्रमयो न देवकन्याभिर्न विद्याधरीभिर्न नागाङ्गनाभिश्चाल्यते; मानुषीणां तु का कथा?। अस्मिन्सूरेर्ब्रह्मस्थैर्ये श्रुते नृपो विस्मयानन्दाभ्यां कदम्बमुकुलस्थूलरोमाञ्चकञ्चुकितगात्रः संवृत्तः। दध्यौ च गुरुं ध्यानप्रत्यक्षं कृत्वा—

30 १०३. न्युञ्छने यामि वाक्यानां दृशोर्याम्यवतारणे। बलिः क्रियेऽहं सौहार्दहृद्याय हृदयाय ते॥ ४३॥

प्रातर्गुरवः समागुः। राजा ह्रीणो न वदति किञ्चित्। सूरिभिर्भणितम्—राजन्! मा लज्जिष्ठाः। महर्षीणां दूषण-भूषणान्वेषणं राज्ञा कार्यं न दोषः। राज्ञोक्तम्—अलमतीतवृत्तान्तचर्चया। एत-दहमुत्तम्भितभुजो ब्रुवे युष्मान्ब्रह्मधनानवलोक्य—

1 A आगत। 2 A दृग्मीलि०। 3 CP तथा। 4 P नास्ति 'वराको'। 5 D नखदन्ताक्षता०।

१०४. धन्यास्त एव [1]धवलायतलोचनानां तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम् ॥ ४४ ॥

इत्युक्त्वा दण्डप्रणामेन प्रणनाम श्रीआमः ।

अन्येद्यू राजा राजपथेन सञ्चरमाणो हालिकप्रियां एरण्डवृहत्पत्रसंवृतस्तनविस्तरां एरण्डपत्राणि विचिन्वानां गृहपाश्चात्यभागे दृष्ट्वा गाथार्द्धं योजितवान्- 5

१०५. वइविवरनिग्गयदलो एरंडो [2]साहइ व्व तरुणाणं ।

तच्च सूरीणां पुरः समस्यात्वेन समर्पितवान् । सूरय ऊचुः-

इत्थ घरे हलियवहू [3]इद्दहमित्तत्थणी अत्थि ॥ ४५ ॥

राजा विस्मितः-अहो सारं सारस्वतम् ! ।

अन्यदा सायं प्रोषितभर्तृकां वासभवनं यान्तीं वक्रग्रीवां दीपकरां ददर्श । गाथार्द्धं चोचे- 10

१०६. दिज्जइ वंकग्गीवाइ दीवओ पहियजायाए ।

सूर्यग्रे पपाठ । सूरिर्गाथापूर्वार्द्धमुवाच-

पियसंभरणपलुट्टंतअंसुधारानिवायभीयाए ॥ ४६ ॥

इति सूरिभूपौ सुखेन कालं गमयतो धर्मपरौ ।

§ ४१) अन्यदा धर्मनृपेण आमनृपस्य पार्श्वे दूतः प्रहित एत्यावोचत्-राजन् ! तव विच- 15 क्षणतया धर्मनृपः सन्तुष्टः । पुनः स आह-भवद्भिर्वयं छलिताः । यतो भवद्भ्यो गृहमागतेभ्यो नास्माभिर्महानल्पोऽपि कोऽपि सत्कारः कृतः । अधुना शृणु-अस्मद्राज्ये वर्द्धनकुञ्जरो नाम महावादी बौद्धदर्शनी विदेशादागतोऽस्ति । स वादं जिघृक्षुः । यः कोऽपि वो राज्ये वादी भवति स आनीयताम् । अस्माकं भवद्भिः सह [4]चिरन्तनवैरम् । यः कोऽपि वादी विजयी भविष्यति तत्प्रभुरपरस्य राज्यं ग्रहीष्यति । मम वादिना यदा जितं तदा त्वदीयं राज्यं मया ग्राह्यम् । 20 यदा तव वादिना जितं तदा मदीयं राज्यं त्वया ग्राह्यम् । अयं पणः । वाग्युद्धमेवास्तु । किं मानवकदनेन[5] ? । आमेनोक्तम्-दूत ! त्वया यदुक्तं तद्धर्मेण कथापितमथवा त्वया स्वतुण्डकण्डूतिमात्रेणोक्तम् ? । यदि तव प्रभुः सप्ताङ्गं राज्यं वादे जिते समर्पयिष्यति मे इति सत्यम्, तदा वयं वादिनमादायागच्छाम इति । दूतेनोक्तम्-कारणवशाद् युधिष्ठिरेणापि द्रोणपर्वण्यसत्यं भाषितम्; मत्प्रभुस्तु कारणेऽपि न मिथ्या भाषते । आमेन दूतः प्रैषि । उक्तदिनोपरि 25 वप्पभट्टिं गृहीत्वाऽर्द्धपथे उक्तस्थाने आमोऽगमत् । धर्मभूपतिरपि वर्द्धनकुञ्जरं वादीन्द्रमादाय तत्राजगाम । परमारवंश्यं नरेन्द्रं महाकविं वाक्पतिनामानं स्वसेवकं सहादाय समाययौ[6] । उचितप्रदेशे आवासान् दापयामास । तौ वादि-प्रतिवादिनौ पक्ष-प्रतिपक्षपरिग्रहेण वादमारेभाते । सभ्याः कौतुकाक्षिप्ताः पश्यन्ति । द्वावप्यसामान्यप्रतिभौ ज्ञौ[7] । वादे षण्मासा गताः । द्वयोः कोऽपि न हारयति न जयति च । आमेन सूरयः प्रोक्ताः सायम्-राजकार्याणां 30 प्रत्यूहः स्यात्, निर्जीयतामसौ शीघ्रम् । सूरिणा भणितम्-[8]प्रातर्निग्रहीष्यामि । मा स्म वो भ्रान्तिर्भूयात् । रात्रौ सूरीश्वरेण मन्त्रशक्त्या मण्डले हारार्द्धहारमणिकुण्डलमण्डिताङ्गी दिव्याऽङ्गरागवसना दिव्यकुसुमपरिमल[9]वासितभुवनोदरा भगवती भारती साक्षादानीता । चतुर्दशभिः

---

1 A तरलाय० । 2 D साहाइ व्व, B तरुणीणं । 3 A इदीए । 4 CP चिरत्न० । 5 P कदर्थनेन । 6 P बिना सर्वत्र 'समानिन्ये' । 7 P 'ज्ञौ' नास्ति । 8 AB प्रभाते । 9 D ०मलललितभुव० ।

काव्यैः सद्यस्कैर्दिव्यैः स्तुता । देव्योक्तम्–वत्स ! केन कारणेन स्मृता ? । सूरिवीरेण भणितम्–
षण्मासा वादे लग्नाः । तथा कुरु यथा वादे निरुत्तरीभवति सः । देव्या गदितम्–वत्स ! अह-
मनेन प्राक् सप्तभवानाऽऽराधिता । मयाऽत्र भवेऽस्मै अक्षयवचना गुटिका दत्ताऽस्ति । तत्प्र-
भावाच्चक्रिनिधिधनमिव नास्य वचो हीयते । सूरिणोक्तम्–त्वं देवि ! किं जैनशासनविरोधिनी,
5 येन मे जयश्रियं न दत्से ? । भारत्यूचे–वत्स ! जयोपायं ब्रुवे । त्वया वादारम्भे प्रातः सर्वे वद-
नशौचं काराप्याः पार्षद्याः । गण्डूषं कुर्वतस्तस्य वदनाद् गुटिका ममेच्छया पतिष्यति तदा
त्वया जेष्यते । एकं तु याचे–मत्स्तुतेश्चतुर्दशकाव्यं कस्याप्यग्रे न प्रकाश्यम् । तत्पठनेन हि
मया ध्रुवं ध्रुवं प्रत्यक्षया भाव्यम् । कियतां प्रत्यक्षा भवामि ? । क्लेशेनालम् । एवमुक्त्वा देवी विद्यु-
ज्झात्कारलीलयाऽन्तर्दधे । सूरिभिर्निशि परमाप्तशिष्य एको वाक्पतिराजसमीपं प्रहित्याख्या-
10 पितं यथा–सूरयो वदन्ति–राजन् ! त्वं विद्यानिधिरस्माकं लक्षणावतीपुरीपरिचितचरः । तदाऽ-
वादीः–भगवन् ! निरीहा भवन्तः, कां भवद्भ्यो भक्तिं दर्शयामि । तदा वयमवोचाम–अवसरे
कामपि भक्तिं कारयिष्यामः । भवद्भिर्भणितम्–तथास्तु । इदानीं सोऽवसरोऽत्र समायातः ।
वाक्पतिना शिष्यः पृष्टः–सूरयः किं मे समादिशन्ति ? । आदिष्टं कुर्वे ध्रुवम् । शिष्यो न्यवेद-
यत्–राजन् ! गुरवः आदिशन्ति–प्रातर्धर्मामयोः सदःस्थयोः सतोस्त्वया वाच्यं यथा–वदन-
15 शौचं विना भारती न प्रसीदति । तस्माद्वादि-प्रतिवादि-सभ्य-सभेशाः सर्वे शौचं कुर्वन्तु । एता-
वति कृते भवता नः सर्वः स्नेहः कृत एव । वाक्पतिना तदङ्गीकृतम् । शिष्येणोपगुरु गत्वा
तत्तत्प्रतिज्ञातं कथितम् । तुष्टाः गुरवः । प्रत्यूषे उदयति भगवति गभस्तिमालिनि लाक्षालिप्त
इव प्राचीमुखे राजानौ सभायामगाताम् । वाक्पतिना वदनशौचं सर्वे कारिताः, बौद्धवादी-
न्द्रोऽपि । तस्य वदनकमलाद्विगलिता गुटिका अपतत्[1] पतद्ग्रहे । बप्पभट्टिशिष्यैः पतद्ग्रहो
20 जनैर्दूरे कारापितः । गुटिका सूरीन्द्रसाज्जाता । बौद्धो गुटिकाहीनः सूरिणा पार्थेन कर्ण इव दिव्य-
शक्तिमुक्तो निःशङ्कं वाक्पृषत्कैर्हतः । निरुत्तरीकृतः । राहुग्रस्तश्चन्द्र इव हिमानीविलुप्तस्तरुखण्ड
इव निस्तेजतां भेजे । तदा श्रीबप्पभट्टेर्निर्विवादं वादिकुञ्जरकेसरीति विरुदं स्वैः परैश्च दत्तम् ।
धर्मेण सप्ताङ्गं राज्यं आमाय दत्तम् । लाहीदम् । धर्माद्धि राज्यं लभ्यते । काऽत्र चर्चा ? । आमेन
गृहीतम् । तदा सूरिणा आमः प्रोक्तः–राजन् ! पुना राज्यं धर्माय देहि । महादानमिदम् । शोभते
25 च ते । राजस्थापनाचार्यांश्च पारंपर्येण[2] । [3]पूर्वं श्रीरामेण वनस्थेनापि सुग्रीव-बिभीषणौ राजीकृतौ ।
त्वमप्यैदं[4]युगीननृपेषु तत्तुल्यः । एतद्वचनसमकालमेव आमेन गाम्भीर्यौदार्यधाम्ना धर्माय तद्राज्यं
प्रत्यर्प्य[5] स[6] परिधापितः । स्वे मत्ताः करिणः शतं, सहस्रं तुङ्गास्तुरङ्गाः, सहस्रं सवरूथा रथाः,
शतं वादित्राणि प्रादायिषत । स्वं स्वं स्थानं गताः सर्वे । सूरि-भूपौ यशोधवलितसप्तभुवनौ
गोपगिरौ श्रीमहावीरमवन्दिषाताम् । तदा सूरिकृतं श्रीवीरस्य स्तवनम्–'शान्तो वेषः शमसु-
30 खफला' इत्यादि काव्यै[illegible]दशकमयमद्यापि सङ्घे पठ्यते । सङ्घेन प्रभुर्ववन्दे, तुष्टुवे च ।

१०७. रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयग्रहः । न तमांसि न तेजांसि यस्मिन्नभ्युदिते[7] सति ॥ ४७ ॥

अन्यदा स्व-परसमयसूक्तैः प्रबोध्य राजा प्रभुभिर्मद्यमांसादिसप्तव्यसननियमं ग्राहितः[8] ।

---

1 नास्ति P । 2 P नास्ति । 3 P यूय । 4 P ०प्यैव युगीन० । 5 D प्रत्यर्पि । 6 B स धर्मः । 7 D ०भ्युदये । 8 P कारित ।

सम्यक्त्वमूलैकादशव्रतनिरतश्च श्रावकः कृतः । द्वादशं व्रतं त्वतिथिसंविभागाख्यं प्रथमचरमजिननृपाणां निषिद्धं सिद्धान्ते ।

§४२) एकदा लक्षणावत्यां बौद्धो वर्द्धनकुञ्जरो धर्मनृपमाह सगद्गदम्–अहं वप्पभट्टिना जितस्तन्मे न दूषणम् । वप्पभट्टिर्हि भारती नररूपा, प्रज्ञामयः पिण्डः, गीष्पुत्रः, न च दुनोति । एतच्च दुनोति यत्तव भृत्येनापि वाक्पतिराजेन सूरिकृतभेदान्मम मुखशौचोपायेन गुटी हारयामाहे । एतावदभिधाय स तारं तारं रुरोद । स निवारितः क्ष्मापेन रोदनात् । उक्तश्च–किं क्रियते ?, अयं नश्चिरसेवकोऽनेकसमराङ्गणलब्धजयप्रतिष्ठः प्रबन्धकविः पराभवितुं न रोचते । क्षमस्वेदमस्यागः । ततो बौद्धो जोषं स्थितः ।

§४३) अपरेद्युर्यशोधर्मनाम्ना समीपदेशस्थेन बलवता भूपेन लक्षणावतीमेत्य रणे धर्मनृपो व्यापादितः । राज्यं जगृहे । वाक्पतिरपि बन्दीकृतः । तेन कारास्थेन 'गौडवध' सञ्ज्ञकं प्राकृतं महाकाव्यं रचयित्वा यशोधर्माय राज्ञे दर्शितम् । तेन गुणविशेषविदा ससत्कारं बन्देर्मुक्तः, क्षमितश्च । 'विद्वान् सर्वत्र पूज्यते' । ततो वाक्पतिर्वप्पभट्टिसमीपं गतः । द्वयोस्तयोर्मैत्री पूर्वमप्यासीत् । तदानीं विशेषतोऽवृधत् । †तेन वाक्पतिना मद्दामद्दविजयाख्यं प्राकृतं महाकाव्यं बद्धम् । आमाय दर्शितम् । आमो हैमटङ्कलक्षमस्मै व्यशिश्रणत् ।†

१०८. कियती पञ्चसहस्री कियती लक्षा च कोटिरपि कीयती[3] । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥४८॥

§४४) अपरेद्युः प्रभुः श्रीआमेन पृष्टः–भगवन् ! यूयं तावत्तपसा विद्यया च लोके लब्धपरमरेखाः । किमन्योऽपि[4] कोऽपि क्वाप्यास्ते यो भवत्तुलालेशमवाप्नोति । वप्पभट्टिरभाणीत्–अवनिपते ! मम गुरुबान्धवौ गोविन्दाचार्य-नन्नसूरी सर्वैर्गुणैर्मदधिकौ गूर्जरधरायां मोढेरकपुरे स्तः । गुणोत्कण्ठयामितसैन्य आमस्तत्र गतः । तदा नन्नसूरिर्व्याख्याने[5]ऽवसरायातान् वात्स्यायनोक्तान् कामाङ्गभावान् पल्लवयन्नासीत् । राज्ञा श्रुतं तत्सर्वम् । अरूचिरुत्पन्ना–अहो ! वयं कामिनोऽपि नैतान् भावान् विद्मः । अयं तु वेत्ति सम्यक् । तस्मादयमवश्यं नित्यं योषित्सङ्गी । किमस्य प्रणामेन ?–इत्यकृतनतिरेवोत्थायाशु गोपगिरिमागात् । चिराद् दृष्टः क्ष्माप इति रणरणकाक्रान्तस्वान्ताः प्रभवो वन्दापयितुमैयरुः । राजा निरादरो न वन्दते तथा । एवं दिनानि कतिपयानि गतानि । एकदा गुरुभिः पप्रच्छे–राजन् ! यथा पुरा भक्तोऽभूस्तथेदानीं भक्तो नासि । किमस्माकं दोषः कोऽपि ? । राजा स्माह–सूरिवर ! भवादृशा अपि कुपात्रश्लाघां कुर्वते । किमुच्यते[6] ? । सूरिभिरूचे[7]–कथम् ? । आमः प्राह–यौ भवद्भिः स्वौ गुरुबान्धवौ स्तुतौ । तत्र गत्वा एको नन्नसूरिनामा दृष्टः शृङ्गारकथाव्याख्यानलम्पटस्तपोहीनो लोहनरण्डतुल्यो मज्जति मज्जयति च भवाम्बुधौ[8] । तस्मान्न किञ्चिदेतत् । सूरयो मसीमलिनवदनाः स्ववसतिमगुः[9] । तत्रोपविश्य द्वौ साधू मोढेरकपुरं प्रहितौ । तत्पार्श्वात्तत्र कथापितम्–आमोऽकृतप्रणामो भवत्पार्श्वादागतः । एवमेवं युवां निन्दति । तत्कर्तव्यं येनासौ भवत्स्वन्येष्वपि श्रमणेषु अवज्ञावान्न भवति[10] । सर्वं तत्रत्यं ज्ञात्वा तौ द्वावपि गुटिकया वर्ण-स्वरपरावर्त्तं कृत्वा नटवेषधरौ गोपगिरिमीयतुः । श्रीऋषभध्वजचरित्रं नाटकत्वेन बबन्धतुः । नटान् शिक्षयामासतुः । आमराजमवसरं ययाचतुः । राज्ञाऽवसरो दत्तः । मिलिताः सामा-

1 AB राजेन्द्राय । 2 D ०भट्टेः । † एतद्दण्डान्तर्गत कथनं ABD आदर्शे नास्ति, CEP आदर्शे च लभ्यते । 3 पतितमिदं P पुस्तके । 4 BD ०मन्यः कोऽपि । 5 D व्याख्यानावस० । 6 P नास्ति । 7 AB सूरिरूचे । 8 A भवाब्धौ । 9 A भगुः । 10 BD भवेत् ।

जिकाः तत्तद्रसभावज्ञाः। ताभ्यां नाटकं दर्शयितुमारेभे। भरत-बाहुबलिसमरावसरोऽभिनीयते। यदा व्यूहरचना-शस्त्रझलत्कार[1]-वीरवर्णना-भट्टकोलाहलाश्चोत्थापनघर्घरिका-झणझणत्कारादि ताभ्यां वर्णयितुमारब्धम्, धारारूढश्च रसोऽवातारीत्; तदा श्रीआमस्तद्भटाश्च कालिन्दीप्रवाहश्यामदीर्घानसीनाकृष्योत्थिता 'हत[2] हत' इति भाषन्ते स्म। अत्रान्तरे नन्नसूरि-गोविन्दाचार्यौ स्वरूपमुद्रे प्रकाश्याहतुः–राजान्! भटाः! शृणुत २ कथायुद्धमिदम्, न तु साक्षात्। अलं सम्भ्रमेण। इत्युक्ता लज्जिता विस्मिताश्च ते राजाद्याः संवृत्याकारमस्थुः। तदा गोविन्दाचार्य-नन्नसूरिभ्यां भूपोऽभाणि–किल शृङ्गारानुभविनो वयमिति सम्यग्व्याख्यातुं विद्मः। किन्तु समराजिरमपि भवद्वत्प्रविष्टाः स्मः। कुरङ्गा इव शस्त्रे दृष्टेऽपि बिभिमः। आबाल्याद् गृहीतव्रताः पापभीरवः, परं भारतीप्रभावप्रभववचनशक्त्या रसान् सर्वान् जीवद्रूपानिव दर्शयामः। राजन्! मोढेरके यैस्ते वात्स्यायनभावा व्याख्याताः, ते वयं नन्नसूरय इमे च गोविन्दाचार्याः। भवतां तदा[3] मृषा विकल्पः समजनि। राजा सद्यो ललज्जे। तौ सूरी क्षमयामास, आनर्च बप्पभट्टिं च। तौ कतिचिद्दिनानि उपराजं स्थित्वा बप्पभट्टेरनुज्ञया पुनर्मोढेरपुरमगाताम्। गतः समयः कियानपि।

§४५) अन्यदा गाथकवृन्दमागतम्। तन्मध्ये बालिकैका सनालनीलोत्पललोचना मृगाङ्कमुखी किन्नरस्वरा विदुषी गायति। तां[5] दृष्ट्वा मदनशर[6]ज्वरजर्जरः गलितविवेको गतप्रायशौचधर्माभिनिवेशः कन्यकुब्जेशः पद्यद्वयं प्रभुप्रत्यक्षमपाठीत्–

१०९. वक्त्रं पूर्णशशी सुधाधरलता दन्ता मणिश्रेणयः, कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः।
वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा, तत्किं चन्द्रमुखि! त्वदर्थममरैरामन्थि दुग्धोदधिः ॥४९॥

११०. जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो, दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति।
विश्वप्रार्थ्यः सकलसुरभिद्रव्यदर्पापहारी, नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः[7] ॥ ५० ॥

सूरिभिश्चिन्तितम्–अहो! महतामपि किदृग् मतिविपर्यासः!।

१११. भस्त्रा काचन भूरिरन्ध्रविगलत्तत्तन्मलक्लेदिनी, सा संस्कारशतैः क्षणार्द्धमधुरां बाह्यामुपैति द्युतिम्।
अन्तस्तत्त्वरसोर्मिधौतमतयोऽप्येतां तु[8] कान्ताधिया, श्लिष्यन्ति स्तुवते नमन्ति च पुरः कस्मात्र पूत्कुर्महे ॥५१॥

उत्थिता सभा। त्रिभिर्दिनैर्भूपेन पूर्वहिः सौधं कारितम्[9], मातङ्गीसहितोऽत्र वत्स्यामीति धिया। तदवगतं श्रीबप्पभट्टिसूरिभिः। ध्यानप्रत्यक्षं हि तेषां जगद्वृत्तम्। ततो माऽसौ कुकर्मणा[10] नरकं[11] यासीदिति कृपया तैर्निष्पाद्यमानसौधभारपट्टे निशि खटिकया बोधदानि पद्यानि लिखितानि। यथा–

११२. शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता, किं ब्रूमः शुचितां भवन्त्यशुचयस्त्वत्सङ्गतोऽन्ये यतः।
किंवाऽतः[12] परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां, त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥५२॥

११३. *सद्वृत्त सद्गुण महार्घ्य महार्हकान्त कान्ताघनस्तनतटोचितचारुमूर्ते!।
आः पामरीकठिनकण्ठविलग्नभग्न हा हार! हारितमहो भवता गुणित्वम् ॥ ५३ ॥

1 E शस्त्ररणरणत्कार। 2 B हन हन। 3 ABD निदा। 4 P तमाल०। 5 P तद्। 6 CP मदनज्वर०। 7 B कस्तूरिकायाम्। 8 PC नु। 9 B कारापितम्। 10 BP नास्ति। 11 P नरकमयासी०। 12 BD किञ्चातः।
* BD आदर्शे नास्ति पद्यमिदम्।

११४. जीयं जलबिन्दुसमं संपत्तीओं तरंगलोलाओ । सुमिणयसमं व पिम्मं जं जाणसि तं करिज्जासि ॥ ५४ ॥
११५. लज्जिज्जइ जेण जणे मइलिज्जइ निअकुलक्कमो जेण । कंठट्ठिए वि जीए तं न कुलीणेहिं कायव्वं ॥ ५५ ॥

प्रातरमूनि पद्यानि स्वयमामो ददर्श । वर्णान् कवित्वगतिं च उपलक्षयामास । अहो गुरूणां मयि कृपा! अहोतमां मम पापाभिमुखता!–इति ललज्जे । दध्यौ च–साङ्कल्पिकमिदं जनङ्गमीसङ्गमपापं मयाऽऽचरितम् । भारितोऽहं क्व यामि ?, किं करोमि ?, कथं गुरोर्मुखं दर्शयामि ?, किं तपः समाचरामि ?, किं तीर्थं सेवे ? । ऊर्ध्वं मुखं गृहीत्वा गच्छामि ?, कूपे पतामि ?, शस्त्रेणात्मानं घातयामि ? । अथवा ज्ञातम्–सर्वजनसमक्षं पापमुद्गीर्य काष्ठानि भक्षयामि । एवं टलवलायमानोऽनुचरानादिदेश–अग्निं प्रगुणयत । प्रगुणितस्तैरग्निः । समागताः श्रीबप्पभट्टिसूरयः । मेलितं चातुर्वर्ण्यम् । उक्तं तदघम् । यावत्सहसा कृशानुं[1] प्रवेक्ष्यति आमस्तावत्सूरिभिर्बाहौ धृत्वोक्तः– राजन्! शुद्धोऽसि । मा स्म खिद्येथाः । त्वया हि सङ्कल्पमात्रेण तत्पापं कृतं न साक्षात् । सङ्कल्पेनाग्निमपि प्रविष्टोऽसि । चिरं धर्मं कुरु ।

११६. मनसा मानसं कर्म वचसा वाचिकं तथा । कायेन कायिकं कर्म निस्तरन्ति मनीषिणः ॥ ५६ ॥

इति वचनाद्विसृष्टोऽग्निः । जीवितो राजा । तुष्टो लोकः । प्रीतः सूरिः ।

§४६) समयान्तरे वाक्पतिराजो मथुरां ययौ । तत्र श्रीपादस्त्रिदण्डी जज्ञे सः । तल्लोकादवगम्य आमः सूरीन् बभाषे–भवद्भिरहमपि श्रावकः कृतः । दिव्या वाणी वः प्रसन्नैव । जानामि वः शक्तिपरमरेखां यदि वाक्पतिमप्यार्हतदीक्षां ग्राहयथ । आचार्यैः[2] प्रतिज्ञा चक्रे–तदा विद्या मे प्रमाणं यदि वाक्पतिं सशिष्यं श्वेताम्बरं कुर्वे । वाक्पतिस्तु क्वास्ति, इति उच्यताम् । राज्ञोक्तम्– मथुरायां विद्यते । सूरयो मथुरायां गता बहुभिः श्रीआमासनरैः सह । वराहमन्दिराख्ये प्रासादे ध्यानस्थं वाक्पतिं गत्वाऽद्राक्षुः । तत्पृष्ठस्थैः सूरिभिस्तारस्वरेण आशिर्वादाः पठितुमारब्धाः–

११७. सन्ध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे, धत्से यच्च परां[3] विलज्ज ! शिरसा तच्चापि सोढं मया ।
श्रीर्जाताऽमृतमन्थनाद्यदि[4] हरेः कस्माद्विषं भक्षितं, मा स्त्रीलम्पट ! मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥५७॥

११८. एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः, पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं, शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ५८ ॥

११९. रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु,-र्वाचा पञ्चवटीवने विचरतस्तस्याहरद्रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुंकारिणः शृण्वतः, पूर्वस्मर्तुरवन्तु कोपकुटिला भ्रूभङ्गुरा दृष्टयः ॥ ५९ ॥

१२०. उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना सौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ६० ॥

एवं बहु पेठे । अथ वाक्पतिर्ध्यानं विसृज्य सम्मुखीभूय सूरीनाह–हे बप्पभट्टिमिश्राः ! यूयं किमस्मत्पुरतः शृङ्गाररौद्राङ्गं पद्यपाठं कुरुध्वे ? । बप्पभट्टयः प्राहुः–भवन्तः सांख्याः ।

१२१. सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः । सर्वेषामपि तेषां स्यात्[5] तत्त्वानां पञ्चविंशतिः ॥ ६१ ॥

---

1 PC अग्निं । 2 AB आचार्येन्द्रैः । 3 P नदीं । 4 BD मन्थने यदि । 5 P नास्ति 'स्यात्' ।

इति ज्ञात्वा भवदभिमतदेवताशिषः पठन्तः स्म । यथारुचि हि श्रोतुः पुरः पठनीयं सम-यज्ञैः । वाक्पतिराह–यद्यप्येवं तथापि मुमुक्षवो वयमासन्ननिधनं ज्ञात्वा इह परमब्रह्म ध्यातुमा-याताः स्म । बप्पभट्टयो जगदुः–किं तर्हि रुद्रादयो मुक्तिदातारो न भवन्तीति मनुध्वे ? । वाक्-पतिः प्राह–एवं सम्भाव्यते । बप्पभट्टयो बभाषिरे–तर्हि यो मुक्तिदानक्षमस्तं शृणु । पठामि ।
5 स जिन एव ।

१२२. मदेन मानेन मनोभवेन क्रोधेन लोभेन ससम्मदेन ।
पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ॥ ६२ ॥

१२३. जं दिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं, आयारो पसमायरो परियरो संतो पसन्ना[1] तणू ।
तं मन्ने जरजम्ममच्चुहरणो देवाहिदेवो जिणो[2], देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ ६३ ॥

10 इत्यादि बहु पेठे । वाक्पतिः प्राह–स जिनः क्वास्ते ? । सूरिः–स्वरूपतो मुक्तौ मूर्तितस्तु जिना-यतने । वाक्पतिर्ब्रूते–प्रभो ! दर्शय तम् । प्रभुरपि आमनरेन्द्रकारिते प्रासादे तं निनाय । स्वयं प्रतिष्ठितवरं श्रीपार्श्वनाथमदीदृशत् । शान्तं कान्तं निरञ्जनं रूपं दृष्ट्वा प्रबुद्धो बभाषे[3]–अयं निर-ञ्जनो देव आकारेणैव लक्ष्यते । तदा[4] बप्पभट्टिसूरिभिर्देव-गुरु-धर्मतत्त्वान्युक्तानि । रञ्जितः सः । मिथ्यात्ववेषमुत्सृज्य जैन ऋषिः श्वेताम्बरोऽभूत् । जिनमवन्दिष्ट, अपाठीच्च–

15 १२४. मयनाहिं[5]सुरहिएणं इमिणा किं किर[6] फलं णलाडेणं । इच्छामि अहं जिणवर[7] पणामकिणकलुसियं काउं ॥६४॥

१२५. दोवि गिहत्था धडहड वचइं को किर कस्स वि पत्त भणिज्जइं ।
सारंभो सारंभं पुज्जइ कद्दमु कद्दमेण किमु[7] सुज्झइ ॥ ६५ ॥

प्रत्यासन्ने[8] आयुषि [9]मथुराचातुर्वर्ण्यस्य आमभूपसचिवलोकस्य च प्रत्यक्षं अष्टादशपापस्था-नानि त्याजितः । नमस्कारं पञ्चपरमेष्ठिमयं श्रावितः । जीवेषु क्षामणां कारितो वाक्पतिः सुखेन
20 त्यक्ततनुर्दिवमगमत् । तत्सर्वं प्रधानैरन्यैरपि प्रथमं ज्ञापितो नृपः । पश्चाद्बप्पभट्टिर्गोपगिरिं गतः । राजाभितुष्टुवे[10] सूरिशक्रम्–

१२६. आलोकवन्तः सन्त्येव भूयांसो भास्करादयः । कलावानेव तु ग्रावद्रावकर्मणि कर्मठः ॥ ६६ ॥

§ ४७) एकदा राज्ञा सूरिः पृष्टः–किं कारणं येनाहं ज्ञातजैनतत्त्वोऽपि अन्तराऽन्तरा तापसधर्मे रतिं बध्नामि ? । सूरिराह–प्रातर्वक्ष्यामः । प्रातरायाताः प्रोचुः–राजन् ! अस्माभिर्भारतीवचसा तव
25 प्राग्भवो ज्ञातः । त्वं कालिञ्जरगिरेस्तीरे शालनामा तपस्वी शालद्रुमाधोभागे द्व्युपवासान्तरित-भोजनस्तपो बहूनि वर्षाण्यतपथाः[11] । स मृत्वा त्वमुत्पन्नः । तस्यातिदीर्घा जटास्तत्रैव लतान्त-रिता अद्यापि सन्ति[12] । तदाकर्ण्य आप्तनरास्तत्र राज्ञा प्रहिताः । तैर्जटा आनीताः । सूरिवाक्-संवादो दृष्टः । भूपतिः सूरीणां पदोर्विलग्य तस्थौ । परमार्हतो बभूव ।

§ ४८) अन्यदा सौधोपरितलस्थेन आमेन क्वापि गृहे भिक्षार्थं प्रविष्टो मुनिर्दृष्टः । तत्र युवति-
30 रेका कामार्त्ता गृहागतं मुनिं परब्रह्मैकचित्तं रिरमयिषुः कपाटसम्पुटं ददौ । मुनिर्नेच्छति ताम् । तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं काकतालीयन्याया[13]दन्धवर्त्तकीन्या-याच्च । राजा तद् दृष्ट्वा सूरये समस्यां ददौ–

---

1 A पसंता । 2 P इमो । 3 P बभाण । 4 AB तथा । 5 P मयनाए । 6 P कर । 7 PC किम । 8 ABD अत्यासन्ने, P अत्यासन्ने । 9 A 'मथुरा' नास्ति । 10 P राजा तुष्टस्तुष्टुवे । 11 AB तस्वा । 12 P॰व्यक्ति । 13 P न्यायेन ।

१२७. कवाडमासज्ञ वरंगणाए अब्भत्थिओ[1] जुव्वणगव्वियाए ।

सूरिः पुरः[2] प्राह–

न मन्निियं तेण जिइंदिएण सनेउरो पव्वइअस्स पाओ ॥ ६७ ॥

अन्यदा[3] प्रोषितभर्तृकाया गृहे भिक्षुः कश्चिद् भिक्षार्थी प्रविष्टः । राज्ञा सौधाग्रस्थेन दृष्टः । तया भिक्षोः पारणायान्नमानीतम् । उपरि काकैर्भक्षितम् । मुनिकस्य दृष्टिस्तस्या नाभौ स्थिता[4] 5 तस्यास्तु दृष्टिस्तन्मुखकमले । आमः सूरये समस्यामार्पिपत्[5] । यथा–

१२८. भिक्खयरो पिच्छइ नाभिमंडलं सावि तस्स मुहकमलं ।

सूरिराह–

दुण्हं पि कवालं चट्टुयं पि काया विलुंपन्ति ॥ ६८ ॥

इति आमः श्रुत्वा चमत्कृतः । अहो सर्वज्ञपुत्रका एते ! । 10

§४९) अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वा उपभूपं गतः । बप्पभट्टिना श्लाघिता तत्कला । नृपात्तेन टङ्ककलक्षं लेभे । लेप्यमयबिम्बचतुष्टयं च कारितम् । एकं मथुरायाम् । एकं मोढेरवसहिकायामणहिल्लपुरे । एकं गोपगिरौ । एकं सतारकाख्यपुरे । तत्र तत्र प्रतिष्ठाः प्रभावनाश्च कारिताः । अन्यदपि बहुकारि ।

§५०) अथ आमगृहे पुत्रो जातः सुलक्षणः । सोत्सवं तस्य दुन्दुकः इति नाम प्रतिष्ठितम् । सोऽपि 15 युवत्वे तैस्तैर्गुणैः पितृवत्पप्रथे । एकदा समुद्रसेनभूपाधिष्ठितं राजगिरिनामदुर्गं आमो रुरोध । अमितं सैन्यं कुद्दालादिसामग्री भैरवादयो यन्त्रभेदाः क्लृप्ताः[6] । प्राकारोऽतिबलेन प्रपातयितुमारेभे । नापतत् । आमः खिन्नः । तेन सूरयः पृष्टाः–अयमभ्रंलिहः प्राकारः कदाऽस्माभिर्ग्राहिष्यते ? । सूरिभिर्बभाषे–तव पुत्रपुत्रो भोजनामाऽमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव । आमस्त्यक्तारम्भः प्राकाराद्बहिर्द्वादशाब्दीमस्थात् । शत्रुदेशमात्मसाच्चक्रे । दुन्दुकगृहे पुत्रो जातः । 20 तस्य भोज नाम ददे । स जातमात्रः पर्यङ्किकान्यस्तो[7] दुर्गद्वाराग्रमानीतः प्रधानैः । तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो विशीर्णः । समुद्रसेनभूपो धर्मद्वारेण निःसृतः । आमो राजगिरिमविक्षत् । प्रजामारो न कृतः । अक्रूरा हि जैना राजर्षयः[8] । दयापरास्ते । रात्रौ आमाय राजगिर्यधिष्ठात्रा[9] भणितम्–राजन् ! यदि त्वमत्र स्थास्यसि तदा तव लोकं हनिष्यामि । आमः प्रत्यूचे –लोकेन हतेन किं ते फलम् ? । यदि हनिष्यसि तदा मामेव घातय । एतन्निर्भयमामवचः श्रुत्वा 25 तुष्टो व्यन्तर उवाच–प्रीतोऽस्मि ते सत्त्वेन । याचस्व किञ्चित् । राजोचे–न किमपि न्यूनं मे; केवलं कदा मे मृत्युः, ब्रूहीदम् । व्यन्तर उवाच–षण्मासावशेषे आयुषि स्वयमेत्य वक्ष्यामि । षण्मासावशेषे आयुषि पुनरागतः सः । राज्ञोक्तम्–कियन्मे आयुः ? । व्यन्तरो वदति–देव !

१२९. गङ्गान्तर्मागधे तीर्थे नावाऽवतरतः सतः । मकाराद्यक्षरग्रामोपकण्ठे मृत्युरस्ति ते ॥ ६९ ॥

षण्मासान्ते इति विद्याः । पानीयान्निर्गच्छन्तं धूमं यदा द्रक्ष्यसि तदा मृत्युर्ज्ञातव्यः । साधना 30 च कार्या पारलौकिकी । इति गदित्वा गतो देवजातीयः । राजा प्रातः सूरिपार्श्वं गतः । सूरिरुवाच–

---

1 A अटभट्टिओ; P अब्भुत्थिओ । 2 P 'पुर.' नास्ति । 3 A अन्यदिने । 4 P पतिता । 5 A अर्पितवान् । 6 P कल्पिताः । 7 P °कान्यास्ते । 8 P महर्षयः राजर्षयश्च । 9 A अधिष्ठात्र्या ।

राजन्! यद्व्यन्तरेण [1]तवाऽग्रे कथितं आयुःप्रमाणं तत्तथैव। धर्मपाथेयं गृह्णीयाः[2]। तदाकर्ण्य भूपस्तुतोष विसिष्मिये[3] च, अहो ज्ञानम्!। अथवा विस्मय एव कः?-सूरस्तेजस्वी, इन्दुराह्लादकः, गङ्गाम्भः पावनम्, जैना ज्ञानिन इति। दिनद्वये गते सूरिः श्रीआमस्य पुरः प्रसङ्गेन श्रीनेमिनाथस्याशीर्वादं पपाठ। यथा-

5 १३०. लावण्यामृतसारसारणिसमा सा भोजसूः[4] खेहला, सा लक्ष्मीः स नवोद्गमस्तरुणिमा सा द्वारिका तद्बलम्।
ते गोविन्दशिवासमुद्रविजयप्रायाः प्रियाप्रेरकाः, यो जीवेषु कृपानिधिर्व्यधित नोद्वाहं स नेमिः श्रिये ॥ ७० ॥

भूयोऽपि-

१३१. मन्त्रैः कुटुम्बजम्बाले यैर्मिथ्याकार्यजर्जरैः। नोज्जयन्ते नतो नेमिस्ते चेज्जीवन्ति के मृताः ॥ ७१ ॥

§९१) तथा रैवतकतीर्थमहिमा सूरिभिर्व्याख्याय पल्लवितः यथा, भूमिमाहत्योत्थाय परिकरं
10 बद्ध्वा सरभसं भूपः प्रतिशुश्राव-रैवतके नेमिमवन्दित्वा मया न भोक्तव्यमिति। लोकैर्निषिद्धः-राजन्! मा मा, दूरे रैवतको गिरिः, मृदवो भवादृशाः। राजाऽह-प्रतिज्ञातं मे न चलति। ततः सह सूरिणा आमः [*लक्षमेकं पृष्ठवाहा वृषभाः, करभसहस्र २०, हस्तिशत ७, अश्वलक्षमेकं, पदातिलक्षत्रयं, श्राद्धकुटुम्बसहस्र २०] सारसैन्यो[5] रैवतकायाचालीत्। स्तम्भतीर्थं यावद्गतः, तावत्[6] क्षुत्तापेन व्याकुलितोऽपि प्राणसन्देहं प्राप्तोऽपि नाहारमग्रहीत्। भीतो लोकः।
15 खिन्नः सूरिः। मन्त्रशक्त्या कूष्माण्डीं देवीं साक्षादानिनाय। तदग्रे कथयामास-तत्कुरु येन राजा जेमति जीवति च। तद्वचनात्कूष्माण्डी बिम्बमेकं महच्छिरसा बिभ्रती गगनेन आमसविधं गता, ऊचे च-वत्स! साऽहमम्बिका। तव सत्त्वेन तुष्टा। गगने आगच्छन्तीं मां त्वं साक्षादद्राक्षीः। मयेदं रैवतैकदेशभूतादवलोकनाशिखरान्नेमिनाथबिम्बमानीतम्। इदं वन्दस्व। अस्मिन्वन्दिते मूलनेमिर्वन्दित एव। कुरु पारणकम्। सूरिभिरपि तत्समर्थितम्। लोकेनापि स्थापि-
20 तम्। तद्बिम्बं वन्दित्वा राज्ञा ग्रासग्रहणं चक्रे। अद्यापि तद्बिम्बं स्तम्भतीर्थे पूज्यते। उज्जयन्त इति प्रसिद्धं तत्तीर्थम्। हृद्यातोद्यानि ध्वानयन्नामो विमलगिरौ वृषभध्वजं सोत्सवं वन्दित्वा यावद्रैवताद्रिं गतः, तावता तत्तीर्थं दिगम्बरै रुद्धं श्वेताम्बरसंघः प्रवेष्टुं न लभते। आमेन तज्ज्ञातम्। ज्ञात्वोचे-युद्धं कृत्वा निषेद्धृन्हत्वा श्रीनेमिं नंस्यामि। तावत्तत्र दिगम्बरभक्ता एकादश राजानो मिलिताः। सर्वे युद्धैकतानास्तदा बप्पभट्टिना भणितम्-आमराजेन्द्र! धर्मकार्ये पापा-
25 रम्भः कथं क्रियते?। लीलयैव तीर्थमिदमात्मसात्करिष्ये। भवद्भिः स्थिरैः स्थेयम्। एवं भूपं प्रबोध्य बप्पभट्टिरुपदिगम्बरं [†]उपतद्भक्तं भूपं च नरं प्रहित्याबभाणत्-इदं तीर्थं यस्याम्बिका दत्ते तस्य पक्षस्य सत्कमिति मन्यध्वे। तैरुक्तम्-युक्तमेतत्। ततो बप्पभट्टिना[†] सुराष्ट्रावास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्यकाः पञ्चसप्तवार्षिक्यो मेलिताः। मिलिताः सभ्याः। बप्पभट्टिना अम्बादेवीपार्श्वात्कथापितम्-यदि सर्वाः श्वेताम्बरश्रावककन्यकाः

30 १३२. उज्जिंतसेलसिहरे दिक्खा नाण निसीहिया जस्स। तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ७२ ॥

इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थं, पक्षान्तरे तु दिगम्बरीयमिति। तत आनीता

---

1 P वोऽग्रे। 2 P गृह्णीथा। 3 A विसिस्म०। 4 P भोजभू। * P पुस्तक एवेयं पंक्तिर्दृश्यतेऽत प्रक्षिप्तप्राया मन्तव्या। 5 BD ०सैन्यै, P ०सैन्यैर्द्वात्रिंशदुपवासै। 6 P तत्र। † एतच्चिह्नान्तर्गत. पाठ ABD आदर्शे न दृश्यते, पर CEP आदर्शे उपलभ्यते।

मुग्धबालिकाः। सर्वाभिः श्वेताम्बरपक्षबालिकाभिः पठिता सा गाथा । अपरासु तु नैकयाऽपि । ततो जातं श्वेताम्बरसाद्रैवततीर्थम्। अम्बिकया ग्वस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता । ततो नष्टा[1] दिक्पटा महाराष्ट्रादिदक्षिणदेशानगमन्। राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात्तत्र मिलितैर्नेमिर्नेमे। वित्तं ददे । प्रभासे चन्द्रप्रभः प्रणेमे । बन्दिमोक्षः सर्वत्रापि कारितः । आमस्य भुक्तौ गूर्जरादिदेशास्तदा तीर्थानां चिरं पूजोपयोगिनो हट्टायायाः प्रक्लृप्ताः । एवं कार्याणि कृत्वा ससूरिर्नृपो गोपगिरिं प्राविशत्। संघपूजादिमहास्तत्र नवनवाः । प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः । आपृष्टः सः । लोकोऽपि क्षमितः । अनृणो देशः कृतः । सह सूरिणा नावाऽऽरूढो गङ्गासरित्तीरे[2] तीर्थे मागधं गतः । तत्र जले धूमं दृष्टवान्। तदा सूरीन्द्रमक्षमयत्। संसारमसारं विदन् अनशनमगृह्णात्। समाधिस्थः श्रीविक्रमकालात् अष्टशतवर्षेषु नवत्यधिकेषु व्यतीतेषु भाद्रपदे शुक्लपञ्चम्यां पञ्च परमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात्। सूरयस्तत्त्वज्ञा अपि रुरुदुः । चिरप्रीतिमोहो दुर्जय एव । सेवकास्तु चक्रन्दुः–हा शरणागतरक्षावज्रकुमार! हा राजस्थापनादाशरथे! हा अश्वदमननल! हा सत्यवाग्युधिष्ठिर! हा हेमदानकर्ण! हा मज्ञाजैनश्रेणिक[3]! हा सूरिसेवासम्पते! हा अनृणीकरणविक्रमादित्य! हा वीरविद्याशातवाहन! अस्मान् विहाय क्व गतोऽसि?। दर्शयैकदाऽस्मभ्यमात्मानम्। मैकाकिनो मुञ्च[4]। एवं विलपन्तस्ते सूरिभिः प्रतिबोधिताः–भो भो! सत्यं[5] दैवेन पापेन–

१२३. आलब्धा कामधेनुः सरसकिशलयश्चन्दनश्चूर्णितो हा
छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः ।
दग्धः कर्पूरखण्डो वनहतिदलिता मेघमाणिक्यमाला
भग्नः कुम्भः सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम् ॥ ७३ ॥

तथापि मा शोचत शोचत । यतः–

१२४. पूर्वाह्ने प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं तमः, कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ।
मध्याह्ने सरितां जलं प्रविसृतैः[6] रापीय दीप्तैः करैः, सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ॥७४॥

इति लोकं निःशोकं कृत्वा लोकेन सह सूरिर्गोपगिरिमागात्। सूरिभिर्दुन्दुको राजा आमेन आमशोकेन जात्यमुक्ताफलस्थूलानि अश्रूण्युद्गिरन् हिमम्लानपद्मदीनवदनश्चिन्ताचान्तस्वान्तो बभाषे–राजन्! कोऽयं महतस्तव पितृशोकः । स हि चतुर्वर्गं संसाध्य कृतकृत्यो बभूव । यशोमयेन देहेन चाचन्द्रं[7] जीवन्नेवास्ते[8] । पुण्यलक्ष्मीः कीर्तिलक्ष्मीश्चेति द्वे नरस्योपकारिण्यौ वल्लभे ।

१२५. पुण्यलक्ष्म्याश्च कीर्तेश्च विचारयत चारुताम्। स्वामिना सह यात्येकाऽपरा तिष्ठति पृष्ठतः ॥ ७५ ॥

अन्योऽप्येवंविधः कोऽपि भवतु । इत्येवंविधाभिर्वाग्भिर्दुन्दुकराजं सूरिराजो निःशोकमकार्षीत्। दुन्दुकः शनैः शनैः परमार्हतोऽभूत्। राजकार्याणि अकार्षीत्। त्रिवर्गं स समसेविष्ट ।

§ ९२) एवं वर्त्तमाने काले, एकदा दुन्दुकश्चतुष्पथे गच्छन् कण्टिकां नाम गणिकामुदाररूपां चित्ररूपां युवजनमृगवागुरां मदनमायामयीमालोकिष्ट । तां शुद्धान्तस्त्रीमकार्षीत्। तया दुन्दुकस्तथा वशीकृतो यथा यदेव सा वदति तत्सत्यम्; यदेव सा करोति तदेव हितं मनुते । सा तु कार्म-

1 A नष्टा । 2 A तीर्थे । 3 BP जैनश्चे० । 4 A मा मुच. । 5 AB सतां । 6 P प्रविशतैः । 7 P नास्ति । 8 A जीवन्नास्ते ।

णकारिणी वाक्पटुः सर्वं राज्यं ग्रसते हिमानीव चित्रम्। भोजमातरं पद्मां नाम अन्या अपि राज्ञीरन्वयवतीर्विनयवतीर्लावण्यवतीस्तृणाय मनुते। एकदा कलाकेलिनामा ज्योतिषिको निशि विसृष्टे सेवकलोके दुन्दुकराजं विजनं दृष्ट्वाऽवादीत्–देव! वयं भवत्सेवकत्वेन सुखिनः ख्याताः श्रीशाश्च। यथातथं[1] ब्रूमः–अयं ते भोजनामा तनयो भाग्याधिकस्त्वां हत्वा तव राज्ये निवे-
5 क्ष्यते। यथार्हं स्वयं कुर्वीथाः। राजा तदवधार्य वज्राहत इव क्षणं मौनी तस्थौ। ज्योतिषिकं विससर्ज। सा वार्ता भोजजननीसहचर्या दास्यैकया विपुलस्तम्भान्तरितया श्रुता। भोजमात्रे चोक्ता। सा पुत्रमरणाद्बिभाय। राजापि कण्टिकागृहमगात्। सापि राजानं सचिन्तमालोक्याऽलापीत्–देव! अद्य कथं म्लानवदनः?। राजाऽऽह स्म–किं क्रियते?, विधिः कुपितः। पुत्रान्मे मृत्युर्ज्ञानिना दृष्टप्रत्ययशतेन कथितः। कण्टिका वदति स्म–का चिन्ता, मारय पुत्रम्। सुत-
10 मपि निर्दलयन्ति राज्यलुब्धाः। सुतो न सुतः। सुतरूपेण शत्रुरेव सः। तद्वचनाद्दुन्दुकः सुतं जिघांसामास। यावता घातयिष्यति तावता भोजमात्रा पाडलीपुरे[2] स्वभ्रातृणां सूराणां राज्यश्रीस्वयंवरमण्डपानां स्नेहलानां धर्मज्ञानामग्रे प्रच्छन्नैर्नरैर्[3]लेखेन ज्ञापितम्, यथा–एवमेवं भवतां भागिनेयो विनंक्ष्यति। रुष्टो[4] राजा। आगत्य एनं गृहीत्वा गच्छत[5]। रक्षतां[6] जीववत्। मा स्माहं भवत्सु सत्सु निष्पुत्राऽभूवम्[7]–इति। तेऽप्यागच्छन्, दुन्दुकमनमन्। उत्सवमिषेण भागिनेयं
15 भोजं गृहीत्वा पाटलीपुत्रमगमन्। तत्र तमपीपठन्, अलीललन्[8]। शस्त्राभ्यासमचीकरत्। जीववदमंसत। तत्र तस्य पञ्चाब्दी दिनैः कतिभिरप्यूनाऽतिक्रामति स्म। कण्टिका दुन्दुकाग्रे कथयति स्म–देव! पुत्ररूपस्ते शत्रुर्मातृशाले वर्द्धते। नखच्छेद्यं पर्शुच्छेद्यं मा कुरु। अत्रानीय च्छन्नं यमसदनं नय। राजाऽऽह–सत्यमेतत्। ततो दूतमुखेन [9]दुन्दुको भोजं तन्मातुलेभ्योऽ[10]र्थीचीत्। ते भोजं नार्पयन्ति। पुनः पुनः स्वान् दूतान् दुन्दुकः प्रहिणोति। भोजमातुलाः प्राहुः–राजन्!
20 वयं तव भावं विद्मः, नार्पयाम एवैनम्। धर्मपात्रमसौ। अन्योऽपि शरणागतो रक्ष्यः क्षत्रियैः, किं पुनरीदृग् भगिनीपुत्रः?। ‡बलात्कारं ब्रूषे चेत्, युद्धाय प्रगुणीभूयागच्छेः। भगिनीपतये चमत्कारं दर्शयिष्यामः। तद्दूतैरागत्योक्तम्। दुन्दुकः कुपितोऽपि तान् हन्तुं न क्षमः।‡ भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापितः कवचहर उपपितृ नैति। ततो दुन्दुकेन बप्पभट्टिसूरयः प्रार्थिताः–यूयं गत्वा भोजं सुतमनुनीयानयत मानयत माम्। अनिच्छन्तोऽपि तत्सैनिकैः सह पाटलीपुत्रं चेलुः।
25 अर्द्धमार्गं सम्प्राप्तैः स्थित्वा विमृष्टं ज्ञानदृष्ट्या–भोजस्तावन्मम वचसा नृपसमीपं नैष्यति। आनीयते वा यथा तथा; तदानीतोऽपि पित्रा हन्यते। वागलङ्घने राजाऽपि क्रुद्धो मां हन्ति। तस्मादितो व्याघ्र इतो दुस्तटी इति न्यायः प्राप्तः। समाप्तं च ममायुः, दिवसद्वयमवशिष्यते, तस्मादनशनं शरणम्–इति विमृश्यासन्नस्थयतयो भाषिताः–नन्नसूरि-गोविन्दाचार्यौ प्रति हिता भवेत। श्रावकेभ्यो मिथ्यादुष्कृतं ब्रूयात्। परस्परममत्सरतामाद्रियेध्वम्। क्रियां पालयेत।
30 आबालवृद्धान् लालयेत। नो वयं युष्मदीयाः, न यूयमस्मदीयाः। सम्बन्धाः कृत्रिमाः सर्वे। इति शिक्षयित्वाऽनशनस्थाः समतां प्रपन्नाः।

१३६. अर्हतस्त्रिजगद्वन्द्यान् सिद्धान् विध्वस्तबन्धनान्। साधूंश्च जैनधर्मं च प्रपद्ये शरणं त्रिधा ॥ ७६ ॥

---

1 ABD तथातथं। 2 A ०पुत्रे। 3 P 'नरै.' नास्ति। 4 B राजा रु०। 5 P अगच्छत्। 6 P रक्षति। 7 P निष्पुत्रो। 8 AB अलीलपन्। 9 A दुन्दकः। 10 AB मातुलपार्श्वे। ‡ एतचिह्नान्तर्गत पाठ. पतित P पुस्तके।

१३७. महाव्रतानि पञ्चैव षष्ठकं रात्रिभोजनम् । विराधितानि यत्तत्र मिथ्यादुष्कृतमस्तु मे ॥ ७७ ॥

इति ब्रुवाणा आसीना अदीनाः कालमकार्षुः । श्रीबप्पभट्टिसूरीणां श्रीविक्रमादित्यादष्टशतवर्षेषु गतेषु भाद्रपदे शुक्लतृतीयायां रविदिने हस्तर्क्षे[1] जन्म, पञ्चनवत्यधिकेषु तेषु गतेषु स्वर्गारोहणम् । तदैव मोढेरे नन्नसूरीणामग्रे भारत्योक्तम्–भवद्गुरव ईशानदेवलोकं गताः । तत्र बाढं शोकः प्रससार । 5

१३८. शास्त्रज्ञाः सुवचस्विनो बहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः ।
सर्वस्याभिमता गुणैः परिवृता भूमण्डनाः सज्जना
धातः ! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः ॥ ७८ ॥

वृद्धैस्तु प्रबोधो दत्तः– 10

१३९. हित्वा जीर्णमयं देहं लभते भो पुनर्नवम् । कृतपुण्यस्य मर्त्यस्य मृत्युरेव रसायनम् ॥ ७९ ॥

इति । डुन्डुकेन सूरिभिः सह प्रहिता ये सैनिकास्ते निवृत्य डुन्डुकपार्श्वं गताः । सोऽपि पश्चात्तापानलेन दन्दह्यते स्म । भोजेनापि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां मुखादवगतं यथा–सूरय एवं मन्त्रुः । तव पार्श्वं नाजग्मुः । मा स्वायमस्मदुपरोधसङ्कटे पतितः पितुः पार्श्वं गतः सन् मृत इति कृपां दधुः । तदेतदाकर्ण्य भोजस्तथा पीडितो यथा वज्रपातेनापि न पीड्यते । 15 पितुरन्तिकं नागादर्सौ ।

§ ७३) एकदा मालिकः कोऽपि पूर्वमामराजभृत्यो विदेशं भ्रमित्वा[3] भोजान्तिकमागतः पाटलीपुरे । तेनोक्तम्–देव ! त्वं मत्स्वामिकुलप्रदीपः । मया विदेशे सद्गुरोर्मुखाद्विद्यैका लब्धा मातुलिङ्गी नाम, ययाऽभिमन्त्रितेन मातुलिङ्गेन हताः करि-हरिप्राया अपि बलिनो म्रियन्ते,[2] मानवानां तु का कथा । देव ! गृहाण ताम् । भोजेन सा तस्मादात्ता । प्रमाणिता; सत्या । 20 मालिको दानमानाभ्यां भोजेन रञ्जितः । मातुलाः सर्वे भोजेन विद्याशक्तिं प्रकाश्य तोषिताः । त ऊचुः–यदि इयं ते शक्तिस्तदा प्राभृतमिषेण मातुलिङ्गानि गृहीत्वाऽस्माभिः सह पितुः समीपं व्रज । पितरं निपात्य राज्यं गृहाण । तद् रुरुचे भोजाय । चलितो बहुमातुलिङ्गशाली[4] सन् । गतः पितुर्द्वारम्, कथापितं च–तात ! त्वं पूज्योऽहं शिशुः । त्वत्तो मरणं वा राज्यं वा सर्वं रम्यं मे । राजा सन्तुष्टः । अहो विनीतः सुतः, आयातु–इति विमृश्य आहूतो भोजः । शोधितो 25 मध्यमागतः । एकासनस्थौ कण्टिका-राजानौ पृथक्पृथग् मातुलिङ्गेन जघान । सम्यग्विद्या हि नान्यथा । उपविष्टो डुन्डुकराज्ये भोजः । तन्मातुला अतुलं तोषं दधुः । माता पद्मा प्रससाद । डुन्डुकेन धनहरणेन ग्रासोद्दालनादिना दूनचरा राजन्यकाः पुनर्जातमात्मानं मेनिरे । महाजनो जिजीव । वर्णाः सर्वे उन्मेदुः । संसारसरोऽम्भोजं भोजं कमला भेजे । दोर्बलात्परिच्छदबलाच्च जगज्जिगाय । 30

§ ७४) अथ कृतज्ञतया मोढेरपुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरान् प्रैषीत् । ते गतास्तत्र । विज्ञप्तिर्दर्शिता तैस्तत्र । वाचिता नन्नसूरि-गोविन्दाचार्यैर्यथा–स्वस्ति श्रीमोढेरे परमगुरुश्रीनन्नसूरि-श्रीगोविन्दसूरिपादान् सगच्छान् गोपगिरिदुर्गात् श्रीभोजः परमजैनो विज्ञपयति, यथा–इह

1 P हस्तार्के । 2 P म्रियत । 3 P भ्रान्त्वा । 4 P ०शोभी ।

तावत्प्रज्ञागङ्गाहिमाद्रयः [1]सर्वसमाचारीनारीसौभाग्यवर्द्धनमकरध्वजाः क्षितिपतिसदःकुमुदिनीश्वेतदीधितयो भारतीधर्मपुत्राः श्रीबप्पभट्टिसूरयस्त्रिदिवलोकलोचनलेह्यललितपुण्यलावण्यतामादधिरे। तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थ। दृष्टविज्ञप्तिप्रमाणेनात्र[2] पादोऽवधार्यः। तद् दृष्ट्वा भक्तिरहस्यं सूरयः ससंघाः सुतरां जहृषुः। संघानुमत्या गोविन्दाचार्यं मोढेरके मुक्त्वा श्रीनन्नसूरयो गोपगिरिं समसरन्[3]। भोजः पादचारेण ससैन्यः सम्मुखमायातः। गुरोः पादोदकं पपौ। उल्लसत्तृष्णो गिरं शुश्राव। स्थानस्थानमिलितजनहृदयसंघट्टचूरित[4]हारमौक्तिकधवलितराजपथं पुरं निनाय। सिंहासने निवेशयामास तान्। मङ्गलं चकार। तदाऽऽज्ञामयो बभूव। तद्भक्तानात्मवद्ददर्श। तदभक्तान् विषवद्वीक्षांचक्रे। तदुपदेशाज्जिनमण्डितां मेदिनीं विदधौ। दुन्दुकस्य तादृग् मरणं स्मृत्वा[5] कुपथेषु न रेमे। मथुरा-शत्रुञ्जयादिषु यात्राश्चकार। एकादश व्रतानुच्चचार। पूर्वराजर्षियशांसि उद्दधार। चिरं राज्यं भेजे। इत्येवं गोपगिरौ भोजो धर्मं लालयामास उदियाय च। अन्यैरपि पुण्यपुरुषैरेवं भाव्यम्।

॥ इति श्रीबप्पभट्टिचरित्रम् ॥ ९ ॥

॥ ग्रन्थाग्रं ६०० ॥

## १०. अथ श्रीहेमसूरिप्रबन्धः।

§ ५५) पूर्णतल्लगच्छे श्रीदत्तसूरिः प्राज्ञः वागडदेशे वटपद्रं पुरं गतः। तत्र स्वामी यशोभद्रनामा राणकः ऋद्धिमान्। तत्सौधान्तिके उपाश्रयः श्राद्धैर्दत्तः। रात्रौ उन्मुद्रचन्द्रातपायां राणकेन ऋषयो दृष्टा उपाश्रये निषण्णाः। श्रावकामात्यपार्श्वे पृष्टम्–के एते?। अमात्यः प्रोचे–देव! महामुनयोऽमी विषमव्रतधारिणः। राणकस्य श्रद्धा[6]। प्रातर् वन्दितुं गतः। देशना। श्रावकत्वं सुष्ठुसम्पन्नम्। मासकल्पमेकं स्थिताः। परदेशं गता गुरवः। तावता वर्षाकालः। देवपूजादिधर्मव्यापारसाराण्यहानि गमयति राणः। प्राप्ता शरद्। चरिक्षेत्राणि द्रष्टुं गतो राणः। तावता वुण्टानि ज्वालयन्ति भृत्याः। तेषु सर्पिण्येका गर्भभारालसा ज्वालादिभिर्दह्यमाना तडफडायमाना सिमिसिमायमाना राणेन दृष्टा। दयोत्पन्ना, विरक्तश्च। हा! हा! संसारं, धिग् गृहवासं, कस्य कृते पापमिदमाचर्यते?। राज्यमपि दुष्पालं मायाजालं नरकफलम्। तस्मात्सर्वसङ्गपरित्यागः कार्यः–इति ध्यायन् सौधमयासीत्। निशि श्रावकमन्त्रिणमाकार्य रहोऽप्राक्षीत्–मम धर्मगुरवः श्रीदत्तसूरयः क्व विहरन्ति?। मन्त्र्याह–डिण्डुआणके। विसृष्टो मन्त्री शेषपरिच्छदश्च। राणको मिताश्वपरिवारः सारं हारमेकं सह[7] गृहीत्वा शीघ्रं डिण्डुआणकं प्राप्तः। गुरवो दृष्टा वन्दिताः। भववैराग्याद्रुदितः। पदोर्लगित्वा कथितं स्वपापम्। गुरुभिर्भणितम्–राणक! चारित्रं विना न छुटन्ति पापेभ्यो जीवः। राणकेन न्यगादि–सद्यो दीयतां तर्हि तत्। सूरय ओमित्याहुः। राणकेन डिण्डुआणकीयश्रावकाः समाकारिताः। हारोऽर्पितः। दिव्यः प्रासादः कार्यतामिति। तथाऽऽचरितं तैः। अद्यापि दृश्यते स तत्र। राणकैर्व्रतमात्तम्। नन्द्यामेव षड्विकृतिनियमः, एकान्तरोपवासा यावज्जीवम्। तस्य राणयशोभद्रस्य गीतार्थत्वात्सूरिपदं जातम्। श्रीयशोभद्रसूरिः

1 E 'सर्व' नास्ति। 2 A विज्ञप्तिमात्रेणात्र। 3 P ०गिरिमसरन्; B ०गिरिमरन्। 4 A ०हरित०। 5 A श्रुत्वा। 6 P श्रद्धा बभूव। 7 P नास्ति।

इति नाम । तदीयपट्टे प्रद्युम्नसूरिर्ग्रन्थकारः । तत्पदे[1] श्रीगुणसेनसूरिः । श्रीयशोभद्रसूरिपादास्त्र-योदशोपवासा रैवते नेमिनाथदृष्टौ कृतानशनाः स्वर्लोकमैयरुः । गुणसेनसूरिपट्टे श्रीदेवचन्द्रसूरयः [2]ठाणावृत्ति-शान्तिनाथचरितादिमहाशास्त्रकरणनिर्व्यूढप्रज्ञाप्राग्भाराः । ते विहरन्तो धन्धुक्कपुरं गूर्जरधरा-सुराष्ट्रासन्धिस्थं गताः । तत्र देशनाविस्तरः ।

§(५६) एकदा नेमिनागनामा श्रावकः समुत्थाय श्रीदेवचन्द्रसूरीन् जगौ–भगवन्! अयं मोढज्ञातीयो मद्भगिनीपाहिणिकुक्षिभूः ठक्करचाचिगनन्दनश्चाङ्गदेवनामा भवतां देशनां श्रुत्वा प्रबुद्धो दीक्षां याचते । अस्मिंश्च गर्भस्थे मम भगिन्या सहकारतरुः स्वप्ने दृष्टः । स च स्थानान्तरे उप्तस्तत्र महतीं फलस्फातिमायाति स्म । गुरव आहुः–स्थानान्तरगतस्यास्य [3]बालस्य महिमा प्रैधिष्यते । महत्पात्रमसौ योग्यः सुलक्षणो दीक्षणीयः । केवलं पित्रोरनुज्ञा ग्राह्या । गतौ मातुल-भागिनेयौ पाहिणि-चाचिगान्तिकम् । उक्ता व्रतवासना । कृतस्ताभ्यां प्रतिषेधः करुण-वचनशतैः । चाङ्गदेवो दीक्षां लल्लौ । स श्रीहेमसूरिः प्रभुः ।

§(५७) तेन यथा श्रीसिद्धराजो रञ्जितः, व्याकरणं कृतम्, वादिनो जिताः । यथा च कुमारपालेन सह प्रतिपन्नम् । कुमारपालोऽपि यथा पञ्चाशद्वर्षदेशीयो राज्ये निषण्णः । यथा श्रीहेमसूरयो गुरुत्वेन प्रतिपन्नाः । तैरपि यथा देवबोधिः प्रतिपक्षः पराकृतः, राजा सम्यक्त्वं ग्राहितः श्रावकः कृतः, निर्वीराधनं च मुमोच सः । तत्प्रबन्धचिन्तामणितो ज्ञेयम् । किं चर्वितचर्वणेन? । नवीनास्तु केचन प्रबन्धाः प्रकाश्यन्ते ।

§(५८) कुमारपालेन अमारौ प्रारब्धायां आश्विनशुदिपक्षः समागात् । देवतानां कण्टेश्वरीप्रमुखाणां अबोटिकैर्नृपो विज्ञप्तः–देव! सप्तम्यां सप्तशतानि पशवः, सप्त महिषाः; अष्टम्यां अष्ट महिषाः, अष्टौ शतानि पशवः; नवम्यां तु नवशतानि पशवः, नव महिषा; देवीभ्यो राज्ञा देया भवन्ति पूर्वपुरुषक्रमात् । राजा तदाकर्ण्य श्रीहेमान्तिकमगमत् । कथिता सा वार्ता । श्रीप्रभुभिः कर्णे एवमेवमित्युक्तम् । राजोत्थितः । भाषितास्ते–देयं दास्यामः । इत्युक्त्वा वहिकाक्रमेण रात्रौ देवीसदने क्षिप्ताः पशवः । तालकानि दृढीकृतानि । उपवेशितास्तेषु प्रभूता आप्तराजपुत्राः । प्रातरायातो नृपेन्द्रः । उद्घाटितानि देवीसदनद्वाराणि । मध्ये दृष्टाः पशवो रोमन्थायमाना निर्वातशय्यासुस्थाः । भूपालो जगाद–भो अबोटिकाः! एते पशवो मयाऽमूभ्यो दत्ताः । यदि अमूभ्यो रोचिष्यन्ते, ते तदाऽग्रसिष्यन्त, परं न ग्रस्ताः । तस्मान्नामूभ्योऽदः पलं रुचितम् । भवद्भ्य एव रुचितम् । तस्मात्तूष्णीमाध्वम् । नाहं जीवान् घातयामि । स्थितास्ते विलक्षाः । मुक्ताश्छागाः । छागमूल्यसमेन तु धनेन देवेभ्यो नैवेद्यानि दापितानि । अथाश्विनशुक्लदशम्यां कृतोपवासः क्ष्मापो निशि चन्द्रशालायां ध्याने उपविष्टो जपति । वहिर्द्वास्थाः सन्ति । गता वह्वी निशा । क्व्यैका दिव्या प्रत्यक्षाऽऽसीत् । उक्तस्तया सः–राजन्! अहं तव कुलदेवी कण्टेश्वरी । [4]एपमः किमिति त्वया नास्मद्देयं दत्तम्? । राज्ञोक्तम्–जैनोऽहं दयालुः पिपीलिकामपि न हन्मि, का कथा पञ्चेन्द्रियाणाम्? । तच्छ्रुत्वा कण्टेश्वरी क्रुद्धा राजेन्द्रं त्रिशूलेन शिरसि हत्वा जग्मुषी । राजा कुष्ठी जातः । दृष्टं स्वं वपुर्विनष्टम् । विषण्णः । भृत्येन मन्त्रिणमुदयनमाकार्य तत्स्वरूपं निगद्य पप्रच्छ–मन्त्रिन्! देवी पशून् याचति । दीयन्ते न वा । मन्त्री दाक्षिण्यादाह–देव! राजा

1 B ०पट्टे । 2 PD ठाणांग० । 3 P नास्ति । 4 P नास्ति ।

यत्नेन रक्ष्य एव। भूपो न्यगादीत्–निःसत्त्वो वणिगसि, यदेवं ब्रूषे। मम किं कार्यं जीवितेन?। कृतं राज्यम्। लब्धो धर्मः। हताः शत्रवः। केवलं काष्ठानि देहि रहः, येन प्रातर्मामीदृशं दृष्ट्वा लोको धर्मे नोत्साहं करोति। उदयनेन चिन्तितम्–अहो! महत्कृच्छ्रमापतितम्। पारवश्यमूलं नियोगं धिक्। मन्त्रिणोक्तं सद्यो बुद्धिवशात्–श्रीहेमसूरयो विज्ञप्यन्ते। राज्ञोक्तम्–तथाऽस्तु। 5 गतो मन्त्री उपसूरि। सूरिभिर्जलमभिमन्त्र्यार्पितम्–अनेन राजाऽऽच्छोट्य इति। सचिवेन तथा चक्रे राज्ञः। राजा दोगुन्दुकदेव इव दिव्यरूपः सम्पन्नो भक्तश्च समधिकम्। श्रीगुरुं वन्दितुं ययौ। गुरुर्देशनां दत्ते–

१४०. शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः, सन्ति श्रीपतयो निरस्तधनदास्तेऽपि क्षितौ भूरिशः।
किन्त्वाकर्ण्य निरीक्ष्य वाऽन्यमनुजं दुःखार्दितं यन्मन,-स्तद्रूपं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः॥ १॥

10 राजा स्वावासं गतः। राज्यं समृद्धं भुनक्ति।

§५९) एकदा प्रभुभिर्भरतस्य चक्रिणः साधर्मिकवात्सल्यकथाऽकथि। तां श्रुत्वा भूपः साधर्मिकवात्सल्यं दिव्यभोजनवसनकनकदानैः प्रतिगामं प्रतिपुरं प्रारेभे। तद् दृष्ट्वा कवि-श्रीपालपुत्रः सिद्धपालः सूक्तमपाठीत्–

१४१. क्षिप्त्वा वारिनिधिस्तले मणिगणं रत्नोत्करं रोहणो, रेण्वावृत्य सुवर्णमात्मनि दृढं बद्ध्वा सुवर्णाचलः।
15 क्ष्मामध्ये च धनं निधाय धनदो बिभ्यत्परेभ्यः स्थितः, किं स्यात्तैः कृपणैः समोऽयमखिलार्थिभ्यः स्वमर्थं ददत्॥२॥

द्रम्मलक्षदत्तिरत्र। पुनः कदाचित्पठितम्–

१४२. श्रीवीरे परमेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं, प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षमः श्रेणिकः।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्, यस्यास्वाद्य वचःसुधां स परमः श्रीहेमचन्द्रो गुरुः॥ ३॥

अत्रापि लक्षदत्तिः।

20 §६०) अन्येद्युः कथाप्रसङ्गे प्रभवः प्राहुः स्म–पूर्वं श्रीभरतो राजा श्रीमालपुरे नगरे[1] शत्रुञ्जये सोपारकेऽष्टापदे च जीवन्तस्वामीश्रीऋषभप्रतिमावन्दनार्थं चतुरङ्गचमूचक्रोच्छलितरजःपुञ्जध्याम-लितदिक्चक्रवालः संघपतिर्भूत्वा ववन्दे। तदाकर्ण्य श्रीचौलुक्यः स्वयं कारितरथेऽर्हद्बिम्बमारोप्य ससैन्यः शत्रुञ्जयोज्जयन्तादियात्रायै चचाल। संघे उदयनसुतो वाग्भटश्चतुर्विंशतिमहाप्रासादका-रापकः, नृपनागाख्यश्रेष्ठिभूः श्रीमान् आभडः, षड्भाषाकविचक्रवर्ती श्रीपालः, तद्भूः सिद्धपालः, 25 कवीनां दातॄणां च धुर्यो भाण्डागारिकः कपर्दी, परमारवंश्यः कूर्चालसरस्वती प्रह्लादनपुरनिवेशको राणः प्रह्लादनः, राजेन्द्रदौहित्रः प्रतापमल्लः, नवतिलक्षहेमस्वामी श्रेष्ठिछाडाकः, राज्ञी भोपलदेवी, चौलुक्यपुत्री लीलूः, [2]राणअम्बडमाता माऊः, आभडपुत्री चाम्पलदे[3]–इत्यादि कोटीश्वरो लोकः; श्रीहेमचन्द्रसूरिपादाः, श्रीदेवसूरयः, श्रीधर्मसूरयः, लक्षसंख्या मानवाः। स्थाने स्थाने प्रभावना। जिने जिने छत्रचामरादिदानम्। पात्राणां इच्छासिद्धिः। प्रथमं रैवताद्रितले सांकलीयालीपद्या-30 दिशि गत्वा स्थितः क्षितिपतिः। नान्दीनिर्घोषः। रात्रौ भारत्या श्रीहेमसूरिभ्य आदिष्टम्–राज्ञा [4]नाद्रावारोढव्यं विघ्नसम्भवात्। अत्रैव देवो मदनसूदनो नेमिर्वन्द्यः। तथैव कृतम्। संघस्तु रैव-तकगिरौ श्रीनेमिस्नानविलेपनपुष्पफलवस्त्रपूजानैवेद्यनादमालादिग्रहणैर्भावमपूरि। राजाप्यक्षवा-

1 A नगरे पुरे, P नगरपुरे। 2 B राणा०। 3 A चाम्पल। 4 B नैवाद्रा०।

टकवस्त्रापथराजिमत्यादिगुहाप्रायस्थानयात्रया महादानैश्च धन-जीवितव्ययोर्लाभमग्रहीत् । देव-पत्तने चन्द्रप्रभयात्रा ससङ्घस्यासीत् । ततो व्याघुट्य शत्रुञ्जयाद्रिं गतः । आरूढः । मरुदेवादर्शन-पूजे । तत्राशीः–

१४३. वालो मे वृषभो भरं सुमनसामप्येष किं सासहि-र्मन्दं धेहि किरीटमस्य करयोर्मा काङ्कणी भूद्व्यथा ।
गाङ्गेयं कटिसूत्रमत्र तनुकं युक्तं वलिष्ठेऽप्यमू-र्नाथे मातृदयागिरः सुरजने हास्यावहाः पान्तु वः ॥ ४ ॥

पुरः कपर्दी तत्र कायोत्सर्गः । आशीस्तु–

१४४. रूढिः किलैवं वृषभः कपर्दिनं निषेवतेऽस्मिन्विमलाचले पुनः ।
अयं कपर्दी वृषभं शुभाशयस्तनोतु वः शान्तिकपौष्टिकश्रियम् ॥ ५ ॥

पुरो वृषभप्रभुप्रासादः । देवदर्शनं पूजा । आशीर्वादः–

१४५. नव्योद्वाहविधौ वधूद्वययुतं पुत्रं सवित्रीरति-प्रीत्यासन्नमिव स्मरं[1] किल ददौ यं वीक्ष्य सत्याशिषम् ।
कल्पद्रुर्भुवि जङ्गमः किमधुना पत्रद्वयेनोद्गत-स्त्वं स्याः शतशाख इत्यनुदिनं स श्रेयसे नाभिभूः ॥ ६ ॥

चैत्यपरिपाट्यां कपर्द्याह–

१४६. श्रीचौलुक्य ! स दक्षिणस्तव करः पूर्वं समासूत्रितः, प्राणिप्राणविघातपातकसखः[2] शुद्धो जिनेन्द्रार्चनात् ।
वामोऽप्येष तथैव पातकसखः शुद्धिं कथं प्राप्नुयात्, न स्पृश्येत करेण चेद्यतिपतेः श्रीहेमचन्द्रप्रभोः ॥ ७ ॥

§ ६१) मेरुमहाध्वजावारितान्नदानयाचकसत्काराः प्रवर्त्तन्ते । मालोद्घट्टनप्रस्तावे तादृशि सङ्घे राज्ञि च निषण्णे मह॰ वाग्भटः प्रथमं लक्षचतुष्कमवदत् । प्रच्छन्नधार्मिकः कश्चित्कथापयति–लक्षाष्टौ । एवमन्यान्येष्वीश्वरेषु वर्द्धयत्सु कश्चित्सपादकोटीं चकार । राजाऽपि चमच्चकार, उवाच च–उत्थाप्यतां स यो[3] गृह्णाति । उत्थितः सः । यावद् दृश्यते तावद्बादरमलिनवसनो वणिग्रूपः । राज्ञा वाग्भटो भाषितः–द्रम्मसुस्थं कृत्वा देहि । वाग्भटो वणिजा सहोत्थाय पादुकान्तिकं गत्वा द्रम्मसुस्थं पप्रच्छ । तं वणिजा सपादकोटिमूल्यं माणिक्यं दर्शितम् । मन्त्रिणा पृष्टम्–कुत इदं ते ? । वणिगाह–महुअकवास्तव्यो मत्पिता हंसाख्यः सौराष्ट्रिकः प्राग्वाटः । अहं तद्भूः जगडः । माता मे धारू: । मम पित्रा निधनसमयेऽहं भाषितः–वत्स ! चिरं कृताः प्रवहणयात्राः, फलिताश्च । मेलितं धनम् । तेन च क्रीतं[4] प्रत्येकं सपादकोटिमूल्यं माणिक्यपञ्चकम् । अधुना प्रभु-वृषभचरणौ शरणं मे । अनशनं प्रतिपन्नम् । [5]क्षामिताः सर्वे जीवाः । एकं माणिक्यं श्रीऋषभाय, एकं श्रीनेमिनाथाय, एकं श्रीचन्द्रप्रभाय दद्याः । माणिक्यद्वयमात्मनोऽन्तर्धनं दध्याः, बाह्यधनमपि प्रचुरतरमास्ते । इदानीं माता मया सहानीता कपर्दिभवने मुक्ताऽस्ति । तां जरतीं मातरं सर्वतीर्थाधिकतया [6]पुराणपुरुषैर्निवेदितामेतां मालां परिधापयिष्यामि । श्रुत्वा हृष्टो मन्त्री राजा सङ्घश्च । मातृसम्मुखगमनं सर्वश्रावकाणाम्; मालापरिधापनम् । तन्माणिक्यं हेम्ना खचित्वा श्रीऋषभाय कण्ठाभरणमनणु[7]किरणभरितचैत्यगर्भमासूत्रयामहे । [8]चलितः सङ्घः । प्राप्तः पत्तनम् । प्रवर्त्तन्ते सङ्घभोज्यानि प्रतिलाभनाश्च । अमारिस्तु नित्यैव ।

---

1 D स्मरः । 2 E ०मुखः । 3 ADE 'यो' नास्ति । 4 A कृतं । 5 AB क्षमिताः । 6 A पुराणे । 7 P अनुष्ण० । 8 B वलितः ।

§ ६२) तस्य च कुमारपालदेवस्य भगिनी शाकम्भरीश्वरेण चाहमानवंश्येन राज्ञा आनाकेन परिणीताऽस्ति। एकदा तौ सारिभिः क्रीडतः। क्रीडता राज्ञा [1]सारिं गृहे मुञ्चतोक्तम्–मारय मुण्डिकान्, पुनर्मारय मुण्डिकान्। एवं द्वित्रिः। टोपिकारहितशीर्षकत्वान्मुण्डिका गूर्जरलोका विवक्षिताः; अथवा श्वेताम्बरा गूर्जरेन्द्रगुरवो मुण्डिका इति हासगर्भोक्तिः। राज्ञी कुपिता वदति–रे जङ्गडक! जिह्वामालोच्य नोच्यते?, किं वक्षि?। न पश्यसि माम्?। न जानासि मम भ्रातरं राजराक्षसम्?। क्रुद्धो राजा तां पदा जघान। साप्याह–यदि ते जिह्वां अवटुपथेन नाकर्षयामि तदा राजपुत्रीं मां मा मंस्थाः। इति वदन्त्येव सा ससैन्या निर्विलम्बं श्रीपत्तनमेत्य चौलुक्याय तं परिभवं प्रतिज्ञां च स्वोपज्ञामजिज्ञपत्। चौलुक्योऽभाषत–इत्थमेव करिष्यामः। कौतुकं पश्येः[2]। ततश्चानाकस्तस्यां तत्र गतायां गूर्जरनृपतेजो दुर्द्धरं विदंश्चुक्षोभ। चौलुक्योऽपि बह्वाप्तपरिच्छदं मन्त्रिणमेकं तत्रत्यवृत्तान्तज्ञानाय प्रैषीत्। गतः स तत्र। जग्राह गृहम्। राजासन्नदासीमेकां धनेन रञ्जयित्वा आत्मीयं भोगपात्रमकरोत्। नित्यं सा याममात्र्यां रात्र्यामायाति रञ्जयति तम्। एकदा निशीथे साऽऽगात्। मन्त्री कुपितः–आः पापे! [3]परापरनृगामिनि! किमिति विलम्बेन समागतासि?। सापि सप्रश्रयं मन्त्रिणमभाषत–स्वामिन्! मा कुपः। कारणेन स्थिताऽस्मि। [4]मन्त्रिणोचे–किं कारणम्?। सा जगाद–प्रभो! [5]अहं अन्नस्य[6] राज्ञस्ताम्बूलदासी। रात्रेर्याम एकस्मिन् राज्ञा परिच्छदः सर्वो विसृष्टः। अहमपि विसृष्टा। विसृजता चाप्तनर एकोऽभाषि–व्याघ्रराजं हक्कारय। अहं स्तम्भान्तरिता कौतुकेन स्थिता। को व्याघ्रराजः?, कथं [7]चाहूयते? इति। ततो राज्ञाऽऽकारितः स आगतः। कृतप्रणामः सन् राज्ञाऽऽलापि–भो! विजनमस्ति इति भाष्यसे। त्वमस्माकं कुलक्रमागतः सेवकः। सद्यो व्रज। गूर्जरेश्वरघातको भूत्वा व्यापादय तम्[8]। लक्षत्रयं हेम्नां दास्ये। अथ स व्याघ्रराजाख्यो बभाषे–देव! हनिष्याम्येव तं राजानम्। मा स्म संशयं कृथाः स्वामिन्!। ततस्तद्वचः श्रुत्वा तुष्टः शाकम्भरीश्वरः। सद्यो हेमलक्षत्रयबदरकांस्तद्गृहायाचीचलत्। व्याघ्रराजं चाप्राक्षीत्–कदा केनोपायेन तं हनिष्यसि?। व्याघ्रराजोऽवादीत्–नाथ! अद्य रविवारो वर्त्तते। आगन्तुकामे† सोमवारे क्वचनावसरं लब्ध्वा हनिष्यामि। उपायस्तु भरटकरूपं करिष्यामि। राजा तु कर्णमेरुप्रासादे आयाति† सोमवारे ध्रुवम्। देवं नत्वा व्यावर्त्तमानायास्मै बाह्याङ्गणे शेषादानमिषेण पुष्पकलम्बकमुत्पाटयिष्यामि। तत्र धृतया कर्तिकया कङ्कमय्या घातयिष्यामि। 'अङ्गीकृतसाहसानां न किञ्चिदपि दुष्करम्।' अहं हतश्चेत्तत्र तदा मन्मानुषाणामुपरि कृपा करणीया। [9]उद्वृतश्चेदहं तदा[10] जितं जितम्। एवं व्याघ्रराजेन निगदिते आनाकेन वीटकं दत्तम्। विसृष्टोऽसौ। तत्सर्वं सावधानतया[11] स्तम्भान्तरितया मया श्रुतम्। राज्ञि शुद्धान्ते गतेऽहं त्वदङ्घ्रिसेवार्थमायाता। तस्मान्मा मनो मयि क्रोधकश्मलितं कार्षीः। एतद्दासीवचः श्रुत्वा चौलुक्यनियोगी चिन्तयति–लब्धं शत्रुगृहमर्म। यतिष्येऽतः कार्यकरणाय। इति परामृशन् दासीमभाषत–याहि मृषाभाषिणि!, कः स्त्रीवचसि विश्वासः?।

१४७. श्रूयते यन्न शास्त्रेषु यल्लोकेऽपि न दृश्यते। तत्कल्पयन्ति लोलाक्ष्यो जल्पन्ति स्थापयन्ति च ॥ ८ ॥

इत्यादि भाषित्वा तां व्यस्राक्षीत्। स्वयं तु चतुरांश्चतुरो यामलिकानुपचौलुक्यं प्रास्थाप-

---

1 P सारिगृहे। 2 B पश्य। 3 BDP परनृ०। 4 A मंत्र्योचे, D मंत्री ऊचे। 5 BC 'अहं' नास्ति। 6 ABP 'अन्नस्य' नास्ति। 7 P कथमा०। 8 DP 'तम्' नास्ति। † एतदन्तर्गता पंक्तिर्नास्ति A आदर्शे। 9 P उद्धृत०। 10 A 'तदा' नास्ति। 11 AD सावधानया।

यत् । विज्ञस्या चाज्ञापयत्–सावधानैः स्थेयम् । इत्थमित्थं स्वामिपादानामुपरि शत्रुकृतं कपटं वर्त्तते । भरटकश्चिन्तनीयः । चौलुक्यः सावधानस्तस्थौ । सोमवारे गतो राजा कर्णमेरुम् । प्रकटीभूतः पूर्वोक्तचेष्टया भरटकः । दृष्टमात्रमेव तं नृपो मल्लैरदीधरत् । कर्तिका च लब्धा । बद्धो व्याघ्रराजः, जल्पितश्च–रे वराक ! जङ्गडकेन प्रेषितोऽसि ? । सेवकस्त्वम् । 'सेवकस्य च हिताहितविचारो नास्ति ।' स्वाम्यादेशवशंवदस्त्वं मा भैः । मुक्तोऽसि । तमेव हनिष्यामि य एवं द्रोहमाचरति[1] दुर्दुरूढः । इत्युक्त्वा परिधाप्य व्यसृजत् । स्वयं तु सौधं[2] गत्वा सामग्रीं यौद्धीं व्यररचत् । पार्ष्णिरक्षां विधिवद्विधाय चलितः । सपादलक्षान् प्रविष्टः । भट्टेन आनाकनरेन्द्रमालीलपत् । यथा–

१४८. अये भेक ! च्छेको भव भवतु ते कूपकुहरं, शरण्यं दुर्मत्तः किमु रटसि वाचाट ! कटुकम् ? ।
पुरः सर्पो दर्पी विषमविषफूत्कारवदनो,[3] ललज्जिह्वो धावत्यहह भवतो जिग्रसिषया ॥ ९ ॥

आनाकोऽपि तदुद्दामशौण्डीर्यरिपुदूतवचः श्रुत्वा लक्षत्रयाश्वेन[4] नरलक्षदशकेन पञ्चाशता च मदान्धैर्गन्धगजैरचलत् । शाकम्भरीतः पञ्चक्रोश्यावार्गागतः[5] । दिनत्रयेण युद्धं भविष्यतीति निर्णीतमुभाभ्यां राजेन्द्राभ्याम् । अन्योऽन्यमक्षान् दीव्यन्ति राजपुत्राः । योधयन्ति मल्लयोधच्छुरीकार-मेष-वृषभ-महिष-गजान् । स्फोटयन्ति नालिकेराणि । तावन्तमवकाशं लब्ध्वा सपादलक्षक्ष्मापालेन निशि द्रव्यबलेन नड्डूलीयकेल्हणादयो राजकीयाश्चौलुक्यभक्ता भेदिताः स्वपक्षे कृताः । सर्वेषामेको मन्त्रः–युद्धाय सन्नद्धव्यमेव न तु योद्धव्यम् । राजा चौलुक्य एकाकी मोचनीयः । शत्रुभिर्हन्यताम् । 'अर्थो हि परावर्त्तयति त्रिभुवनम् ।'

१४९. दधाति लोभ एवैको रङ्गाचार्येषु धुर्यताम् । आरङ्कशक्रं यन्नाट्यपात्राणि भुवनत्रयी ॥ १० ॥

एवं[7] च तेषां मन्त्रं चौलुक्योऽद्यापि न वेत्ति । अतः प्राता राजा कुमारपालः कलहपञ्चाननं पट्टहस्तिनं महामात्रश्यामलपार्श्वात्पुरः[8] प्रेरयामास । तटस्थांस्तु चेष्टितैर्दुष्टान्निरणैषीत् । नृपेण गदितः श्यामलः–श्यामल[9] ! किमर्थममी उदासीना इव दृश्यन्ते ? । श्यामलेन विज्ञसम्–देव ! अरिकृतार्थदानादमी त्वयि द्रोहपराः सम्पन्नाः । राजाऽऽह–तर्हि तव का चेष्टा ? । श्यामलोऽप्याललाप–देव ! एको देवः १, अपरोऽहम् २, अन्यस्तु कलहपञ्चाननो हस्ती ३; एते त्रयः कदापि न परावर्त्त्यन्ते । नृपो वदति–तर्हि सम्मुखीने दृश्यमाने शत्रुनृपमुद्गरघट्टे गजं प्रेरय ।

१५०. साहसजुत्तइ हलु वहइ दैवह तणइ कपालि । खूंटा विणु खींखइ नही खेडि म खूंटा टालि* ॥ ११ ॥

तदैव चारण एको न्यगादीत्–

१५१. कुमारपाल ! मन चिंत करि चिंतिइं[10] किंपि न होइ । जिणि तुहु[11] रज्जु सम्मप्पिउ[12] चिंत करेसइ सोइ ॥ १२ ॥

तत्तदीयं वचः श्रुत्वा सुशब्दं मन्यमानः पुरःस्थे महाघट्टेऽविशत् । नरसहस्रेण सह भञ्जन् घ्नन् गतो[13] गजारूढः कुमारपाल आनाकगजान्तिके । आस्फालितो गजो गजेन । लग्नः करः करेण । आस्फालितौ दन्तौ दन्ताभ्याम् । एकदेहत्वमिव द्वयोरिभयोरभूत् । प्रवृत्तं युद्धं नाराचैः ।

---

1 BP ०मारचयति । 2 P सौधे । 3 A पूत्कारि०; P पूत्कार० । 4 AD ०त्रयाश्वो । 5 A ०क्रोशार्वागागतः, D ०र्वागतः । 6 A यन्नाट्यः । 7 P एनं, D एतं । 8 P 'पुरः' नास्ति । 9 P नास्ति । * P पुस्तके एतत्पद्यमीदृशं दृश्यते ।
खेडि म खूंटा टालि खूंटा विण खींखइ नही । दैवह तणा कपालि साहसजुत्तइ हल वलइ ॥
10 D चिंति । 11 BD तुह रज्ज । 12 D समप्पियउ । 13 A 'गतो' नास्ति ।

द्वावपि बलिष्ठौ महोत्साहौ राजेभौ। तथापि कलहपञ्चाननश्चीत्कारान्मुञ्चन् पुनः पुनः पश्चान्निवर्त्तते[1]। तदा चौलुक्येन श्यामल ऊचे–श्यामल[2]! कथमयं निवर्त्तते?। श्यामलो गदति स्वस्वामिन्! श्रीजयसिंहदेवे विपन्ने ३० दिनानि पादुकाभ्यां राज्यं कृतम्। मालवीयराजपुत्रेण चाहडकुमारेण राज्यं प्रधानपार्श्वे याचितम्। प्रधानैस्तु परवंश्यत्वान्न[3] दत्तम्। ततो रुष्ट्वा चाहड
5 आनाकसेवकः सञ्जातः। स भगदत्तनृपवन्महामात्रधुर्यः, अतुलबलः। तस्य सिंहनादेन कलहपञ्चाननः क्षुभ्यन् पश्चान्निवर्तते[4]। किमत्र क्रियते, न विद्मः। चौलुक्यस्तदाकर्ण्य द्विपटीं विदार्य [5]फालिकद्वयेन द्वौ गजकर्णौ पूरयामास। ततश्चाहडसिंहनादमशृण्वन् कलहपञ्चाननः स्थिरतरः स्थितो[6] गिरिवत्। वर्त्तते षट्त्रिंशदायुधैर्युद्धम्। चमत्कृते द्वे अपि सैन्ये। उदासीनतया प्रथमं[7] स्थिताश्चौलुक्यीयाश्चकम्पिरे भयेन। अहो! एकाङ्गमात्रस्यापि कुमारदेवस्यासमसमरसम्पल्लम्पटत्वम्।
10 सैन्ययोर्युद्धमपि निवृत्तम्। तावेव युध्येते। अत्रान्तरे चौलुक्यो विद्युदुत्क्षिप्तकरणं दत्त्वा आनाकगजपतिस्कन्धमारूढः। क्षिप्तौ भुजौ राजोपरि। कसणकानि च्छुरिकया छित्त्वा आनाकं सढंचकं[8] च भूमौ पातयित्वा योक्त्रबन्धं क्षिप्त्वा हृदि पादं दत्त्वा छुरीं कराग्रे ग्रहीत्वा अवादीत्–रे वाचाट! मूढ! निर्धर्मन्! पिशाच! स्मरसि मद्भगिन्यग्रे 'मारय मुण्डिकान्' इति वदिष्यसि?। पूरयामि निजभगिनीप्रतिज्ञाम्। छिनद्मि ते दुर्वाक्पङ्कदूषितां जिह्वाम्। इत्येवं
15 वदति कृतान्तदुष्प्रेक्ष्ये चौलुक्ये सपादलक्षीयः किञ्चिन्नाचख्यत्[9]; केवलं[10] तरलतारकाभ्यां चक्षुर्भ्यामद्राक्षीत्। चौलुक्योऽप्युत्पन्नलोकोत्तरकरुणापरिणामः प्राभाणीत्–रे जाल्म! मुक्तोऽसि न भगिनीपतित्वेन, किन्तु कृपापात्रत्वेन। पूर्वं तव देशे टोपीबन्धे[11]ऽग्रभागे जिह्विके आसाताम्। कसाया जिह्वेति सञ्ज्ञा। अतः परं जिह्वाबन्धः पश्चात्करणीयः। अवटोर्जिह्वाकर्षणप्रतिज्ञासिद्धिसूचकत्वात्। एवं श्रुते तथेति प्रतिपेदे आनाकः। 'बलवद्भिः सह का विरोधिता' इति न्यायात्।
20 काष्ठपञ्जरे क्षिप्तः। त्रिरात्रं स्वसैन्ये स्थापितः। जयातोद्यानि घोषितानि। पश्चात् शाकम्भरीपतिर्विहितः[12]। उत्खातप्रतिरोपितव्रताचार्यो[13] हि तिहुअणपालदेवनन्दनः। गम्भीरतया स्वभटा नोपालब्धाः। त्यक्तजीवाशास्ते तं सेवन्ते। मेडंतकं[14] सप्तवारं भग्नम्। पल्लीकोट्टस्थाने आर्द्रकमुसम्। †ततः पठितं चारणेन–

१५२. कुमरपाल रणहट्टि वलिउ कु करिसइ ववहरणु[15]। इक्कह पल्लीमट्टि[16] वीसलक्खउ[17] झगडउ कियउ ॥ १३ ॥

25 इति† चिरं तस्थौ स तत्र। श्रीहेमचन्द्रसूरयः सहैव सन्ति। पृष्टास्ते तेन–भगवन्! मालवीया राजानो गूर्ज्जरानागताः प्रासादान् पातयन्ति आत्मख्यातये। तदस्माकमकृत्यम्। केनोपायेनात्मख्यातिं कुर्मः?। [18]श्रीहेमसूरिपादैः प्रत्यपादि–राजेन्द्र! पाषाणमयानि तिलपेषणयन्त्राणि भञ्जय पुण्य-कीर्तिलाभात्। भञ्जितास्ते तेन घाणकाः। अद्यापि भग्नाः पतिताः स्थाने स्थाने दृश्यन्ते। ततो[19] ववले परराष्ट्रमर्दनचौलुक्यः। आयातः पत्तनम्। भगिनीं भर्तृकुले प्रगन्तुमतत्वरत्।
30 न तु सा गता अभिमानात्। तपस्तु तेपे। राजा स्तम्भनपुरे यात्रां सूत्रयामास। तत्पुरं पार्श्वदे-

---

1 A निवर्वृते। 2 P नास्ति पदमिदम्। 3 AP ०वंशत्वात्। 4 A निवर्वृते। 5 B फालक०। 6 P 'स्थितो' नास्ति। 7 P प्रथम०। 8 P सढं चक्रं। 9 P नाचख्यौ। 10 AB नास्ति 'केवलं'। 11 AB ०बन्धो। 12 AD शाकंभरीशो। 13 ०रोपिताचार्यो। 14 P मेडतं। † एतदन्तर्गतः पाठो नास्ति P पुस्तके। 15 A ०हरणु ण। 16 D पट्टि। 17 A वीसलक्ख, B वीसकल०। 18 एतद्वाक्यस्थाने P पुस्तके 'गुरुभिरुक्तम्' ईदृशं वाक्यम्। 19 A नास्ति 'ततो'।

वाय ददौ । पुनः पत्तनमैत् । गृहीतसपादलक्षाधिपतिलञ्चाद्रव्यान् कुसेवकान् निगृह्य निश्चिन्तीभूतः श्रीकुमारपालः श्रीहेमसूरिपादान् पर्युपास्ते । सामायिकपौषधादीन्याचरति ।

§ ६३) एकदा पृष्टं राज्ञा–भगवन्! इदमपि ज्ञायते यदहं पूर्वभवे कीदृशोऽभूवम्? । गुरुराह–राजन्! निरतिशयः कालोऽयम् । यतः श्रीवीरमोक्षगमनाद्वर्षाणां चतुःषष्ट्या चरमकेवली जम्बूस्वामी सिद्धिं गतः । तेन समं मनःपर्यवज्ञानम्, परमावधिः, पुलाकलब्धिः, आहारकशरीरम्, क्षपकश्रेणिः, उपशमश्रेणिः, जिनकल्पः, परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातानि[1] चारित्राणि, केवलज्ञानम्, सिद्धिगमनं च इति द्वादशस्थानानि भरतक्षेत्रे व्युच्छिन्नानि । सप्तत्यधिके वर्षशते गते स्थूलभद्रे स्वर्गस्थे चरमाणि चत्वारि पूर्वाणि समचतुरस्रसंस्थानं वज्रऋषभनाराचसंहननं महाप्राणध्यानं व्युच्छिन्नम् । आर्यवज्रस्वामिनि दशमं पूर्वम्, आद्यसंहननचतुष्कं च व्यपगतम्[2] । ततः परं शनैः शनैः सर्वाणि पूर्वाणि प्रलयं गतानि । [सम्प्रति*] अल्पश्रुतं वर्त्तते । तथापि देवतादेशात्किमपि ज्ञायते । राज्ञा विज्ञप्तम्–यथा तथा पूर्वभवं ज्ञापयत माम् । गुरुभिः प्रतिपन्नम् । ततः सिद्धपुरे निर्जराप्ततपोधनैः सह सरस्वतीतीरं गत्वा विजने ध्याने निषण्णाः । द्वौ मुनी दिग्रक्षायां मुक्तौ । दिनत्रयान्ते विद्यादेव्य आजग्मुः । प्रभूणामग्रे ताभिरुक्तम्–यद्भवतां सत्त्वेन तुष्टाः स्मः । याच्यतां किञ्चित् । सूरिभिरभाणि–कुमारपालस्य प्राग्भवं वदत । ता ऊचुः–मेदपाटपरिसरे पर्वतश्रेण्यां परमारः पल्लीशो जयताको राज्यमकरोत् । अन्यायी । एकदा धनकनकसमृद्धा बलीवर्दश्रेणी तेन गृहीता । बलीवर्दाधिपतिर्नष्टः । जयताकेन सर्वं लुण्टितम्[3] । बलीवर्दाधिपतिस्तु मालवदेशं गत्वा राज्ञा सह मिलित्वा सेनां गृहीत्वा तस्यां पल्ल्यां वेष्टमकृत । कीटमारिः कृता । जयताको नष्टः । तस्य भार्या चटिता । तस्या उदरं विदार्य पुत्रं गर्भमुपले आस्फाल्य †वणिज्यारकोऽवधीत्† । पल्लीग्रामादि प्रज्वाल्य पुनर्मालवदेशं गतः । राज्ञा हृष्टेन पृष्टम्[4]–कथं कथं विग्रहः कृतः? । वणिज्यारकेणोक्तम्–स्वामिन्! तत्पुरं प्रज्वालितम्, जयताको नष्टः, तत्पत्नी चटिता सगर्भा हता । राज्ञोक्तम्–त्वया न सुष्ठु कृतम् । हत्याद्वयं गृहीतम् । अद्रष्टव्यमुखस्त्वम् । ममान्तिकं त्यज । निष्कासितः । लोकनिन्दोच्छलिता । तपोवनं गत्वा तपस्विदीक्षा जगृहे । गाढं तपस्तप्त्वा मृत्वा स वणिज्यारको जयसिंहदेवो जातः । जयताकस्तु स्थानभ्रंशं दृष्ट्वा देशान्तरं गतः । अटवीं गच्छतस्तस्य संडेरगच्छस्वामिनः श्रीयशोभद्रसूरयो मिलिताः । सूरिभिरभिहितम्–यद् भवतोऽधुना सर्वं गतम्, किमर्थमन्यायं करोषि । जयताकेनोक्तम्–'बुभुक्षितः किं न करोति पापम्' । ततः सर्वमकृत्यं करोमि । सूरिभिरुक्तम्–अधुना शम्बलादि[5] भोजनादि कारयिष्यते । अनयं मा कृथाः । भोजनवस्त्रादिकं[6] कस्यापि पार्श्वाद्दापितम् । सार्थे हि तदादेशकारिणो बहवः । चौर्यनियमं यावज्जीवं ग्राहितः । स तिलङ्गेषु[7] उरङ्गलपुरे ओढरवणिज्यारकगृहे भोजनादिवृत्त्या भृत्योऽस्थात् । तत्र विहारे[8] यशोभद्रसूरयः प्राप्ताः । चतुष्पथे मिलिता जयताकस्य । श्रावकैरुपाश्रयो दत्तः । जयताकेन तत्र गत्वा हृदयशुद्ध्या पुनश्चौर्यनियमो [9]गृहीतः, अन्येऽपि बहवो नियमा[10] गृहीताः । उत्सूरे ओढरगृहं गतः । ओढरेण पृष्टम्–तव क्व वेला लग्ना? । त्वां विना कार्याणि सीदन्ति । तेनोक्तम्–मम गुरवः समागताः सन्ति ।

---

1 P ०ख्यातचा० । 2 A व्यगतं । * P पुस्तक एव एष शब्दो दृश्यते । 3 A लुण्ठितं । † एतदन्तर्गतः पाठः पतितः P पुस्तके । 4 P पृष्टः । 5 D शम्यलादिकं; D शम्बलभोज० । 6 A वस्त्रादि । 7 AD तिलिंगेषु । 8 P विहरन् । 9 A आहितः । 10 A गृहीता नियमाः ।

तत्क्रमकमलवन्दनानन्दमन्वभूवम् । नियमानग्रहीषम् । ओढरेणापि समुत्पन्नश्रद्धेन व्याकृतम्– वयमपि गुरून् वन्दिष्यामहे । जयताकेनोक्तम्–पुण्यात्पुण्यमिदम् । ओढरस्तत्र गतः । गुरून् वन्दित्वा न्यषदत् । देशना श्रुता । तत्त्वज्ञानमुन्मीलितम् । श्रावकत्वं गृहीतम् । पश्चाद्–गुरुदक्षिणा गृह्यताम्–इति ओढरेणोक्ते सूरिभिरुक्तम्–वयं निर्ममा निष्परिग्रहाः । धनादि न 5 गृह्णीमः । अथ तवात्याग्रह एव तर्हि श्रीमहावीरप्रासादकारापणं दक्षिणाऽस्तु । कारितः प्रासादः । ओढरस्य जयताकेन सह सोदरत्वमिवासीत्[1] । एकदा पर्युषणे ओढरः सपरिवारश्चलितो जयताकेन समं देवगृहं प्रति । पुष्पाणि गृहीत्वा ओढरेण देवस्य पूजा कृता । जयताको जजल्पे– इमानि मे पुष्पाणि गृहीत्वा पूजां कुरु । जयताको जगाद–पुष्पाणि भवदीयानि; एभिः पूजायां कृतायां किं मे फलम्?। वेष्टिरेव[2] केवला । केवलं ममापि पञ्च वराटकाः सन्ति । तत्पुष्पैः पूजयि- 10 ष्यामि जिनेन्द्रम् । तथैव पूजितः । जयताकः पुण्यमगण्यमुपार्जयत् । तत ओढर-जयताकौ गुरून् वन्दितुं जग्मतुः । उपवासः कृतो जयताकेन । द्वितीयदिने मुनिभ्यो दत्त्वा पारणं कृतम् । एवं पुण्याढ्यः सन् मृत्वा श्रीमूलराजवंशे तिहुअणपालदेवगृहे श्रीकुमारपालोऽभूत् । एवमुक्त्वा विरतासु देवीषु प्रभुभिः प्रोक्तम्–कोऽत्र प्रत्ययः? । पुनर्देव्यः प्राहुः–उपराजं वदेः–नवलक्षतिलङ्गशृङ्गारे[3] नगरे उरङ्गले मानवान् प्रेषय । अद्यापि ओढरस्य वंशीयाः सन्ति । तेषां दासी स्थिर- 15 देवी जीर्णवृत्तान्तान् जानाति वक्ष्यति च । †इदं श्रुत्वा विसृज्य गच्छन्तीभिर्देवीभिस्तत्रत्ये ओढरगृहे लप्स्यमानानि निधानानि कथितानि । विज्ञाय† पत्तने राजान्तिकं गताः प्रभवः । पृष्टं तत्र राज्ञा । तथैव राज्ञोऽग्रे न्यगादि । नरप्रेषणात्सर्वं ज्ञातम् । जिनधर्मे स्थैर्यं जातम् । सह[4] सिद्धेशेनापि वैरकारणमुपलब्धम् । पूर्वभवे गर्भघातान्न सिद्धराजस्य पुत्रः[5] । इति कुमारपालपूर्वभवः ।

20 ॥ इति श्रीहेमसूरिप्रबन्धः ॥ १० ॥

## ११. अथ हर्षकविप्रबन्धः ।

§ ६४) पूर्वस्यां[6] वाराणस्यां पुरि गोविन्दचन्द्रो नाम राजा । ७५० अन्तःपुरीयौवनरसपरिमलग्राही । तत्पुत्रो जयन्तचन्द्रः । तस्मै राज्यं दत्त्वा पिता योगं प्रपद्य परलोकमसाधयत् । जयन्तचन्द्रः ससयोजनशतमानां पृथ्वीं जिगाय । मेघचन्द्रः कुमारस्तस्य, यः सिंहनादेन सिंहानपि 25 भङ्क्तुमलम्, किं पुनर्मदान्धगन्धेभघटाः? । तस्य राज्ञश्चलतः सैन्यं गङ्गा-यमुने विना नाम्भसा [7]तृप्यतीति नदीद्वययष्टिग्रहणात्पङ्गुलो राजेति लोके श्रूयते । यस्य गोमतीदासी षष्टिसहस्रेषु वाहेषु प्रक्षरां निवेश्याभिषेणयन्ती परचक्रं त्रासयति । राज्ञः श्रम एव कः? । तस्य राज्ञो बहवो विद्वांसः । तत्रैको हीरनामा विप्रः । तस्य नन्दनः प्राज्ञचक्रवर्ती श्रीहर्षः । सोऽद्यापि बालावस्थः । सभायां राजकीयेनैकेन पण्डितेन वादिना हीरो राजसमक्षं जित्वा मुद्रितवदनः कृतः । लज्जा- 30 पङ्के मग्नः । वैरं बभार धारालम् । मृत्युकाले हर्षं स बभाषे–वत्स! अमुकेन पण्डितेनाहमाहत्य

1 P विहाय सर्वत्र '०मिवास ।' 2 D विशिष्टिरेव । 3 P श्रृङ्गारन० । † एतदन्तर्गतपाठस्थाने P पुस्तके 'इत्युक्त्वा देव्यो गताः स्वस्थानम् ।' एष पाठः । 4 P विना नास्त्यन्यत्र 'सह' । 5 P सन्तानम् । 6 P पूर्वस्यां दिशि । 7 P तृप्यति ।

राजदृष्टौ जितः । तन्मे दुःखम् । यदि सत्पुत्रोऽसि तदा तं जयेः क्ष्मापसदसि । श्रीहर्षेणोक्तम्–ओमिति । हीरो द्यां गतः । श्रीहर्षस्तु कुटुम्बभारमासदायादेष्वारोप्य विदेशं गत्वा विविधाचार्यपार्श्वेऽचिरात्तर्का-लङ्कार-गीत-गणित-ज्योतिष-चूडामणि-मन्त्र-व्याकरणादीः सर्वा विद्याः सस्फुराः प्रजग्राह । गङ्गातीरे सुगुरुदत्तं चिन्तामणिमन्त्रं वर्षमप्रमत्तः साधयामास । प्रत्यक्षा त्रिपुराऽभूत् । अमोघादेशत्वादिवराप्तिः । तदादि राजगोष्ठीषु भ्रमति । अलौकिकोल्लेखशिखरितं 5
जल्पं करोति, यं कोऽपि न बुध्यते । ततोऽतिविद्ययाऽपि लोकागोचरभूतया खिन्नः पुनर्भारतीं प्रत्यक्षीकृत्याभणत्–मातः! अतिप्रज्ञाऽपि दोषाय मे जाता । बुध्यमानवचनं मां कुरु । ततो देव्योक्तम्–तर्हि मध्यरात्रेऽम्भःक्लिन्ने शिरसि दधि पिब । पश्चात्स्वपिहि । कफांशावताराज्जडतालेशमाप्नुहि । तथैव कृतम् । बोध्यवागासीत् । खण्डनादिग्रन्थान् परःशताञ्जग्रन्थ । कृतकृत्यीभूय काशीमायासीत् । नगरतटे स्थितः । जयन्तचन्द्रमजिज्ञपत्–अहमधीत्यागतोऽस्मि । राजाऽपि 10
गुणस्नेहलो हीरजेतृपण्डितेन सह सचातुर्वर्ण्यः पुरीपरिसरमसरत । श्रीहर्षो नमस्कृतः । तेनापि यथार्हमुचितं लोकाय कृतम्, राजानं त्वेवं तुष्टाव–

१५३. गोविन्दनन्दनतया च वपुःश्रिया च, माऽस्मिन् नृपे कुरुत कामधियं तरुण्यः ।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री,-रस्त्रीजनः पुनरनेन विधीयते स्त्री ॥ १ ॥

व्याचख्यौ च तारस्वरं सरसविस्तरम् । तुष्टा सभा राजा च । पितृवैरिणं तु वादिनं दृष्ट्वा 15
सकटाक्षमाचक्षे[1]–

१५४. साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले, तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता, भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ २ ॥

एतच्छ्रुत्वा स वादी प्राह–देव! वादीन्द्र! भारतीसिद्ध!, तव समोऽपि न, न वाधिकः[2] ।

१५५. हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धता,-स्तस्यैकस्य पुनः स्तवीमहि महः सिंहस्य विश्वोत्तरम् । 20
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः, संहर्षो महिषैश्च यस्य मुमुचे साहङ्कृतेर्हुङ्कृतेः ॥ ३ ॥

‡इदं श्रुत्वा श्रीहर्षो निष्क्रोध इवासीत् । भूपेनोक्तम्–‡ अत्र श्रीहर्ष इदमेव वक्तुमर्हम् । प्रतिवादिनां कोऽर्थः? । सम्यगवसरमज्ञासीः । श्रीहीरवैरिञ्चित्यर्थः । अन्योऽन्यं गाढालिङ्गनमचीकरद् द्वयोरपि वसुन्धरासुधांशुः[3] । विस्तरेण सौधमानीय माङ्गलिकानि कारयित्वा गृहं प्रति प्रहितः । लक्षसंख्यानि हेमानि ददिरे । निश्चिन्तीकृत्यैकदा मुदा नृपेणोक्तः–कवीश! वादीन्द्र! 25
किञ्चित्प्रबन्धरत्नं कुरु । ततो नैषधं महाकाव्यं चक्रे दिव्यरसं महागूढव्यङ्ग्यभारसारम् । राज्ञे[4] दर्शितम् । राज्ञोचे–सुष्ठुतममिदम् । [5]परं काश्मीरं व्रज । तत्रत्यपण्डितेभ्यो दर्शय । भारतीहस्ते च मुञ्च । भारती च तत्र पीठे स्वयं साक्षाद्वसति । असत्यं प्रबन्धं हस्ते न्यस्तमवकरनिकरमिव दूरे क्षिपति । सत्यं तु मूर्द्धधूननपूर्वं सुष्ठु इत्यूरीकरोति । उपरितः पुष्पाणि पतन्ति । श्रीहर्षो राजदत्तार्थनिष्पन्नविपुलसामग्रीकः काश्मीरानगमत् । सरस्वतीहस्ते पुस्तकं न्यास्थत् । सरस्वत्या 30
दूरे क्षिप्तं तत् । श्रीहर्षेण कथितम्–किं जरतीति विकलासि, यन्मदुक्तमपि प्रबन्धमितरप्रबन्ध-

---

1 P भाषष्टे । 2 P समो कोऽपि न किं पुनरधिकः । ‡ एतदन्तर्गतः पाठः पतितः P पुस्तके । 3 B वसुधांशुः । 4 B राज्ञो । 5 D केवलं ।

मिव मन्यसे?। भारत्याह–भोः परमर्मभाषक! न स्मरसि, यदत्रोक्तं त्वया एकादशे सर्गे चतुःषष्टितमे काव्ये–

१५६. देवी पवित्रितचतुर्भुजवामभागा वागालपत्पुनरिमां गरिमाभिरामाम्।
एतस्य[1] निष्कृपकृपाणसनाथपाणेः पाणिग्रहादनुगृहाण गणं गुणानाम् ॥ ४ ॥

5 एवं मां विष्णुपत्नीत्वेन प्रकाश्य लोके रूढं कन्यात्वं लुप्तवानसि?। ततो मया पुस्तकं क्षिप्तम्।

१५७. याचको वञ्चको व्याधिः पञ्चत्वं मर्मभाषकः। योगिनामप्यमी पञ्च प्रायेणोद्वेगहेतवः ॥ ५ ॥

इति वाग्देवीवाचं श्रुत्वा श्रीहर्षो वदति–किमर्थमेकस्मिन्नवतारे नारायणं पतिं चक्रुषी। त्वं पुराणेष्वपि विष्णुपत्नीति पठ्यसे। ततः सत्ये[2] किमिति कुप्यसि?। कुपितैः किं छुट्यते कलङ्कात्?। इति श्रुत्वा स्वयं गृहीत्वा पुस्तकं हस्ते धारितम्। ग्रन्थश्च श्लाघितः सभासमक्षम्। श्रीहर्षेण 10 पण्डिता उक्तास्तत्रत्याः–ग्रन्थमत्रत्याय राज्ञे माधवदेवनाम्ने दर्शयत। श्रीजयन्तचन्द्राय च शुद्धोऽयं ग्रन्थ इति लेखं प्रदत्त। इति श्रुतेऽपि ग्रन्थे भारत्याभिमते ज्ञातेऽपि ते न लेखं ददते, न भूपं दर्शयन्ति। स्थितः श्रीहर्षो बहून् मासान्। जग्धं पाथेयम्। विक्रीतं वृषभादि। मितीभूतः परिच्छदः। एकदा नद्यासन्नदेशे कूपतटासन्नतमे देवकुले रुद्रजपं रहः करोति। तत्रागते कयोश्चिद्गृहिणोरुल्लण्ठे चेट्यौ जलप्रथमपश्चाद्ग्रहणघटभरणविषये वादे लग्ने। तयोश्चिरमु- 15 क्तिप्रत्युक्तिरभूत्। शीर्षाणि स्फुटितानि घातप्रतिघातैः। गते राजकुलम्। राजा साक्षिणं गवेषयति। उक्ते ते–अत्र कलहे कोऽपि साक्षी विद्यते न वा?। ताभ्यां जगदे–विप्र एकस्तत्रास्ते जपतत्परः। गता राजकीयाः। आनीतः श्रीहर्षः पृष्टस्तयोर्नयानयौ। श्रीहर्षेण गीर्वाणवाण्योक्तम्–देव! वैदेशिकोऽहम्। न वेद्मि किमप्येते प्राकृतवादिन्यौ ब्रूतः। केवलं तान् शब्दान् वेद्मि। राज्ञोक्तम्–ब्रूहि। तत्क्रमस्थमेव तद्भाषित-प्रतिभाषितशतमभिहितमनेन। राजा चमत्कृतः– 20 अहो प्रज्ञा!, अहो अवधारणा!। दास्योर्वादं निर्णीय यथासम्भवं निग्रहानुग्रहौ कृत्वा प्रहित्य श्रीहर्षमपृच्छद् राजा–कस्त्वमेवं मेधिरशिरोमणिः?। श्रीहर्षेणोक्तं सर्वं कथानकं स्वम्। राजन्! पण्डितकृतदौर्जन्यात्तव पुरे दुःखी तिष्ठामि। सम्यक्पारम्पर्यज्ञो राजा पण्डितानाहूयावादीत्– धिङ्मूढाः! ईदृशेऽपि रत्ने न स्निह्यथ?।

१५८. वरं प्रज्वलिते वह्नावह्नाय निहितं वपुः। न पुनर्गुणसम्पन्ने कृतः स्वल्पोऽपि मत्सरः ॥ ६ ॥

25 १५९. वरं सा निर्गुणाऽवस्था यस्यां कोऽपि न मत्सरी। गुणयोगे तु वैमुख्यं प्रायः सुमनसामपि ॥ ७ ॥

तस्मात्खला यूयम्। गच्छत एतं महात्मानं प्रत्येकं [3]स्वस्वगृहेषु सत्कुरुत। तदा श्रीहर्षः प्रागदत्[4]–

१६०. यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं केव कुरुते।
मदुक्तिश्चेतश्चेन्मदयति सुधीभूय सुधियः किमस्या नाम स्यादरसपुरुषाराधनरसैः? ॥ ८ ॥

30 इति ललज्जिरे[5] पण्डिताः सर्वे। गृहं नीत्वा सत्कृत्यानुनीय राज्ञा च सत्कार्य ज्ञैः[6] प्रहितः श्रीहर्षः काशीम्। मिलितो जयन्तचन्द्राय। उक्तं सर्वम्। तुष्टः सः। प्रसृतं नैषधं लोके।

1 P अस्यारिनिष्कृ०। 2 P सत्यं। 3 P स्वगृ०। 4 P प्रागदीत्। 5 BDP लज्जिरे। 6 BDE सत्कार्योज्ञैः।

§ ६५) अत्रान्तरे जयन्तचन्द्रस्य पद्माकरनामा प्रधाननरः श्रीअणहिलपत्तनं गतः । तत्र सरस्तटे रजकक्षालितायां शाटिकायां केतक्यामिव मधुकरकुलं निलीयमानं दृष्ट्वा विस्मितोऽप्राक्षीद्रजकम्[1]– यस्या युवतेरियं शाटी तां मे दर्शय । तस्य हि मन्त्रिणस्तत्पद्मिनीत्वे निर्णयस्थं मनः । रजकेन सार्यं[2] तस्मै तद्गृहं नीत्वा, तामर्पयित्वा, तत्स्वामिनी सूहवदेविनाम्नी शालापतिपत्नी विधवा यौवनस्था सुरूपा दर्शिता । तां कुमारपालराजपार्श्वादुपरोध्य तद्गृहान्नीत्वा सोमनाथयात्रां कृत्वा काशीं गतः । तां[3] पद्मिनीं जयन्तचन्द्रभोगिनीमकरोत् । सूहवदेविरिति ख्यातिमगात् । सा च सगर्वा विदुषीति कृत्वा 'कलाभारती'ति पाठयति लोके । श्रीहर्षोऽपि 'नरभारती'ति पठ्यते[4] । तस्य तन्न सहते सा मत्सरिणी ।

§ ६६) एकदा ससत्कारमाकारितः श्रीहर्षः । भणितश्च–त्वं कः ? । श्रीहर्षः–'कलासर्वज्ञो'ऽहम् । राज्याऽभाणि–तर्हि मामुपानहौ परिधापय । को भावः–यद्ययं न वेद्मि इति भणति द्विजत्वा-त्तर्हि अज्ञः । श्रीहर्षेणाङ्गीकृतम् । गतो निलयम् । [5]तरुवल्कलैस्तथा तथा परिकर्मितैः सार्यं लोलाक्षः सन् दूरस्थः स्वामिनीमाजूहवत् । चर्मकारविधिनोपानहौ पर्यदीधपत्, अभ्युक्षणं निक्षिपध्वं चर्मकारोऽहमिति वदन् । राजानमपि तत्कृतां कुचेष्टां ज्ञापयित्वा खिन्नो गङ्गातीरे संन्यासमग्रहीत् । सा च सूहवदेविः साम्राज्येशा पुत्रमजनयत् । सोऽपि यौवनमाससाद । धीरः परं दुर्नयमयः । तस्य च राज्ञो विद्याधरमन्त्री । स च चिन्तामणिविनायकप्रसादात्सर्वधातुहे-मत्वकरणप्रख्यातमाहात्म्यस्पर्शपाषाणलाभात् ८८०० विप्राणां भोजन[6]दाता इति लघुयुधि-ष्ठिरतया ख्यातः । कुशाग्रीयप्रज्ञः[7] । राजा तं जगदे–राज्यं कस्मै कुमाराय ददामि ? । मन्त्र्याह– मेघचन्द्राय सुवंशाय देहि, न पुनर्धूर्तापुत्राय । राजा तु तया कार्मणितस्तत्पुत्रायैव दित्सति । एवं विरोध उत्पन्नो मन्त्रि-राज्ञोः । कथंकथञ्चिन्मन्त्रिणा राज्ञीवाचमप्रमाणीकार्य भूपो मेघचन्द्र-कुमाराय[8] राज्यदानमङ्गीकारितः । राज्ञी क्रुद्धा । धनाढ्यतया स्वच्छन्दतया निजप्रधाननरान् प्रेष्य तक्षशिलाधिपतिः सुरत्राणः कासीभञ्जनाय प्रयाणे प्रयाणे सपादलक्षहेमदानेन चालितः । आयाति । तत्तु विद्याधरेण चरदृशा विदितम् । राज्ञे कथितम् । राजा तत्कार्मणदृढमूढः[9] प्राह– ममेयं वल्लभेश्वरी नैवं पतिद्रोहं समाचरति । मन्त्री तु वदति–राजन् ! अमुकप्रयाणे तिष्ठति शाखीन्द्रः[10] । राज्ञा हक्कितो गतो गृहम् । चिन्तितं च तेन–नृपस्तावन्मूढः; राज्ञी बलवती, लब्धप्रसरा, अविवेकिनी । मम मरणं यदि[11] स्वामिमरणादर्वाग् भवेत्तदा धन्यता । प्रातश्चलितो मन्त्री स्वसदनात् । पथि गच्छन्तं पिण्याकं दृष्ट्वा तमजिघ्रसिषत् । पुनः पुरो गतः स्फुटित-चनकपिटकमालोक्य तददने मनोऽदधत् । तेन कुचेष्टाद्वयेनात्मनो विधिवैपरीत्यं निर्णीयोपराजं गत्वा व्यज्ञपयत्[12]–देव ! अहं गङ्गाजले मङ्क्त्वा म्रिये, यद्यादिशसि । राज्ञाऽऽख्यातम्–[13] यदि म्रियसे तदा सुखेन जीवामः । कर्णज्वरो निवर्त्तते । मन्त्री दूनः । हुं !–

१६१. हितवचनानाकर्णनमनये वृत्तिः प्रियेष्वपि द्वेषः । निजगुरुजनेऽप्यवज्ञा मृत्योः किल पूर्वरूपाणि ॥ ९ ॥

आगतं राज्ञो मरणम् । राजानमापृच्छ्य गृहं[14] गत्वा सर्वस्वं[15] द्विजाति[16]लोकाय प्रदाय भववि-

1 P ऽप्राक्षद् । 2 P सार्यं गत्वा । 3 P 'तां' नास्ति । 4 P पाठते । 5 ABD तरुवल्कैः । 6 P भोजनं । 7 A प्राज्ञः । 8 P विना सर्वत्र 'मेघचन्द्रराज्य०' । 9 A कार्मणमूढः; P कार्मणदिङ्गमूढ. । 10 A साखीन्द्रः । 11 P 'यदि' नास्ति । 12 P व्यज्ञपत् । 13 P राजाऽऽख्यत; B राजाख्यात् । 14 A गृहे । 15 P सर्वं । 16 P द्विजादि० ।

रक्तो जाह्नवीजलमध्यं प्रविश्य कुलपुरोहितमाह–दानं गृहाण। विप्रेणापि[1] करः प्रसारितः। दत्तः स्पर्शपाषाणः। तेनोक्तम्–धिक् ते दानम्!, यद्ग्रावाणं दत्से। इति क्रुद्धेनान्तरुदकं चिक्षिपे। सोऽश्मा गङ्गादेव्या लले[2]। मन्त्री जले मङ्क्त्वा मृतः। राजा अनाथो जातः। सुरत्राण आयातः। नगरे[3] भाण्डं भाण्डेन स्फुटितम्। राजा युद्धायाभिमुखमागात्। ८४०० [*एतावन्ति निस्वा-5नानि निजदले परं एकस्यापि] निस्वानस्वनं राजा न शृणोति। आपृच्छच्च तटस्थान्। तैर्बभणे–म्लेच्छधनुर्ध्वानेषु मग्नानि ध्वानान्तराणि। राजा हृदयेऽहारयत्[4]। ततो न ज्ञायते–किं हतो गतो मृतो वा। [गङ्गाजलेऽपतत्*] यवनैर्लाता पूः।

॥ इति श्रीहर्ष-विद्याधर-जयन्तचन्द्रप्रबन्धः ॥ ११ ॥

## १२. अथ हरिहरप्रबन्धः।

10 § ६७) श्रीहर्षवंशे हरिहरः। गौडदेश्यः सिद्धसारस्वतः। स गूर्ज्जरधरां प्रत्यचालीत्। अश्वशतद्वयम्, मानवानां शतपञ्चकम्, करभाः पञ्चाशत्, अनिवारमन्नदानम्। धवलक्कतटग्राममागात्। राणश्रीवीरधवल-श्रीवस्तुपाल-श्रीसोमेश्वरदेवेभ्यः पृथक् पृथक् आशीर्वादं प्रगल्भबटुहस्तेन प्राहैषीत्। श्रीवस्तुपालो जहर्ष। उत्थाय बटुं सह नीत्वा श्रीवीरधवलाय पण्डितस्याशीर्वादमदीदृशत्[5], तद्गुणांश्चावर्णयत्। राणकेनोक्तम्–किमत्र युक्तम्?। मन्त्र्याह–देव! विस्तरेण प्रातः पण्डि-15तस्य प्रवेशमहोत्सवः[6] क्रियते। विपुलं देयं दीयते। राणकेनोक्तम्–न्याय्यम्। ततो निवृत्तो मन्त्रिराजश्च बटुश्च। बटुना तृतीयाशीर्वादः पण्डितसोमेश्वरदेवायादर्शि[7]। तत्कवितया[8] तस्य मात्सर्यमदीपिष्ट। सनिःश्वासमधोऽद्राक्षीत्। बटुं [9]चालापीदपि न। आगत[10] उत्थाय बटुर्हरिहरान्तिकम्। उक्तं राणक-मन्त्रिणोः सौमनस्यम्, सोमेश्वरस्य तु दौर्मनस्यम्। कुपितः सोमेश्वरदेवे हरिहरः। जातं प्रातः। राणकः समन्त्रिकः सचातुर्वर्ण्यः सर्वर्द्ध्या सम्मुखो गतः। मिलितो 20हरिहरः। तत्र वीरधवलं प्रति–

१६२. शम्भुर्मानससन्निधौ सुरधुनीं मूर्ध्ना दधानः स्थितः, श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ।
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभू,–र्मन्ये वीर! तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥ १ ॥

१६३. दृष्टस्तेन शरान्किरन्नभिमुखः क्षत्रक्षये भार्गवो, दृष्टस्तेन निशाचरेश्वरवधव्यग्रो रघुग्रामणीः।
दृष्टस्तेन जयद्रथप्रमथनोन्निद्रः सुभद्रापति,–र्दृष्टो येन रणाङ्गणे सरभसश्चौलुक्यचूडामणिः ॥ २ ॥

25 बटुः पृष्टः पण्डितेन–अत्र सदसि सोमेश्वरोऽस्ति न वा?। बटुराह–स क्रोधान्नागतः। पण्डितो ज्ञात्वाऽस्थात्। जातः प्रवेशः। राणकेन दत्तं सौधं[11] धन-कुप्य-वसन-परिजन-तुरगादिचमत्कारकम्[12]।

§ ६८) अथ मन्त्रिगृहं गतोऽसौ। गुर्वी सभा। मन्त्र्यभ्युत्थानं चक्रे। ऊचे च–

१६४. मुधा मधु मुधा सीधु मुधा सोऽपि सुधारसः। आस्वादितं मनोहारि यदि हारिहरं वचः ॥ ३ ॥

---

1 A विप्रेण। 2 P जले। 3 AC नगरं। * P पुस्तक एवायं कोष्ठकगत पाठ प्राप्यते। 4 P हारयामास। 5 A अदीदिशत्; DE अदिशत्। 6 AC प्रवेशोत्सव.। 7 A दर्शितः। 8 AP कवि०। 9 AC बटुश्चा०। 10 A आयातः। 11 DP सौध०। 12 B चमत्कारम्।

पण्डितस्तूचे–देव! लघुभोजराज! विचारचतुर्मुख! सरस्वतीकण्ठाभरण! अवधारय। वयं पण्डिताः। अस्माकं माता भारती। सा च त्रिभुवनचारिणी। एकदा भारत्या सह महेन्द्रस्य सभामगमाम[1]। सा च सुधर्मा नाम। इन्द्रः श्रीमान्। ३ कोट्यः[2] सुराङ्गनाः। ८४ [3]सहस्राणि सामानिकाः। तथा–

१६५. द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश। षट्त्रिंशत् तुषिताश्चैव षष्टिराभास्वरा अपि ॥ ४ ॥
१६६. षट्त्रिंशदधिके[4] माहाराजिकाश्च शते उभे। रुद्रा एकादशैकोनपञ्चाशद्वायवोऽपि च ॥ ५ ॥
१६७. चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश। साध्याश्च द्वादशेत्याद्याः प्रसिद्धा गणदेवताः ॥ ६ ॥

[*एतत्समृद्धिस्वरूपं विलोक्य] वयं विस्मिताः स्थिताः–अहो! तपःफलभोगः। [–*इत्यादि चिन्तयन्तो यावता स्मः] अत्रान्तरे आगतस्तत्र कश्चन[5] बुम्बावक्त्रः।

१६८. देव! स्वर्नाथ! कष्टं ननु क इह भवान्नन्दनोद्यानपालः
खेदस्तत्कोऽद्य केनाप्यहह हृत इतः काननात्कल्पवृक्षः।
हुं मा वादीस्तदेतत्किमपि करुणया मानवानां मयैव
प्रीत्यादिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन ॥ ७ ॥

एवं तत्रालापं श्रुत्वा विस्मितोऽहं भारत्या सह पञ्चमं [6]कल्पद्रुमं त्वां द्रष्टुमागाम्। एवं सविस्तरं[7] काव्यं व्याख्याय स्थितः पण्डितः। मन्त्री यावत्किं ददामि–इति चिन्तयति तावद् डोडीयवंश्यराणभीमदेवेन जात्या वाहनोत्तीर्णाश्चतुर्विंशतिरश्वा एकं च दिव्यं पदकं प्राभृतमानीतम्। तदेव पण्डिताय सर्वं दत्तम्। तुष्टोऽसौ पञ्चमः कल्पतरुर्भवसि इत्युक्त्वा स्वोत्तारकमगात्। गतेषु कतिपयेष्वहःसु मिलितायां सभायां पुरःस्थे सोमेश्वरे राणकेन पण्डितहरिहर उक्तः–पण्डित! अत्र पुरेऽस्माभिर्वीरनारायणाख्यः प्रासादः कारितोऽस्ति। तत्प्रशस्तिकाव्यान्यष्टोत्तरं शतं सोमेश्वरदेवपार्श्वात्कारितम्। तत्र भवन्तोऽवदधतु। यथा शुद्धत्वे निश्चयो भवति ज्ञानाम्। महालक्ष्मीदृष्टौ नाणकपरीक्षा यतः। हरिहरेणोक्तम्–कथाप्यन्तां तानि। उक्तानि सोमेश्वरेण। तानि श्रुत्वा [8]हरिहर ऊचे–देव! सुष्ठु काव्यानि परिचितानि च नः। यतो मालवीयेषूज्जयनीं गतैरस्माभिः सरस्वतीकण्ठाभरणप्रासादगर्भगृहे पट्टिकायां श्रीभोजदेववर्णनाकाव्यान्यमून्यदृक्षत[9]। यदि तु प्रत्ययो नास्ति तदा परिपाट्या श्रूयन्ताम्[10]। इत्युक्त्वा क्रमेणास्खलितान्यपाठीत्। खिन्नो राणकः। प्रीताः खलाः। व्यथिताः श्रीवस्तुपालादयः सज्जनाः। उत्थिता सभा। हत इव मृत इव स्तम्भित इव जडित इव जातः सोमेश्वरः। गतः स्वगृहम्। ह्रिया वदनं न दर्शयति गृहेऽपि, का कथा राजादिसदनगमनस्य।

§६९) अथ सोमेश्वरः श्रीवस्तुपालमन्दिरं गत्वोवाच–मन्त्रिन्! ममैव तानि काव्यानि; नान्यथा। मम च[11] शक्तिं जानासि त्वम्[12]। हरिहरस्त्वेवं मां व्यजूगुपत्। किमहं करोमि?। मन्त्र्याह–तमेव शरणं श्रय। यतः–

1 A अगमम्। 2 A ३० कोट्यः। 3 A ८४०० सहस्रह०। 4 A ०धिकं। * P पुस्तक एवैष कोष्ठकगतः पाठो विद्यते। 5 P कोऽपि बुम्बां पातयन्नाह। 6 P पञ्चकल्पं०। 7 P विस्तरं। 8 P तानि श्रुत्वा तानि हरि०। 9 A अदृश्यत। 10 P श्रूयतां। 11 'च' नास्ति P। 12 AC 'त्वं' नास्ति।

रक्तो जाह्नवीजलमध्यं प्रविश्य कुलपुरोहितमाह–दानं गृहाण। विप्रेणापि[1] करः प्रसारितः। दत्तः स्पर्शपाषाणः। तेनोक्तम्–धिक् ते दानम्!, यद्ग्रावाणं दत्से। इति क्रुद्धेनान्तरुदकं चिक्षिपे। सोऽश्मा गङ्गादेव्या लले[2]। मन्त्री जले मङ्क्त्वा मृतः। राजा अनाथो जातः। सुरत्राण आयातः। नगरे[3] भाण्डं भाण्डेन स्फुटितम्। राजा युद्धायाभिमुखमागात्। ८४०० [*एतावन्ति निस्वानानि निजदले परं एकस्यापि] निस्वानस्वनं राजा न शृणोति। आपृच्छच्च तटस्थान्। तैर्बभणे–म्लेच्छधनुर्ध्वानेषु मग्नानि ध्वानान्तराणि। राजा हृदयेऽहारयत्[4]। ततो न ज्ञायते–किं हतो गतो मृतो वा। [गङ्गाजलेऽपतत्*] यवनैर्लाता पूः।

॥ इति श्रीहर्ष-विद्याधर-जयन्तचन्द्रप्रबन्धः ॥ ११ ॥

## १२. अथ हरिहरप्रबन्धः।

§ ६७) श्रीहर्षवंशे हरिहरः। गौडदेश्यः सिद्धसारस्वतः। स गूर्जरधरां प्रत्यचालीत्। अश्वशतद्वयम्, मानवानां शतपञ्चकम्, करभाः पञ्चाशत्, अनिवारमन्नदानम्। धवलक्ककतटग्राममागात्। राणश्रीवीरधवल-श्रीवस्तुपाल-श्रीसोमेश्वरदेवेभ्यः पृथक् पृथक् आशीर्वादं प्रगल्भबटुहस्तेन प्राहैषीत्। श्रीवस्तुपालो जहर्ष। उत्थाय बटुं सह नीत्वा श्रीवीरधवलाय पण्डितस्याशीर्वादमदीदृशत्[5], तद्गुणांश्चावर्णयत्। राणकेनोक्तम्–किमत्र युक्तम्?। मन्त्र्याह–देव! विस्तरेण प्रातः पण्डितस्य प्रवेशमहोत्सवः[6] क्रियते। विपुलं देयं दीयते। राणकेनोक्तम्–न्याय्यम्। ततो निवृत्तो मन्त्रिराजश्च बटुश्च। बटुना तृतीयाशीर्वादः पण्डितसोमेश्वरदेवायादर्शि[7]। तत्कवितया[8] तस्य मात्सर्यमदीपिष्ट। सनिःश्वासमधोऽद्राक्षीत्। बटुं [9]चालापीदपि न। आगत[10] उत्थाय बटुर्हरिहरान्तिकम्। उक्तं राणक-मन्त्रिणोः सौमनस्यम्, सोमेश्वरस्य तु दौर्मनस्यम्। कुपितः सोमेश्वरदेवे हरिहरः। जातं प्रातः। राणकः समन्त्रिकः सचातुर्वर्ण्यः सर्वर्द्ध्या सम्मुखो गतः। मिलितो हरिहरः। तत्र वीरधवलं प्रति–

१६२. शम्भुर्मानससन्निधौ सुरधुनीं मूर्ध्ना दधानः स्थितः, श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ।
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभू,–र्मन्ये वीर! तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥ १ ॥

१६३. दृष्टस्तेन शरान्किरन्नभिमुखः क्षत्रक्षये भार्गवो, दृष्टस्तेन निशाचरेश्वरवधव्यग्रो रघुग्रामणीः।
दृष्टस्तेन जयद्रथप्रमथनोन्निद्रः सुभद्रापति,–र्दृष्टो येन रणाङ्गणे सरभसश्चौलुक्यचूडामणिः ॥ २ ॥

बटुः पृष्टः पण्डितेन–अत्र सदसि सोमेश्वरोऽस्ति न वा?। बटुराह–स क्रोधान्नागतः। पण्डितो ज्ञात्वाऽस्थात्। जातः प्रवेशः। राणकेन दत्तं सौधं[11] धन-कुप्य-वसन-परिजन-तुरगादिचमत्कारकम्[12]।

§ ६८) अथ मन्त्रिगृहं गतोऽसौ। गुर्वी सभा। मन्त्र्यभ्युत्थानं चक्रे। ऊचे च–

१६४. मुधा मधु मुधा सीधु मुधा सोऽपि सुधारसः। आस्वादितं मनोहारि यदि हारिहरं वचः ॥ ३ ॥

---

1 A विप्रेण। 2 P जले। 3 AC नगरं। * P पुस्तक एवाय कोष्ठकगत. पाठ. प्राप्यते। 4 P हारयामास। 5 A अदीदिशत्, DE अदिशत्। 6 AC प्रवेशोत्सव। 7 A दर्शितः। 8 AP कवि०। 9 AC बटुश्चा०। 10 A आयातः। 11 DP सौध०। 12 B चमत्कारम्।

पण्डितस्तूचे–देव! लघुभोजराज! विचारचतुर्मुख! सरस्वतीकण्ठाभरण! अवधारय। वयं पण्डिताः। अस्माकं माता भारती। सा च त्रिभुवनचारिणी। एकदा भारत्या सह महेन्द्रस्य सभामगमाम[1]। सा च सुधर्मा नाम। इन्द्रः श्रीमान्। ३ कोट्यः[2] सुराङ्गनाः। ८४ [3]सहस्राणि सामानिकाः। तथा–

१६५. द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश। षट्त्रिंशत् तुषिताश्चैव षष्टिराभास्वरा अपि ॥ ४ ॥ 5

१६६. षट्त्रिंशदधिके[4] माहाराजिकाश्च शते उभे। रुद्रा एकादशैकोनपञ्चाशद्वायवोऽपि च ॥ ५ ॥

१६७. चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश। साध्याश्च द्वादशेत्याद्याः प्रसिद्धा गणदेवताः ॥ ६ ॥

[*एतत्समृद्धिस्वरूपं विलोक्य] वयं विस्मिताः स्थिताः–अहो! तपःफलभोगः। [–*इत्यादि चिन्तयन्तो यावता स्मः] अत्रान्तरे आगतस्तत्र कश्चन[5] बुम्बावक्त्रः।

१६८. देव! स्वर्नाथ! कष्टं ननु क इह भवान्नन्दनोद्यानपालः 10
खेदस्तत्कोऽद्य केनाप्यहह हृत इतः काननात्कल्पवृक्षः।
हुं मा वादीस्तदेतत्किमपि करुणया मानवानां मयैव
प्रीत्यादिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन ॥ ७ ॥

एवं तत्रालापं श्रुत्वा विस्मितोऽहं भारत्या सह पञ्चमं [6]कल्पद्रुमं त्वां द्रष्टुमागाम्। एवं सविस्तरं[7] काव्यं व्याख्याय स्थितः पण्डितः। मन्त्री यावत्किं ददामि–इति चिन्तयति तावद् 15 डोडीयवंश्यराणभीमदेवेन जात्या वाहनोत्तीर्णाश्चतुर्विंशतिरश्वा एकं च दिव्यं पट्टकं प्राभृतमानीतम्। तदेव पण्डिताय सर्वं दत्तम्। तुष्टोऽसौ पञ्चमः कल्पतरुर्भवसि इत्युक्त्वा स्वोत्तारकमगात्। गतेषु कतिपयेष्वहःसु मिलितायां सभायां पुरःस्थे सोमेश्वरे राणकेन पण्डितहरिहर उक्तः–पण्डित! अत्र पुरेऽस्माभिर्वीरनारायणाख्यः प्रासादः कारितोऽस्ति। तत्प्रशस्तिकाव्यान्यष्टोत्तरं शतं सोमेश्वरदेवपार्श्वात्कारितम्। तत्र भवन्तोऽवदधतु। यथा शुद्धत्वे निश्चयो भवति 20 ज्ञानाम्। महालक्ष्मीदृष्टौ नाणकपरीक्षा यतः। हरिहरेणोक्तम्–कथाप्यन्तां तानि। उक्तानि सोमेश्वरेण। तानि श्रुत्वा [8]हरिहर ऊचे–देव! सुष्ठु काव्यानि परिचितानि च नः। यतो मालवीयेषूज्जयनीं गतैरस्माभिः सरस्वतीकण्ठाभरणप्रासादगर्भगृहे पट्टिकायां श्रीभोजदेववर्णनाकाव्यान्यमून्यदृक्षत[9]। यदि तु प्रत्ययो नास्ति तदा परिपाट्या श्रूयन्ताम्[10]। इत्युक्त्वा क्रमेणास्खलितान्यपाठीत्। खिन्नो राणकः। प्रीताः खलाः। व्यथिताः श्रीवस्तुपालादयः सज्जनाः। उत्थिता सभा। 25 हत इव मृत इव स्तम्भित इव जडित इव जातः सोमेश्वरः। गतः स्वगृहम्। ह्रिया वदनं न दर्शयति गृहेऽपि, का कथा राजादिसदनगमनस्य।

§ ६९) अथ सोमेश्वरः श्रीवस्तुपालमन्दिरं गत्वोवाच–मन्त्रिन्! ममैव तानि काव्यानि; नान्यथा। मम च[11] शक्तिं जानासि त्वम्[12]। हरिहरस्त्वेवं मां व्यजूगुपत्। किमहं करोमि?। मन्त्र्याह–तमेव शरणं श्रय। यतः– 30

---

1 A अगमम्। 2 A ३० कोट्यः। 3 A ८४०० सहस्रसह०। 4 A ०धिकं। * P पुस्तक एवैष कोष्ठकगतः पाठो विद्यते। 5 P कोऽपि बुम्बां पातयन्नाह। 6 P पञ्चकल्प०। 7 P विस्तरं। 8 P तानि श्रुत्वा तानि हरि०। 9 A अदृश्यत। 10 P श्रूयतां। 11 'च' नास्ति P। 12 AC 'त्वं' नास्ति।

१६९.　भजते विदेशमधिकेन जितस्तदनु प्रवेशमथवा कुशलैः ।
[*मुखमिन्दुरुज्ज्वलकपोलमितः प्रतिमाच्छलेन सुतनोरविशत् ॥]

इति न्यायात् । पण्डितः—तर्हि तत्र[1] मां नय । तथाकृतं मन्त्रिणा । पण्डितसोमेश्वरं बहिरासयित्वा मन्त्री स्वयं हरिहरान्तिकमगात् । बभाण च—पण्डितसोमेश्वरदेवस्तवान्तिकमागतोऽस्ति
5 विज्ञीप्सुः[2] । हसितो हरिहरः । आनीनयत्स्वसमीपम् । चकाराभ्युत्थानालिङ्गनमहासनादिसत्कारम् । सोमेश्वरेणोक्तम्—पण्डित ! निस्तारय मामस्मात्परकाव्यहरणकलङ्कपङ्कात् । यतः—

१७०.　आगतस्य निजगेहमप्यरेर्गौरवं विदधते महाधियः ।
मीनमात्मसदनं समेयुषो गीष्पतिर्व्यधित तुङ्गतां कवेः ॥ ८ ॥

तुष्टो हरिहरो भणति स्म—मा स्म चिन्तां विधाः[3] । पुनर्गौरवमारोपयिताऽस्मि त्वाम् । गतः
10 स्वस्थानं मन्त्री सोमेश्वरश्च । प्रत्यूषे राणकसभाभरे सोमेश्वर आह्वायितः । प्रस्तावना चारब्धा । यथा—जयति परमेश्वरी भारती, यत्प्रसादादेवं मम शक्तिः । श्रीवस्तुपालेनोक्तम्—किं किम् ? । हरिहरः—देव ! मया कावेरीनदीतटे सारस्वतो[4] मन्त्रः साधितः । होमकाले गीर्देवी प्रत्यक्षाऽऽसीत् । वरं वृणीष्वेत्याह स माम्[5] । मया जगदे—जगदेकमातर् ! यदि तुष्टाऽसि तदा एकदा भणितानां १०८ सङ्ख्यानां ऋचां षट्पदानां काव्यानां वस्तुकानां घत्तानां दण्डकानां वाऽवधारणे समर्थो
15 भूयासम् । देव्याचष्ट—तथाऽस्तु । ततः प्रभृति यो यदाह १०८ तत्तु ब्रुवे । यथेदं सोमेश्वरदेवोपज्ञं काव्याष्टोत्तरशतम् । राणकेनोक्तम्—प्रत्ययः कार्यताम् । भाणितान्यष्टोत्तरशतानि तत्तच्छन्दसाम्; प्रतिभाणितानि च हरिहरेण तानि । जातो निश्चयः । पण्डितहरिहरवचने क्षुत्तृष्णातपप्रभृतिचिन्तानपेक्षः स्थितो लोकः । राणकेश्वरेण बभणे—तर्हि पण्डित ! कथमेवं दूषितः सोमेश्वरः ? । हरिहरः प्राभाषत—देव ! राणेन्द्र[6] ! †पण्डितेन मय्यवज्ञा दध्रे । तत्फलमिदं ददे । यतः—

20　१७१.　प्रियं वा विप्रियं वापि सविशेषं परार्पितात् । प्रत्यर्पयन्ति ये नैव तेभ्यः साप्युर्वरा वरा ॥ ९ ॥

राणः प्राह—तर्ह्यस्त्वेवम् । परं मिथः सरस्वतीपुत्रयोः स्नेहो युक्तः । इत्युक्त्वा कण्ठग्रहणमकारयत् । स्थितो निष्कलङ्कः सोमेश्वरः । वर्तते नित्यमिष्टगोष्ठी । हरिहरो नैषधकाव्यान्यवसरोचितानि पठति । श्रीवस्तुपालः प्रीयते—अहो ! अश्रुतपूर्वाणि काव्यान्यमूनि । एकदाऽऽलापितः हरिहरः[7]—पण्डित ! कोऽयं ग्रन्थः ? । पण्डितो वदति—नैषधं महाकाव्यम् । कः कविः ? । श्रीहर्षः†
25 वस्तुपालेन गदितम्—तदादर्शं दर्शय तर्हि । पण्डितो ब्रूते—नान्यत्रायं ग्रन्थः । चतुरो यामानर्पयिष्यामि पुस्तिकाम् । अर्पिता पुस्तिका । रात्रौ सद्यो लेखकनियोगिभिर्लेखिता नवीना पुस्तिका । जीर्णरज्ज्वावृता, वासन्यासेन धूसरीकृत्य मुक्ता । प्रातः पण्डिताय पुस्तिका दत्ता । गृह्यतां तदिदं [8]स्वं नैषधम् । गृहिता पण्डितेन पुस्तिका । मन्त्रिणा न्यगादि—अस्माकमपि कोशे किलास्तीवेदं शास्त्रमिति स्मरामः । विलोक्यतां कोशः । यावद्विलम्बेनैवं कृष्टा नवीना प्रतिः । यावच्छोध्यते[9]
30 तावत् 'निपीय यस्य क्षितिरक्षिणः कथा‡' इत्यादि नैषधमुद्घटिष्ट । दृष्ट्वा पण्डितहरिहरेणोक्तम्—मन्त्रिन् ! तवैव मायेयम् ।

---

* एतदुत्तरार्द्धपद्यभाग A आदर्श एव लभ्यते, नान्यत्र । 1 P 'तत्र' नास्ति । 2 A विज्ञाप्सु. । 3 A व्यधु । 4 A सरस्वती० । 5 P 'माम्' नास्ति । 6 P राण । † एतद्दण्डान्तर्गत· पाठ· पतितः P पुस्तके । 7 P पण्डितहरिहरः कोऽयं । 8 P स्वनै० । 9 P ०च्छोध्यते । ‡ A आदर्शे 'निपीय यस्य क्षितिरक्षिण कथास्तथाद्रियन्ते न बुधा सुधामपि । नलः सितच्छत्रितकीर्तिमण्डल. स राशिरासीन्महसां महोज्वल· ॥' इदं सम्पूर्णं पद्यं लिखितं लभ्यते ।

'यदीदृशेषु कार्येषु नान्यस्य क्रमते मतिः ।'

युक्तं त्वया दण्डिताः प्रतिपक्षाः । स्थापितानि जैन-वैष्णव-शैवशासनानि च । उदञ्चितः स्वामिवंशः । यस्यैवं प्रज्ञा प्रकाशते[1] ।

§७०) अत्रान्तरे वीरधवलप्रहितसैन्यचम्पितेन[2] महाराष्ट्रप्रभुणा सपादकोटिहेमप्रमितो दण्डः प्रहितः । श्रीवस्तुपालेन तु तद्धेम चतुर्दिग्यात्रिकेभ्यो याचकेभ्योऽदापि विवेकात् । तद् दृष्ट्वा हरिहरो वर्णयति–

१७२. आः ! साम्यं न सहेऽहमस्य किमपि क्रोडीकृतैकश्रिया[3], याञ्चोत्तानकरेण खर्वितनिजाकारोष्मणा शार्ङ्गिणा ।
येनैताः पुरुषोत्तमाधिकगुणोद्गारेण युद्धार्णवादा,–कृष्यैव तथा श्रियः शकलशः कृत्वाऽर्थिनामर्पिताः ॥ १० ॥

तदा वीरधवलस्य 'सपादकोटीकाञ्चनवर्षः' इति भट्टादिषु विरुदं ख्यातिमायातम् ।

§७१) अथ हरिहरः सोमेश्वरं नन्तुं गतो देवपत्तनम् । पण्डितसोमेश्वरदेवस्य तत्र तद्दौर्जन्यं स्मृत्वा विषण्णेन काव्यं भणितम्–

१७३. क्व यातु क्वायातु क्व वदतु समं केन पठतु, क्व काव्यान्यव्याजं रचयतु सदः कस्य विशतु ।
खलव्यालग्रस्ते जगति न गतिः कापि कृतिना,–मिति ज्ञात्वा तत्त्वं हर! हर! [4]विमूढो हरिहरः ॥ ११ ॥

१७४. आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवान्, किञ्चिद्वाङ्मयमध्यगीष्महि गुणैः कांश्चित्पराजेष्महि ।
इत्थं मोहमयीमकार्ष्म कियतीं नानर्थकन्थां[5] मनः, स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥ १२ ॥

इत्युक्त्वा धनार्द्धं दत्त्वा शेषार्द्धं गृहीत्वा धवलक्कमध्ये भूत्वा राणक-मन्त्रिणौ आपृच्छ्य कासीं प्राप्य स्वार्थमसाधयदिति ॥

॥ इति हरिहरप्रबन्धः समाप्तः ॥ १२ ॥

## १३. अथ अमरचन्द्रकविप्रबन्धः ।

§७२) श्रीअणहिल्लपत्तनासन्नं वायटं नाम महास्थानमास्ते । चतुरशीतिमहास्थानानामन्यतमत् । तत्र परपुर[6]प्रवेशविद्यासम्पन्नश्रीजीवदेवसूरिसन्ताने श्रीजिनदत्तसूरयो जगर्जुः । तेषां शिष्योऽमरो नाम [7]प्रज्ञालचूडामणिः । स श्रीजिनदत्तसूरिभक्तात् कविराजात्[8] अरसिंहात् सिद्धसारस्वतं मन्त्रमग्रहीत् । तद्गच्छमहाभक्तस्य विवेकनिधेः कोष्ठागारिकस्य पद्मस्य[9] विशालतमे[10] [11]सदनैकदेशे विजने एकविंशत्याचाम्लैर्निद्राजयासनजयकषायजयादिदत्तावधानस्तं मन्त्रमजपत् । विस्तरेण होमं च[12] चक्रे । एकविंशतितम्यां रात्रौ मध्यप्राप्तायां नभस्यभ्युदिताचन्द्रबिम्बान्निर्गत्य स्वरूपेणागत्यामरं भारती करकमण्डलुजलममलमपीप्यत् । वरं च प्रादात्[13]–सिद्धकविर्भव; निःशेषनरपतिपूजागौरववितः[14]श्रेधि । इति वरं दत्त्वा गता भगवती । जातः कविपतिरमरः । रचिता 'काव्यकल्पलता' नाम कविशिक्षा, 'छन्दोरत्नावली', 'सूक्तावली' च । 'कलाकलापाख्यं' च शास्त्रं निबद्धं, 'बालभारतं' च । बालभारते प्रभातवर्णने–

1 P प्रकाश्यते । 2 P ०सैन्यकम्पितेन । 3 P ०श्रियो । 4 P हरहरिमूढो । 5 P ०कन्थी । 6 P परकायप्र०; A परपुरुपप्र० । 7 P प्रज्ञाचू० । 8 P कविराज अरिसिं० । 9 P विना नास्त्यन्यत्रेदं पदम् । 10 A विशालनाम्न । 11 A ०तमे सद० । 12 P 'च' नास्ति । 13 P प्राक्षीत् । 14 P ०गौरवताश्रेधि ।

१७५. दधिमथनविलोलल्लोलदृग्वेणिदम्भादयमदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाणः [1]कृपाणश्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥ १ ॥

इत्यत्र वेण्याः कृपाणत्वेन वर्णनाद् 'वेणीकृपाणोऽमर' इति विरुदं कविवृन्दाल्लब्धम्[2] । दीपिकाकालिदासवत्, घण्टामाघवच्च । कवित्वप्रसिद्धेश्च[3] महाराष्ट्रादिराजेन्द्राणां पूजा उपतस्थिरे ।

§७३) तदा [4]वीसलदेवो राजा गूर्ज्जराधिपतिर्धवलक्कके राज्यं शास्ति । तेनामरकवेर्गुणग्रामः श्रुतः । ठक्कुरं वइजलं प्रधानं प्रेष्य प्रातराहूतः कवीन्द्रः । आसनादिप्रतिपत्तिः कृता । सभा महती । अमरेण पठितम्–

१७६. वीक्ष्यैतद्भुजविक्रमक्रमचमत्कारं नकारं मयि, प्रेम्णो नूनमियं करिष्यति गुणग्रामैकगृह्याशया ।
श्रीमद्वीसलदेव ! देवरमणीवृन्दे त्वदायोधनप्रेक्षा[5]प्रक्षुभिते विमुञ्चति परीरम्भान्न रम्भां हरिः ॥ २ ॥

१७७. त्वत्प्रारब्धप्रचण्डप्रधननिधनितारातिवीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्पन्दमाकन्दमुर्वी ।
दम्भोलिस्तम्भभास्वद्भुज ! भुजगं[6]जगद्धर्तुराभर्तुरेनां तेनायं मूर्ध्नि रत्नद्युतितितिमिषतः शोभते शोणभावः ॥ ३ ॥

रञ्जिता सभा, प्रीणितः पृथ्वीपालः । ततो राज्ञा प्रोक्तम्–यूयं कवीन्द्राः श्रूयध्वे । अमरोऽभिधत्ते–सत्यमेव, यदि गवेषयति देवः । ततो नृपेण सोमेश्वरदेवे दृष्टिः सञ्चारिता । ततः सोमेश्वरेण समस्याऽर्पिता । यथा–

'शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः' ।

अमरेण सद्यः पूरिता–

१७८. कैषा भूषा शिरोऽक्ष्णां तव भुजगपते ! रेखयामास भूत्या
द्यूते मन्मूर्ध्नि शम्भुः सदशनवशतान(९१०)क्षपातान् विजित्य ।
गौरी त्वानङ्ग दृष्टीर्जितनखनवभू(१९२०)स्तद्विशेषात्तदित्थं
शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः ॥ ४ ॥

अत्र शिरोऽक्ष्णामिति शिरसा युक्तानामक्ष्णामिति मध्यमपदलोपी समासः कार्यः । द्वन्द्वे तु प्राण्यङ्गत्वादेकत्वं प्राप्नोति ।

§७४) ततो वामनस्थलीयकविसोमादित्येन समस्या दत्ता–

'धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः' ।

अमरेणोक्तम्–

१७९. भवस्याभूद् भाले हिमकरकला ऽग्रे गिरिसुताललाटस्याश्लेषे हरिणमदपुण्ड्रप्रतिकृतिः ।
कपर्दस्तत्प्रान्ते यदमरसरित्तत्र तदहो ! धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ॥ ५ ॥

§७५) ततः कृष्णनगरवास्तव्येन कमलादित्येन समस्या वितीर्णा–

'मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्' ।

अमरेण पुपूरे–

१८०. तटविपिनविहारोच्छृङ्खलं यत्र यादोमशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ।
वत वक ! न कदाचित्किं श्रुतोऽप्येष वार्द्धिः प्रतनुतिमिनि तल्ले क्वापि गच्छ क्षणेन ॥ ६ ॥

§७६) अथ वीसलनगरीयेण नानाकेन समस्या विश्राणिता–

'गीतं न गायतितरां युवतिर्निशासु' ।

---

1 कृपाण. । 2 P लब्धममरेण । 3 A ०प्रसिद्धिश्च । 4 AC विश्वल० । 5 P ०योधने प्रेक्ष्य । 6 A भुजयुगलजगद्०; P भुजगभुजजगद् ।

अमरेणोक्तम्–[1]

१८१. श्रुत्वा ध्वनेर्मधुरतां सहसाऽवतीर्णे भूमौ मृगे विगतलाञ्छन एष चन्द्रः ।
मा गान्मदीयवदनस्य तुलामितीव गीतं न गायतितरां युवतिर्निशासु ॥ ७ ॥

एवमष्टोत्तरं शतं बहुकविदत्ताः पूरिताः समस्याः श्रीअमरेण । ततो राज्ञाऽभिहितम्–सत्यं कविसार्वभू(भौ)मः श्रीअमरः । तत्र दिने सन्ध्यावधि सभा निषण्णा स्थिता । राजा लङ्घितः सभ्यलोकोऽपि ।

रसावेशे हि कालो ह्रैर्गच्छन्नपि न लक्ष्यते ।

द्वितीयदिने सद्यः काव्यमयैः प्रमाणोपन्यासैः प्रामाणिका [2]जिताः । तृतीयदिने राज्ञा पृष्टम्–अस्माकं सम्प्रति का चिन्ताऽस्तीति कथ्यताम् । अमरेण भणितम्–देव! कथं दूरं गताः । स्वर्गे ऐरावणस्य दक्षिणकर्णे लुकिताः ? । भूपतिः स्वसंवादेऽमोदत, शिरोऽधुनोत् । नित्यं गमनागमने जिनधर्मासन्नः कृतो राजा । चैत्येषु पूजाः कारयति ।

§ ७७) एकदा नृपेण पृष्टम्–भवतां कः कलागुरुः ? । अमरेण गदितम्–[3]अरसिंहः कविराज इति । तर्हि प्रातरत्रानेयः । अमरचन्द्रेणानीतः प्रातः कविराज उपराजम् । तदा राजा खड्गेन श्रमयन्नास्ते । राज्ञा पृष्टम्–अयं कविराजः ? । कविराजेन व्याजह्रे–ओमिति । राजाह–तर्हि वद कालोचितं किञ्चित् । अरसिंहः [4]कवयति–

१८२. त्वत्कृपाणविनिर्माणशेषद्रव्येण वेधसा । कृतः कृतान्तः, [5]सर्प्पस्तु करोद्वर्त्तनवर्त्तिभिः ॥ ८ ॥

१८३. [6]अर्थीच्छाभ्यधिकार्पणं किमपि यः पाणेः कृपाणे गुणः, सञ्चक्राम स यद्ददौ द्युपदवीं प्रत्यर्थिषु क्ष्मार्थिषु ।
[7]तत्सङ्गान्न स वद्धमुष्टिरभवद्येनारिपृथ्वीभुजां, पृष्ठेषु स्वमपि प्रकाममदित[8]प्रोद्दामरोमोद्गमः ॥ ९ ॥

१८४. कलयसि किमिह कृपाणं वीसल ! चलवन्ति शत्रुषु तृणानि । यानि मुखगानि तेषां तवैष[9] लङ्घयितुमसमर्थः ॥१०॥

१८५. देव ! त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखीभुज,–स्तत्र[10] क्रीडति कज्जलाकृतिरसिर्धाराद्विजिह्वः फणी ।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संवेष्टय[11]न्, दीर्घं व्योमविसारि निर्मलयशो निर्म्मोकमुन्मुञ्चति ॥ ११ ॥

अद्भुतकविताद्दर्शनात्कविराजो राजेन्द्रेण नित्य[12]सेवकः कृतः । ग्रासो महान् प्रत्यष्ठापि ।

एकदा श्रीवीसलदेवेन भोजनान्ते तृणं करे धृत्वाऽरसिंहोऽभिदधे–इदं तृणं सद्यो वर्णय । यदि रुचितभङ्ग्या वर्णयसि, तदा [13]ग्रासद्वैगुण्यम्; अन्यथा सर्वग्रासत्याजनम् । इत्युक्तिसमकालमेवाहतप्रतिभतया स ऊचे–

१८६. क्षारोऽब्धिः शिखिनो मखा विषमयं श्वभ्रं क्षयीन्दुर्मुधा, प्राहुस्तत्र सुधामियं तु दनुजत्रस्तेव लीना तृणे ।
पीयूषप्रसवो गवां [14]यंदशनाद्दत्वा यदास्ये निजे, देव ! त्वत्करवालकालमुखतो निर्याति जातिर्द्विषाम् ॥ १२ ॥

ध्वनितो[15] भूपालः । ग्रासद्वैगुण्यं कृतम् ।

§ ७८) कालान्तरेऽमरेण कोष्ठागारिकपद्मगिरा पद्मानन्दाख्यं शास्त्रं रचितम् । एवं कविताकल्लोलसाम्राज्यं प्रतिदिनम् ॥

॥ इति अमरचन्द्रकविप्रबन्धः ॥ १३ ॥



1 A नास्ति पदमेतद् । 2 P जाता. । 3 P अरिसिंह० । 4 A कथयति । 5 A कृतान्तसर्प० । 6 P अत्यर्थाभ्यधि० । 7 P स्वत्स० । 8 P ०मुदित । 9 P न चैष । 10 P ०स्तम्भ- क्रीडति । 11 P संवेष्टयेद् । 12 A नित्यं । 13 A द्वैगुण्यं ग्रासस्य । 14 DE यवशनद्दत्वा । 15 P चमत्कृतो ।

## १४. अथ मदनकीर्तिप्रबन्धः ।

§७९) उज्जयिन्यां विशालकीर्त्तिर्दिगम्बरः । तच्छिष्यो मदनकीर्त्तिः । स पूर्वपश्चिमोत्तरासु तिसृषु दिक्षु वादिनः सर्वान् विजित्य 'महाप्रामाणिकचूडामणिः' इति विरुदमुपार्ज्य स्वगुर्वलङ्कृतामुज्जयिनीमागात्[1] । गुरूनवन्दिष्ट । पूर्वमपि जनपरम्पराश्रुततत्कीर्त्तिः[2] स मदनकीर्त्तिः भूयिष्ठमश्लाघिष्ट । सोऽपि प्रामोदिष्ट । दिनकतिपयानन्तरं च गुरुं न्यगदीत्–भगवन् ! दाक्षिणात्यान् वादिनो विजेतुमीहे । तत्र गच्छामि । अनुज्ञा दीयताम् । गुरुणोक्तम्–वत्स[3] ! दक्षिणां मा गाः । स हि भोगनिधिर्देशः । को नाम तत्र गतो दर्शन्यपि न तपसो भ्रश्येत् । एतद्गुरुवचनं विलङ्घ्य विद्यामदाध्मातो जालकुद्दालनिःश्रेण्यादिभिः प्रभूतैश्च शिष्यैः परिकरितो[4] महाराष्ट्रादिवादिनो मृद्नन् कर्णाटदेशमाप ।

§८०) तत्र विजयपुरे कुन्तिभोजं नाम राजानं स्वयं त्रैविद्यविदं विद्वत्प्रियं सदसि निषण्णं स द्वास्थनिवेदितो ददर्श । तमुपश्लोकयामास–

१८७. देव ! त्वद्भुजदण्डदर्पगरिमोद्गारप्रतापानल,–ज्वालापक्किमकीर्तिपारदघटीविस्फोटिनो विन्दवः ।
शेषाहिः कति तारकाः कति कति क्षीराम्बुधिः कत्यपि, प्रालेयाचलशङ्खशुक्तिकरकाकर्प्पूरकुन्देन्दवः ॥ १३ ॥

१८८. कीर्त्तिः कैकत ! कुन्तिभोज ! भवतः स्वर्वाहिनीगाहिनी, दिक्पालान् परितः परीत्य दधती भास्वन्मयं गोलकम् ।
लङ्घित्वाऽम्बुधिसप्तमण्डलभुवस्त्वय्येकपत्नीव्रत,–ख्यात्यै विष्णुपदं स्पृशत्यविरतं शेषाहिशीर्षाण्यपि ॥ १४ ॥

चमत्कृतो राजा । स्थापितो दिगम्बरः सौधासन्नदेशे । राज्ञादिष्टम्–ग्रन्थमेकं कुरु, अस्मत्पूर्वजवर्णनप्रतिबद्धम् । तेनोक्तम्–देव ! अहं श्लोकपञ्चशतीं एकस्मिन् दिने कर्त्तुं क्षमः, तावत्तु लेखितुं न क्षमोऽस्मि । कश्चिल्लेखकः समर्प्यताम् । राज्ञोक्तम्–अस्मत्पुत्री मदनमञ्जरी नाम [5]लिखिष्यति जवनिकान्तरिता सती । दिगम्बरेण ग्रन्थः[6] कर्त्तुमारेभे । राजपुत्री पञ्चशतीं लिखति । एवं कत्यप्यहानि ययुः ।

§८१) एकदा राजसुता तस्य स्वरं कोकिलरवजित्वरं शृण्वती सती चिन्तयति–अस्य रूपमपि सुन्दरं भविष्यति । जवनिकान्तरितया कथं दृश्यते ? । करोमि तावदुपायम् । रसवत्यां लवणबाहुल्यं कारयामि । सोऽपि[7] राजपुत्रीं तादृग्विदुषीं सुस्वरां दिदृक्षते । लवणातिशये दिक्पट ऊचे–अहो लवणिमा ! । राजपुत्र्याऽभिदधे–अहो निष्ठुरता ! । एवमालाप-प्रत्यालापे दूरे कृते[8] उभाभ्यां मर्यादामयी वस्त्रमयी च जवनिके[9] । परस्परं दिव्यरूपदर्शनम् । तावता दिग्वस्त्रेणोक्तम्–

१८९. निरर्थकं जन्म गतं नलिन्याः, यया न दृष्टं तुहिनांशुबिम्बम् ।

राजसुतयाऽपि भणितम्[10]–

उत्पत्तिरिन्दोरपि निष्फलैव, दृष्टा प्रबुद्धा नलिनी न येन ॥ १५ ॥

ततश्चक्षुःप्रीतिमुद्भवन्तीवा[11]ऽपराणि कुसुमचापचापलानीति वचनान्निरर्गले मदने भग्नं कौमारव्रतं तयोः । [12]वर्त्तते विकथा । अल्पो निष्पद्यते ग्रन्थः । सायं राजा विलोकयति शास्त्रम् । को हेतुरद्य स्तोकं निष्पन्नम् ? । दिगम्बरस्तेषु[13] त्रिचतुराणि विषमाणि पद्यानि निक्षिपते । ततो राजाग्रे

1 A अगात् । 2 A परम्परया, DE परम्पराच्छ्रुत० । 3 AD 'वत्स' नास्ति । 4 A परिवारितो । 5 A लेखिष्यति । 6 P ग्रन्थं । 7 P सोऽपि दिग्वस्त्र । 8 P कृता । 9 P जवनिका । 10 A अभाणि । 11 A चा० । 12 A वर्द्धतेतिकथा । 13 A तेषु पद्येषु ।

भणति–देव ! ममेयं प्रतिज्ञा–अहमबुध्यमानस्य लेखितुः पार्श्वान्न लेखयामि । तव तु पुत्र्या इदं स्थानं कृच्छ्रेण बुद्धम् । इति कालविलम्बाद् ग्रन्थाल्पत्वं जायते । राजेन्द्रो विमृशति–शठोत्तरमेवेदं दृश्यते । एकदा हेरयामि, किमिमौ समाचरतः । निशायां विभातायां एकदा राजा छन्नरूप एकाकी तयोर्ग्रन्थनिष्पत्तिप्रदेशकुड्यान्तरेऽस्थात् । तदैव दिक्पटो राजपुत्रीं प्रति प्रणयकलहानुनयगर्भमाह– 5

१९०. सुभ्रु ! त्वं कुपितेत्यपास्तमशनं त्यक्त्वा कथा योषितां, दूरादेव निराकृताः सुरभयः स्वर्गन्धधूपादयः ।
रागं रागिणि ! मुञ्च मय्यवनते दृष्टे प्रसीदाधुना, सत्यं त्वद्विरहे भवन्ति दयिते ! सर्वा ममान्धा दिशः ॥ १६ ॥

एतत्काव्यश्रवणाद् द्वयोर्दौःशील्यं निर्णीय मन्दपदं निर्ययौ । स्थानं गतो वसुधाधिपतिः । क्रुद्धेन तेन तत्कालमाहूतो दिक्पटः । आगतः । भाषितो यथा–पण्डित ! किमिदं नवीनं पद्यम्–'सुभ्रु ! त्वं कुपितेत्यपास्तमशनम्' इत्यादि ? । दिग्वसनेन विमृष्टम्–राज्ञा हेरितोऽहम् । अपराधी लब्धः । 10
तथाप्युत्तरं ददामि । यथातथेति चिन्तयित्वाऽवनिपतिमभ्यधात्–देव ! दिनद्वयात्प्रभृति दृग् मे पीडार्त्ता वर्त्तते । तदुपश्लोकेनानुनयपरं[1] पद्यमिदमपाठिषम् । इति प्रस्तावनां कृत्वा निक्षोभस्तयैव भङ्ग्या सद्यो व्याचचक्षे । तया सूक्त्या[2] तुष्टोऽन्तः क्षितिपः, [3]अकृत्यकरणदर्शनात्तु रुष्टः । ततः[4] सभ्रूभङ्गं भृत्यानूचे–बध्नीत रे ! अमुं कुकर्मकारिणम्, घातयत च । बद्धस्तैः । तदाकर्ण्य राजपुत्री द्वात्रिंशता सखीभिः शस्त्रिकापाणिभिः समं [5]शस्त्रिकापाणिरागात् । राजदृष्टिमेत्य स्वयमकथ- 15
यत्–यद्यमुं मे मनोरुच्यं मुञ्चसे तदा चारु । अथ न मुञ्चसे तदा चतुस्त्रिंशद्धत्यास्तव[6] भवितारः । एका[7] दिगम्बरहत्या[8] त्रयस्त्रिंशद्युवतिहत्या इति । ततो राजा[9] मन्त्रिभिर्विज्ञप्तः–देव ! त्वयैवेयमस्यासन्नीकृता । यूनां स्त्रीसन्निधानं च मन्मथद्रुमदोहदः । कस्य दोषो दीयते ? ।

१९१. चित्रस्था अपि चेतांसि हरन्ति हरिणीदृशः । किं पुनस्ताः स्मरस्मेरविभ्रमभ्रमितेक्षणाः ॥ १७ ॥

मुच्यतां प्रसह्य दिग्वस्त्रः । इयं चास्यैव भवतु । इति श्रुत्वा तं मुक्त्वा तां तस्यैव पत्नीमकरोत् । 20
स च राज्यांशभाजनं कृतः । दिग्जयधनानि[10] श्वशुरसाच्चकार । व्रतं त्यक्त्वा भोगी जातः । तं तादृशं वृत्तान्तं विशालकीर्त्तिर्गुरुरुज्जयिन्यामश्रौषीत् । अध्यासीच्च–अहो ! यौवनधनकुसङ्गानां महिमा । येनायमेवंविधोऽपि व्रती विद्वान् वादी योगज्ञो भूत्वा एवंविधं उग्रदुर्गतिपतनमूलं कुपथं प्रपन्नः । हा ! हा ! धिग् ।

१९२. परिच्छेदातीतः सकलवचनानामविषयः, पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् । 25
विवेकप्रध्वंसादुपचितमहामोहगहनो, विकारः कोऽप्यन्तर्जडयति च तापं च तनुते[11] ॥ १८ ॥

एवं विमृश्य चतुरांश्चतुरः शिष्यांस्तद्बोधनाय प्राहैषीत् । तैस्तत्र गत्वोक्तोऽसौ–

१९३. विरमत बुधा योषित्सङ्गात्सुखात् क्षणभङ्गुरात्, कुरुत[12] करुणाप्रज्ञामैत्रीवधूजनसङ्गमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं, भवति शरणं श्रोणीबिम्बं [13]क्वणन्मणिदाम वा[14] ॥ १९ ॥

इत्यादि–गुरुभिर्बोध्यमानोऽसि[15]; बुध्यस्व, मा मुहः । सोऽथ निस्त्रपतया तेषां हस्ते गुरुभ्यः 30
पद्यानि पत्रे लिखित्वा प्रजिघाय । गतास्ते तत्र । वाचितानि पद्यानि गुरुणा–

---

1 P ०श्लोकायानुनय० । 2 P प्रज्ञया । 3 A कृत्यक० । 4 P नास्ति 'ततः' । 5 'शस्त्रिकापाणिः' नास्ति P पुस्तके । 6 P नास्ति 'स्तव' । 7 A एक० । 8 A ०हत्यायां । 9 ADE नास्ति 'राजा' । 10 P ०धनानि च । 11 A कुरुते । 12 A भजत । 13 P रणन् । 14 A च । 15 PE ऽपि ।

१९४. तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नासौ गुरुर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ २० ॥

१९५. प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥ २१ ॥

१९६. सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती, मा मा मुञ्च शठेति कोपवचनैरानर्त्तितभ्रूलता ।
5 सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी, प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥ २२ ॥

इत्यादि श्रुत्वा[1] तस्थौ तूष्णीं गुरुः । मदनकीर्त्तिस्तु व्यलासीद्विविधम् ।

॥ इति मदनकीर्त्तिप्रबन्धः ॥ १४ ॥

## १५. अथ सातवाहनप्रबन्धः ।

§८२) इह भारते वर्षे दक्षिणखण्डे महाराष्ट्रदेशावतंसं श्रीमत्प्रतिष्ठानं नाम पत्तनं विद्यते । 10 तच्च निजभूत्याभिभूतपुरन्दरपुरमपि कालान्तरेण क्षुल्लकग्रामप्रायमजनिष्ट । तत्र चैकदा द्वौ वैदेशिकद्विजौ समागत्य विधवया स्वस्रा सार्कं कस्यचित् कुम्भकारस्य शालायां तस्थिवांसौ । कणवृत्तिं विधाय कणान् स्वसुरुपनीय तत्कृताहारपाकेन समया कुरुतः स्म ।

§८३) अन्येद्युः सा तयोर्विप्रयोः स्वसा जलाहरणाय गोदावरीं गता । तस्याश्च[2] रूपमप्रतिरूपं निरूप्य स्मरपरवशोऽन्तर्ह्रदवासी शेषो नाम नागराजो ह्रदान्निर्गत्य विहितमनुष्यवपुस्तया सह 15 बलादपि सम्भोगकेलिमकलयत् । भवितव्यताविलसितेन तस्याः सप्तधातुरहितस्यापि तस्य दिव्यशक्त्या शुक्रपुद्गलसञ्चाराद् गर्भाधानमभवत् । स्वनामधेयं[3] प्रकाश्य व्यसनसङ्कटे मां स्मरेरित्यभिधाय च नागराजः पाताललोकमगमत् । सा च गृहं प्रत्यगच्छत् । व्रीडापीडिततया च स्वभ्रात्रोस्तं वृत्तान्तं न खलु न्यवेदयत् । कालक्रमेण सहोदराभ्यां[4] गर्भलिङ्गानि वीक्ष्य सा जातगर्भा इत्यलक्ष्यत । ज्यायसस्तु मनसि शङ्का जाता—यदियं खलु कनीयसोपभुक्ता इति । शङ्कनी- 20 यान्तराभावात् यवीयसोऽपि चेतसि[5] समजनि विकल्पः—नूनमेषा ज्यायसा सह विनष्टशीला इति । एवं मिथःकलुषिताशयौ विहाय तामेकाकिनीं पृथक् पृथग् देशान्तरमयासिष्टाम् । साऽपि प्रवर्द्धमानगर्भा परमन्दिरेषु कर्माणि निर्मिमाणा प्राणवृत्तिमकरोत् । क्रमेण पूर्णेऽनेहसि सर्वलक्षणलक्षिताङ्गं प्रासूत [6]सूनुम् । स च क्रमाद्वपुषा गुणैश्च वर्द्धमानः सवयोभिः सह रममाणो बालक्रीडया स्वयं भूपतीभूय तेभ्यो वाहनानि करितुरगरथादीनि कृत्रिमाणि दत्तवान् 25 इति । सनोतेर्दानार्थत्वाल्लोकैः 'सातवाहनः' इति व्यपदेशं लम्भितः । स्वजनन्या पाल्यमानः सुखमवस्थितः ।

§८४) इतश्चोज्जयिन्यां श्रीविक्रमादित्यस्यावन्तिनरेशितुः सदसि कश्चिन्नैमित्तिकः[7] सातवाहनं प्रतिष्ठानपुरे भाविनं नरेन्द्रमादिशत् ।

§८५) अथैतस्यामेव पुर्यामेकः स्थविरविप्रः स्वायुरवसानमवसाय[8] चतुरः स्वतनयानाहूय प्रोक्त- 30 वान् यथा—वत्सा ! मयि पुरेयुषि[9] मदीय[10]शय्योच्छीर्षकदक्षिणपादादारभ्य चतुर्णामपि पादानामधो-

1 BE 'दृष्ट्वा' । 2 P तस्या स्वरूप० । 3 BD स्वं नाम० । 4 AE सोदर्याभ्यां । 5 P नास्ति 'चेतसि' । 6 P सुतम् । 7 A ०नैमित्तिकनिमित्तक. । 8 P ज्ञात्वा । 9 P मृते । 10 A ०शिय्योच्छीर्षक० ।

वर्त्तमानं निधिकलशचतुष्टयं युष्माभिर्यथाज्येष्ठं विभज्य ग्राह्यम्, येन भवतां निर्वाहः सम्पनीपद्यते । पुत्रैस्तु तथेत्यादेशः स्वीचक्रे पितुः । तस्मिन्नुपरते तस्यौर्ध्वदेहिकं कृत्वा त्रयोदशेऽहनि भुवं खात्वा[1] यथायथं चतुरोऽपि निधिकलशास्ते जगृहिरे । यावदुद्घाट्य विलोकयन्ति तावत्प्रथमस्य कुम्भे कनकम्, द्वैतीयीकस्य[2] कृष्णमृत्स्ना, तृतीयस्य बुशम्, तुरीयस्य त्वस्थीनि ददृशिरे । तदनु ज्यायसा साकमितरे त्रयो विवदन्ते स्म—तदस्मभ्यमपि विभज्य कनकं वितरेति । तस्मिंश्चावितरति सति तेऽवन्तिपतेर्द्धर्माधिकरणम्[3] उपास्थिषत । तत्रापि न तेषां वादनिर्णयः समपादि । ततश्चत्वारोऽपि ते[4] महाराष्ट्रजनपदमुपानंसिषुः । सातवाहनकुमारस्तु कुलालमृदा हस्तिरथसुभटानन्वहं नवनवान् विदधानः कुलालशालायां बालक्रीडादुर्ललितः[5] कलितस्थितिरनयत् समयम् । ते च द्विजतनुजाः प्रतिष्ठानपत्तनमुपेत्य परतो भ्रमन्तस्तस्यामेव चक्रजीविनः शालायां तस्थिवांसः । सातवाहनस्तु तानवेक्ष्येङ्गिताकारकुशलः प्रोवाच—भो विप्राः ! किं भवन्तो वीक्षापन्ना इव वीक्ष्यन्ते ? । तैस्तु जगदे—जगदेकसुभग ! कथमिव वयं चिन्ताचान्तचेतसस्त्वयाऽज्ञासिष्महि[6] । कुमारेण बभणे—इङ्गितैः किमिव नावगम्यते । तैरुक्तम्—युक्तमेतत् । परं भवतः पुरो निवेदितेन चिन्ताहेतुना किं स्यात् ? । बालः खलु भवान् । बाल आलपत्—यदि परं जातु मत्तोऽपि साध्यं वः सिध्यति, तन्निवेद्यतां स चिन्ताहेतुः । ततस्ते तद्वचनवैचित्री[7]हृतहृदयाः सकलमपि स्वस्वरूपं निधिनिरयणादि[8] मालवेशपरिषद्यपि विवादानिर्णयान्तं[9] तस्मै निवेदितवन्तः । कुमारस्तु स्मितविच्छुरिताधरोऽवादीद्—भो विप्राः ! अहं यौष्माकं झगटकं निर्णयामि, श्रूयतामवहितैः । यस्मै वसा कनककलशं प्रददे, स तेनैव निवृत्तोऽस्तु । यस्य कलशे कृष्णमृत्स्ना निरगात् स क्षेत्रकेदारादीन् गृह्णातु । यस्य तु बुशं स कोष्ठागारगतधान्यानि सर्वाण्यपि स्वीकुरुताम् । यस्य चास्थीनि निरगुः सोऽश्वमहिषीदासीदासादिकमुपादत्ताम्—इति युष्मज्जनकस्याशयः । इति क्षीरकण्ठोक्तं श्रुत्वा सूत्रकण्ठाः छिन्नविवादाः[10] तद्वचनं प्रतिश्रुत्य तमनुज्ञाप्य प्रत्याययुः स्वां नगरीम् । प्रथिता सा तद्विवादनिर्णयकथा पुर्याम् । राज्ञाप्याकार्य ते पर्यनुयुक्ताः—किं नु भो ! भवतां वादनिर्णयो जातः ? । तैरुक्तम्—आम[11] स्वामिन् ! । केन निर्णीतः ?—इति नृपेणोदिते ते सातवाहनस्वरूपं सर्वमवितथमकथयन् ।

§८९) तदाकर्ण्य तस्य शिशोरपि बुद्धिवैभवं विभाव्य, प्रागुक्तं दैवज्ञेन तस्य प्रतिष्ठाने राज्यं च भविष्यती[12]त्यनुस्मृत्य तं स्वप्रतिपन्थिनमाकलय्य क्षुभितमनास्तन्मारणौ[13]पयिकमचिन्तयत् चिरं नरेश्वरः । [14]अभिमरादिप्रयोगैर्मारिते चास्मिन्नयशः-क्षात्रवृत्तिक्षती जायेतामिति विचार्य सन्नद्धचतुरङ्गचमूसमूहोऽवन्तिपतिः प्रस्थाय प्रतिष्ठानपत्तनं यथेष्टमवेष्टयत् । तदवलोक्य ते ग्राम्यास्त्रस्ताश्चिन्तयन्ति स्म—कस्योपरि अयमेतावानाटोपः सकोपस्य मालवेशस्य ? । न तावदत्र राजा राजन्यो वा वीरस्तादृग् दुर्गादि वा !—इति चिन्तयत्सु तेषु मालवेशप्रहितो दूतः समेत्य सातवाहनमवोचत्—भो कुमारक ! तुभ्यं नृपः क्रुद्धः । प्रातस्त्वां मारयिष्यति । अतो युद्धाय[15] चिन्तनावहितेन भवता भाव्यमिति । स च श्रुत्वाऽपि [15]दूतोक्तं निर्भयं निरन्तरं क्रीडन्नेवास्ते ।

---

1 P खनित्वा । 2 A द्वैतीयकस्य । 3 P धर्माधिकारिण० । 4 'ते' नास्ति P । 5 P ०दुर्ललितकलित० । 6 P त्वया ज्ञाताः । 7 P ०वैचित्र्य० । 8 P ०निर्गमनादि । 9 A ०निर्णयं ते । 10 P छिन्नवादाः । 11 P ओम् । 12 A भविष्यदनुस्मृत्य, E भविष्यत्यनु० । 13 मारणोपाय० । 14 BE अभिघातकनरादि०; P अभिघातकरादि० । 14 P युद्धाद्युपाय० । 15 E श्रुत्वापि न दूनो, P श्रुत्वापि दूतोक्तीः ।

अत्रान्तरे विदितपरमार्थौ तौ तन्मातुलावितरेतरं प्रति विगतदुर्विकल्पौ पुनः प्रतिष्ठानमागतौ। परचक्रं दृष्ट्वा तां स्वभगिनीं प्रोचतुः–हे स्वसः! येन दिवौकसा तवायं तनयो दत्तस्तमेव स्मर। यथा स एवास्य साहाय्यकं विधत्ते। साऽपि तद्वचसा प्राचीनं[1] नागपतेर्वचः स्मृत्वा शिरसि निवेशितघटा गोदावर्यां नागह्रदं गत्वा स्नात्वा च तमेव नागनायकमाराधयत्। तत्क्षणान्नागराजः
5 प्रत्यक्षीभूय वाचमुवाच ब्राह्मणीम्–को हेतुरहमनुस्मृतस्त्वया?। तया च प्रणम्य यथावस्थितमभिहिते बभाषे शेषराजः–मयि प्रतपति[2] कस्तव तनयमभिभवितुं क्षमः?। इत्युदीर्य घटमादाय ह्रदान्तर्निमज्ज्य पीयूषकुण्डात्सुधया घटं प्रपूर्य च तस्यै दत्तः। ऊचे[3] च–त्वमनेनामृतेन[4] सातवाहनकृतमृन्मयाश्वरथगजपदातिजातमभिषिञ्चेस्तथा[5] तत्सजीवं भूत्वा परबलं भनक्ति; त्वत्पुत्रं च प्रतिष्ठानपत्तनराज्ये अयमेव पीयूषघटोऽभिषेक्ष्यति[6]। प्रस्तावे पुनः स्मरणीयोऽहमित्युक्त्वा
10 स्वास्पदमगमद् भुजङ्गपुङ्गवः। साऽपि सुधाघटमादाय स्वसद्मोपेत्य तेन तन्मृन्मयं सैन्यमदैन्यमभ्युक्षामास। प्रातर्दिव्यानुभावतः सचेतनीभूय तत्सैन्यं संमुखं गत्वा युयुधे परानीकिन्या सार्द्धम्। तया सातवाहनपृतनया भग्नमवन्तीशितुर्बलम्। विक्रमनरपतिरपि पलाय्य ययाववन्तीम्। तदनु सातवाहनो राज्येऽभिषिक्तः। प्रतिष्ठानं च निजनिजविभूतिपरिभूतवस्वौकसाराभिधानं[7] धवलगृह-देवगृह-हट्टपङ्क्ति-राजपथ-प्राकार-परिखादिभिः सुनिविष्टमजनिष्ट पत्तनम्।
15 सातवाहनोऽपि क्रमेण दक्षिणापथमनृणं विधाय तापीतीरपर्यन्तं चोत्तरापथं साधयित्वा स्वकीयसंवत्सरं प्रावीवृतत्। जैनश्च समजनि। अचीकरच्च जनितजननयनशैत्यानि चैत्यानि। पञ्चाशद्वीरा अपि प्रत्येकं स्वस्वनामाङ्कितानि अन्तर्नगरं कारयांबभूवुर्जिनभवनानि।

§८७) परसमयलोकप्रसिद्धं सातवाहनचरित्रं शेषमपि किञ्चिदुच्यते।–श्रीसातवाहने क्षितिं रक्षति सति पञ्चाशद्वीराः प्रतिष्ठाननगरान्तस्तदा वसन्ति स्म, पञ्चाशन्नगराद्बहिः। इतश्च तत्रैव पुरे
20 एकस्य द्विजस्य सूनुर्दर्पोद्धुरः शूद्रकाख्यः समजनि। स च युद्धश्रमं दर्प्पात् कुर्वाणः पित्रा स्वकुलानुचितमिदमिति प्रतिषिद्धोऽपि नास्थात्। अन्येद्युः सातवाहननृपतिर्बापला-खूंदलादिपुरान्तवर्त्तिवीरपञ्चाशदन्वितो द्विपञ्चाशद्धस्तप्रमाणां शिलां श्रमार्थमुत्पाटयन् दृष्टः पित्रा समं गच्छता द्वादशाब्ददेशीयेन शूद्रकेण। केनापि वीरेणाङ्गुलीचतुष्टयं केनचित्षडङ्गुलान्यपरेण त्वङ्गुलान्यष्टौ शिला भूमित उत्पाटिता। महीजानिना[8] त्वाजानु नीता। इत्यवलोक्य शूद्रकः स्फूर्जदूर्जितमवादीत्–
25 भो! भो! भवत्सु मध्ये किं शिलामिमां मस्तकं यावन्न कश्चिदुद्धर्त्तुमीष्टे[9]। तेऽपि [10]सेर्ष्यमवादिषुर्यथा–त्वमेवोत्पाटय यदि समर्थमन्योऽसि। शूद्रकस्तदाकर्ण्य तां शिलां[11] वियति तथोच्छालयांचकार[12] यथा दूरमूर्ध्वमगमत्। पुनरवादि शूद्रकेण–यो भवत्सु अलम्भूष्णुः[13] स खलु इमां निपतन्तीं स्तभ्नातु। सातवाहनादिवीरैर्भयोद्[14]भ्रान्तलोचनैरूचे स एव सानुनयम्, यथा–भो महाबल! रक्ष रक्ष, आस्माकीनान्[15] प्राणान् इति। स पुनस्तां पतयालुं तथा मुष्टिप्रहारेण प्रहतवान्, यथा
30 सा त्रिखण्डतामन्वभूत्[16]। तत्रैकं शकलं योजनत्रयोपरि न्यपतत्। द्वैतीयिकं च खण्डं नागह्रदे। तृतीयं तु प्रतोलीद्वारे चतुष्पथमध्ये निपतितमद्यापि तथैव [17]वीक्ष्यमाणमास्ते जनैः। तद्बलविल-

1 A प्राचीन०। 2 P पत्यौ। 3 BP नास्ति पदमेतत्। 4 P त्वं चानेन; BE त्वं वानेन। 5 P यथा। 6 P ०षेकयिष्यति। 7 A ०विस्वौक०, P ०वस्त्वौक०। 8 A महीपतिना। 9 P समर्थ.। 10 AB तदर्थम०। 11 A नास्ति। 12 AB चक्रे। 13 AE अलकरिष्णु। 14 P भयाद्०। 15 A अस्माकीयान्। 16 P त्रिखण्डम०। 17 ABE वक्ष्यमाण०।

सितचमत्कृतचेताः क्षोणिनेता शूद्रकं सुतरां सत्कृत्य पुरारक्षकमकरोत्। शस्त्रान्तराणि प्रतिषिध्य दण्डधारस्तस्य दण्डमेवायुधमन्वज्ञासीत्। शूद्रको बहिश्चरान् वीरान् पुरमध्ये प्रवेष्टुमपि न दत्तवान्, अनर्थनिवारणार्थम्।

§८८) अन्यदा स्वसौधस्योपरितले शयानः सातवाहनक्षितिपतिर्मध्यरात्रे शरीरचिन्तार्थमुत्थितः। पुराद्बहिःपरिसरे करुणं रुदितमाकर्ण्य तत्प्रवृत्तिमुपलब्धुं कृपाणपाणिः परदुःखदुःखित[1]हृदयतया गृहान्निरगात्[2]। अन्तराले शूद्रकेणावलोक्य सप्रश्रयं प्रणतः, पृष्टश्च महानिशायां [3]निर्गमनकारणम्। धरणीपतिरवदत्–यदयं बहिःपुरपरिसरे करुणक्रन्दितध्वनिः श्रवणाध्वनि पथिकीभावमनुभवन्नस्ति। तत्कारणप्रवृत्तिं ज्ञातुं व्रजन्नस्मि–इति राज्ञोक्ते शूद्रको व्यजिज्ञपत्–देव! प्रतीक्ष्यपादैः स्वसौधालङ्करणाय पादोऽवधार्यताम्। अहमेव [4]तत्प्रवृत्तिमानेष्यामि। इत्यभिधाय वसुधानायकं व्यावर्त्य स्वयं रुदितध्वन्यनुसारेण पुराद्बहिर्गन्तुं प्रवृत्तः। पुरस्ताद् व्रजन् दत्तकर्णो गोदावर्याः स्रोतसि कञ्चन रुदन्तमश्रौषीत्। ततः परिकरबन्धं विधाय शूद्रकस्तीर्त्वा यावत्सरितो मध्यं प्रयाति; तावत्पयःपूरप्लाव्यमानं नरमेकं रुदन्तं वीक्ष्य बभाषे–भोः! कस्त्वम्?, किमर्थं च रोदिषि?। इत्यभिहितः स नितरामरुदत्। अति[5]निर्बन्धेन पुनः पृष्टः[6] स्पष्टमाचष्ट–भो साहसिकशिरोमणे! मामितो निष्कास्य भूपतेः समीपं प्रापय, येन तत्र स्ववृत्तमाचक्षे। इत्युक्तः शूद्रकस्तमुत्पाटयितुं यावदयतिष्ट तावन्नोत्पटति स्म सः। ततोऽधस्तात्केनापि यादसा मा[7] विधृतोऽयं भवेद्–इत्याशङ्क्य सद्यः कृपाणिकामधो वाहयामास शूद्रकः। तदनु शिरोमात्रमेव शूद्रकस्योद्धर्तुः करतलमारोहत् लघुतया। [8]तच्छिरःप्रक्षरद्रुधिरधारमवलोक्य शूद्रको विषादमाप। [9]ततश्चिन्तयति स्म–धिग्! मामप्रहर्तरि प्रहर्त्तारं[10] शरणागतघातकं च[11]। इत्यात्मानं निन्दन् वज्राहत इव क्षणं मूर्च्छितस्तस्थौ। तदनु समधिगतचैतन्यश्चिरमचिन्तयत्–कथमिवैतत्सुदुश्चेष्टितमवनिपतये निवेदयिष्यामि। इति लज्जितमनास्तत्रैव काष्ठैश्चितां विरचय्य तत्र ज्वलनं प्रज्वाल्य तच्छिरः सह गृहीत्वा यावदुदर्चिषि प्रवेष्टुं प्रववृते तावत्तेन मस्तकेन निजगदे–भो महापुरुष! किमर्थमित्थं व्यवसीयते[12] भवता?। [13]यावदहं शिरोमात्रमेवास्मि सैंहिकेयवत्[14] सदा। तद् वृथा मा विषीद। प्रसीद, मां राज्ञः समीपमुपनय। इति तद्वचनं निशम्य चमत्कृतचित्तः प्राणित्ययमिति प्रहृष्टः शूद्रकस्तच्छिरः पट्टांशुकवेष्टितं विधाय प्रातः सातवाहनमुपागमत्। अपृच्छदथ[15] पृथिवीनाथः–शूद्रक! किमिदम्?। सोऽप्यवोचत्–देव! सोऽयं यस्य क्रन्दितध्वनिर्देवेन रात्रौ शुश्रुवे। इत्युक्त्वा तस्य प्रागुक्तं वृत्तं सकलमावेदयत्। पुना राजा तमेव मस्तकमप्राक्षीत्–कस्त्वं भो!, किमर्थं चात्र भवदागमनमिति?। तेनाभिदधे–महाराज! भवतः कीर्तिमुभाकर्णि समाकर्ण्य[16] करुणरुदितव्याजेनात्मानं ज्ञापयित्वा [17]त्वामहमुपागमम्। दृष्टश्च भवान्। कृतार्थे मेऽद्य चक्षुषी जाते इति। कां कलां सम्यगवगच्छसि?–इति राज्ञ आज्ञया निरवधि[18] गीतं गातुं प्रचक्रमे। क्रमेण तद्गानकलया मोहिता सकलापि नृपतिप्रमुखा परिषत्। स च मायासुरनामकोऽसुरस्तां मायां निर्माय महीप-

1 A ०दु.स्थित०। 2 AB निरगमत्। 5 A निर्गमका०। 4 P अहमपि प्र०। 5 P इति०। 6 P नास्ति 'पृष्ट.'। 7 P 'मा' नास्ति। 8 P ०तया शिर.। 9 P ०मापन्नश्चिन्तयति। 10 P विहाय नास्त्यन्यत्रेदं पदम्। 11 A घातकमवेत्यात्मानं। 12 'व्यवसीयते' स्थाने 'करोषि' P पुस्तके। 13 'भवता यावद्' नास्ति P पुस्तके। 14 P राहुवत्। 15 P नास्ति 'अथ'। 16 P कीर्तिमाकर्ण्य। 17 'त्वां' नास्ति P। 18 BEP निरवगीतं गीतं।

तेर्महिर्षीं महनीयरूपधेयामपजिहीर्षुरुपागतो बभूव। न च विदितचरमेतत्कस्यापि। लोकैस्तु शीर्षमात्रदर्शनात् तस्य प्राकृतभाषया 'सीसुला' इति व्यपदेशः कृतः। तदनु प्रतिदिनं तस्मिन्नतितुम्बरौ मधुरतरं[1] गायति सति श्रुतं तत्स्वरूपं महादेव्या दासीमुखेन। भूपं विज्ञाप्य तच्छीर्षं स्वान्तिकमानायितम्। प्रत्यहं तमजीगपत् राज्ञी। दिनान्तरे रात्रौ प्रस्तावमासाद्य सद्य 5 एवापहरति स्म तां मायासुरः। आरोपयामास च तां घण्टावलम्बिनामनि स्वविमाने। राज्ञी च करुणं क्रन्दितुमारेभे—हा! अहं केनाप्यपह्रिये। अस्ति कोऽपि वीरः पृथिव्यां यो मां मोचयति। [2]तत्स्वरं [3]खून्दलाभिख्येन वीरेण श्रुत्वा व्योमन्युत्पत्य च तद्विमानस्य घण्टा पाणिना गाढमधार्यत। ततस्तत्पाणिनाऽवष्टब्धं विमानं पुरस्तान्न प्राचालीत्। तदनु चिन्तितं मायासुरेण—किमर्थं विमानमेतन्न सर्पति। यावदद्राक्षीत्तं वीरं हस्तावलम्बितघण्टम्। ततः खड्गेन तद्धस्तमच्छिदत्। 10 पतितः पृथिव्यां वीरः। स चासुरः पुरः प्राचलत्। ततो विदितदेव्यपहारवृत्तान्तः क्षितिकान्तः पञ्चाशतमेकोनां[4] वीरानादिशत्[5]—यत्पट्टदेव्याः शुद्धिः क्रियतां केनेयमपहृतेति। ते प्रागपि शूद्रकं प्रत्यसूयापराः प्रोचुः—महाराज! शूद्रक एव जानीते। तेनैव तच्छीर्षकमानीतम्। तेनैव च[6] देवी जह्रे। ततो नृपतिस्तस्मै कुपितः शूलारोपणमाज्ञापयत्। तदनु देशरीतिवशात्तं रक्तचन्दनानुलिप्ताङ्गं शकटे शाययित्वा, तेन सह गाढं बद्ध्वा, शूलायै यावद्राजपुरुषाश्चेलुः, तावत्पश्चादपि 15 वीराः संभूय शूद्रकमवोचन्—भोः महावीर! किमर्थं रण्डेव म्रियते भवान्। 'अशुभस्य कालहरण'मिति न्यायात् मार्गय नरेन्द्रात्कतिपयदिनावधिम्, शोधय सर्वत्र देव्यपहारिणम्। किमकाण्डे एव स्वकीयां वीरत्वकीर्त्तिमपनयसि?। तेनोक्तम्—गम्यतां तर्हि उपराजम्। विज्ञाप्यतामेनमर्थं राजा। तैरपि तथा कृते प्रत्यानायितः शूद्रकः क्षितीन्द्रेण। तेनापि स्वमुखेन विज्ञप्तिः कृता—महाराज! दीयतामवधिः। येन विचिनोमि प्रतिदिशं देवीं तदपहारिणं च। राज्ञा दिनद- 20 शकमवधिर्दत्तः। शूद्रकगृहे च सारमेयद्वयमासीत् तत्सहचारि। नृपतिरवदत्—एतद्भषणयुगलं प्रतिभूप्रायमस्मत्पार्श्वे मुञ्च। स्वयं पुनर्भवान् देव्युदन्तोपलब्धये हिण्डतां महीमण्डलम्। सोऽप्यादेशः प्रमाणमित्युदीर्य प्रवीर्यवान् प्रतस्थे[7]। भूचक्रशक्रस्तत्कौलेयकद्वन्द्वं शृङ्खलाबद्धं शय्यापादयोरवध्नात्[8]। शूद्रकस्तु परितः [9]पर्यटाट्यमानोऽपि यावत्प्रस्तुतार्थस्य वार्त्तामात्रमपि क्वापि नोपलेभे, तावदचिन्तयत्—अहो! ममेदमयशः प्रादुरभूत्। यदयं स्वामिद्रोही मध्ये[10] भूत्वा देवीम- 25 मपाजीहरदिति। न च क्वापि शुद्धिर्लब्धा तस्याः। तस्मान्मरणमेव मम शरणम्। इति विमृश्य दारुभिश्चितामरचयत्[11]। ज्वलनं चाज्वालयत्। यावन्मध्यं प्रविशेत्[12] तावत्ताभ्यां शुनकाभ्यां देवताधिष्ठिताभ्यां ज्ञातम्—यदस्मदधिपतिर्निधनं [13]ध्यायन्नस्तीति। ततो दैवतशक्त्या शृङ्खलानि[14] भङ्क्त्वा निर्विलम्बौ गतौ तौ तत्र यत्रासीच्छूद्रकरचिता चिता। दशनैः केशानाकृष्य शूद्रकं वहिर्निष्कासयामासतुः[15]। तेनापि अकस्मात्तौ विलोक्य विस्मितमनसा निजगदे—रे पापीयांसौ! 30 किमेतत्कृतं भवद्भ्यामशुभवद्भ्याम्?। राज्ञो मनसि विश्वासनिरासो भविष्यति, यत्प्रतिभुवावपि तेनात्मना सह नीतौ। अथ[16] भषणाभ्यां बभाषे—धीरो भव अस्मद्दर्शितां दिशमनुसर। सरभसं का चिता तव!। इत्यभिधाय पुरोभूय प्रस्थितौ तेन सार्द्धम्। क्रमात्प्राप्तौ कोल्लापुरम्।

---

1 P मधुरस्वरं। 2 P तव। 3 ABE पूंदलाभिख्य-खूंदला०। 4 A एकोनान्। 5 AE आदिक्षत्। 6 P 'च' नास्ति। 7 A उपतस्थे। 8 P पादेऽवघ्नीत्। 9 P पर्यटत्। अट्यमानो०। 10 P नास्ति 'मध्ये'। 11 A ०मारचत्। 12 P प्राविशत्। 13 BE धनायन्नस्ति, P वाञ्छन्नस्ति। 14 A शृङ्खलां। 15 P ०मासे। 16 P 'अथ' नास्ति।

तत्रस्थं महालक्ष्मीदेव्या भवनं प्रविष्टौ । तत्र शूद्रकस्तां देवीमभ्यर्च्य कुशस्रस्तरासीनस्त्रिरात्र-
मुपावसत् । तदनु प्रत्यक्षीभूय भगवती महालक्ष्मीस्तमवोचत्–वत्स ! किं मृगयसे ? । शूद्रके-
णोक्तम्–स्वामिनि ! सातवाहनमहीपालमहिष्याः शुद्धिं वद । *क्वास्ते केनेयमपहृता ? । श्रीदेव्यो-
दितम्–सर्वान् यक्षराक्षसभूतादिदेवगणान् सम्मील्य तत्प्रवृत्तिमहं निवेदयिष्यामि । परं तेषां
कृते त्वया बल्युपहारादि प्रगुणीकृत्य धार्यम् । यावच्च ते कणेहत्य बल्यादि उपभुज्य प्रीता न 5
भवेयुस्तावत्त्वया विघ्ना रक्षणीयाः । ततः शूद्रको देवतानां तर्पणार्थं कुण्डं विरचय्य होममारेभे ।
मिलिताः सकलदैवतगणाः । स्वां स्वां भुक्तिमग्निमुखेन जगृहिरे । तावत्तद्धोमधूमः प्रसृमरः प्राप
तत्स्थानं यत्र मायासुरोऽभूत् । तेनापि ज्ञातलक्ष्म्यादिष्टशूद्रकहोमस्वरूपेण प्रेषितः स्वभ्राता
कोल्लासुरनामा होमप्रत्यूहकरणाय । समागतश्च वियति कोल्लासुरः स्वसेनया समम् । दृष्टस्तद्दै-
वतगणैः[1] । चकितं च तैः । ततो भषणौ दिव्यशक्त्या युयुधाते दैत्यैः सह । क्रमान्मारितौ च तौ 10
दैत्यैः । ततः शूद्रकः स्वयं योद्धुं प्रावृतत् । क्रमेण दण्डव्यतिरिक्तप्रहरणान्तराभावाद्दण्डेनैव बहू-
न्निधनं नीतवानसुरान् । ततो दक्षिणबाहुं दैत्यास्तस्य चिच्छिदुः । पुनर्वामदोष्णैव दण्डयुद्धमक-
रोत् । तस्मिन्नपि छिन्ने दक्षिणांह्रिणोपात्तदण्डो योद्धुं लग्नः । तत्रापि दैत्यैर्लूने वामपादात्तयष्टि-
रयुध्यत । तमपि क्रमादच्छिदन्नसुराः । ततो दन्तैर्दण्डमादाय युयुधे । ततस्तैर्मस्तकमच्छेदि ।
अथाकण्ठतृप्ता दैवतगणास्तं शूद्रकं भूमिपतितशिरस्कं दृष्ट्वा–अहो ! अस्मद्भुक्तिदातुर्वराकस्यास्य किं 15
जातम् ? । इति परितप्य योद्धुं प्रवृत्ताः । कोल्लासुरममारयत् । ततः श्रीदेव्याऽमृतेनाभिषिच्य
पुनरनुसंहिताङ्गश्चक्रे शूद्रकः, प्रत्युज्जीवितश्च । तस्य[2] सारमेयावपि पुनर्जीवितौ । देवी च प्रसन्ना
सती तस्मै खड्गरत्नं प्रादात्[3] । अनेन त्वमजय्यो भविष्यसीति च वरं व्यतरत् । ततो महाल-
क्ष्म्यादिदैवतगणैः सह सातवाहनदेव्याः शुद्ध्यर्थं समग्रमपि भुवनं परिभ्रम्य प्राप्तः शूद्रको
महार्णवम् । तत्र चैकं वटतरुमुच्चैस्तरं निरीक्ष्य विश्रामार्थमारुरोह यावत्, [4]तावत्पश्यति तच्छा- 20
खायां लम्बमानमधःशिरसं काष्ठकीलिकाप्रवेशितोर्द्ध्वपादं पुरुषमेकम् । स च प्रसारितजिह्वोऽ-
न्तर्नीरं विचरतो जलचरादीन् भक्षयन् वीक्षितस्तैः । पृष्टश्च शूद्रकेण–कस्त्वम् ?, किमर्थं चेत्थं
लम्बितोऽसि ? । तेनोक्तम्–अहं मायासुरस्य कनिष्ठो भ्राता । स च मदनोन्मादिष्णुर्मदग्रजः
प्रतिष्ठानाधिपतेः सातवाहनस्य नृपतेर्महिषीं [5]रिरंसुरपाहरत् सीतामिव दशवदनः । सा च पति-
व्रता तन्नेच्छति । तदनुप्रोक्तो अग्रजन्मा–न युज्यते परदाराऽपहरणं तव । 25

१९७. विक्रमाक्रान्तविश्वोऽपि परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप नरकं दशकन्धरः ॥ १ ॥

इत्यादिवाग्भिर्निषिद्धः क्रुद्धो मह्यं मायासुरोऽस्यां वटशाखायां टङ्कित्वा मामित्थं व्यडम्ब-
यत् । अहं च प्रसारितवदनः[6] समुद्रान्तः सञ्चरतो जलचरादीनभ्यवहरन् प्राणयात्रां करोमि । इति
श्रुत्वा शूद्रकोऽप्यभाणीत्–अहं तस्यैव महीभृतो भृत्यः शूद्रकनामा तामेव देवीमन्वेष्टुमाग-
तोऽस्मि । तेनोक्तम्–एवं चेत्तर्हि मां मोचय, यथाऽहं सह भूत्वा तं दर्शयामि, तां च देवीम् । 30
तेन स्वस्थानं परितो जातुषं दुर्गं कारितमस्ति । तच्च निरन्तरं प्रज्वलदेवास्ति ततो [7]दुर्लङ्घ्यम् ।
तन्मध्ये प्रविश्य तं निपात्य देवी प्रत्याहर्तव्या । इत्याकर्ण्य शूद्रकस्तेन कृपाणेन तत्काष्ठ[8]बन्धनानि
छित्त्वा तं पुरोधाय, दैवतगणपरिवृतः प्रस्थाय, प्राकारमुल्लङ्घ्य तत्स्थानान्तः प्राविशत् । दैवत-

* A आदर्शे नास्ति एतद् वाक्यम् । 1 P दृष्ट. स्तद्दैवत० । 2 'तस्य' नास्ति P । 3 A अदात् । 4 A नास्ति 'तावत्' ।
5 P वाञ्छनपाहरत् । 6 P प्रसारितरसनः । 7 P ततस्तदुलंघ्य । 8 A तत्कष्ट० ।

गणांश्चालोक्य मायासुरः स्वसैन्यं युद्धाय प्रजिघाय। तस्मिन्पञ्चतामश्रिते स्वयं योद्धुमुपतस्थे। ततः क्रमेण शूद्रकस्तेनासिना तमवधीत्। ततो घण्टावलम्बिविमानमारोप्य देवीं दैवतगणैः सह प्रस्थितः प्रतिष्ठानं प्रति।

इतश्च, दशमं दिनमवधीकृतमागतमवगत्य जगत्यधिपतिर्ध्यातवान्–अहो! मम न महादेवी, न 5 च शूद्रकवीरो, न चापि तौ रसनालिहौ; सर्वं मयैव कुबुद्धिना विनाशितम्। इति शोचनात्सपरिच्छद एव प्राणत्यागचिकीः[1] पुराद्बहिश्चितामरचयच्चन्दनादिदारुभिः। यावत्क्षणादाशुशुक्षणिं क्षेप्स्यति परिजनश्चितायाम्[2], तावद्वर्धापक एको देवगणमध्यात्समायासीत्। व्यजिज्ञपच्च सप्रश्रयम्–देव! दिष्ट्या वर्द्धसे महादेव्यागमनेन। तन्निशम्य श्रवणरम्यं नरेश्वरः स्फुरदानन्दकन्दलितहृदय ऊर्ध्वमवलोकयन्नालुलोके नभसि दैवतगणं शूद्रकं च। अयमपि विमानादवतीर्य राज्ञः 10 पदोरपतत् महादेवी च। अभिननन्द सानन्दं मेदिनीन्दुः शूद्रकम्। राज्यार्द्धं तस्मै प्रादिशत्। सोत्सवमन्तर्नगरं प्रविश्य श्रुतशूद्रकचारुचरितः सह महिष्या राज्यश्रियमुपबुभुजे महाभुजः।

§८९) तस्य च सातवाहनस्य चन्द्रलेखाद्याः पञ्चशतानि पत्न्यः। सर्वा अपि षड्भाषाकवित्वविदः। राजा पुनरनधीतव्याकरणः। आगत उष्णकालः। आरब्धा जलकेलिः। चन्द्रलेखा शीतालुः शीतं न सहते। नृपस्तु प्रेम्णा शृङ्गकजलैस्तामनवरतं सिञ्चते। ततः सा संस्कृतेन प्राह–देव! मां 15 मोदकैः पूरय। हालस्तु तत्संस्कृततत्त्वमनवगच्छन् मोदकनाम श्रुत्वा दास्याः पार्श्वान्मोदकपटलिकामानीनयत्। चन्द्रलेखा तां दृष्ट्वा पतिमतिभ्रमं[3] दर्शनादहसीत्–अहो! महाराजस्य शास्त्रोत्तेजितमतिव्यापः। राज्ञाऽप्युपहासो ज्ञातः। पृष्टा राज्ञी–किमर्थं वयमुपहस्यामहे?। राज्ञी जगाद–अन्यार्थस्थानेऽन्यार्थावबोधादुत्प्रासितो[4]ऽसि प्रिय!। लज्जितो राजा। सद्यो विद्यार्थं[5] भारतीं त्रिरात्रोपवासेनाराध्य प्रत्यक्षीकृत्य तद्वरान्महाकविर्भूत्वा सारस्वतव्याकरणादिशास्त्रशतान्य- 20 चीकृपत्[6]। तस्येश्वरस्य गुणकृत्वो[7] भारती देवताऽवसरेऽवतीर्याह। एकदा भारतीमभ्यार्थयत[8]–सकलमपि पुरं आघयामार्द्धमहः कविरूपं भवतु। तथैव कृतं देव्या। एकस्मिन् दिने दशकोट्यो गाथाः सम्पन्नाः। 'सातवाहनकशास्त्रं' तत्कृतम्।

§९०) तस्य चोर्वीपतेः खरमुखो नाम दण्डनाथः शूरो भक्तः प्राज्ञः पुण्याढ्यः आरम्भसिद्धः। एकदा हालेनादिष्टं खरमुखाय–मथुरां लाहि। आदेशः[9] प्रमाणमित्युक्त्वा बहिर्व्यापारिणां पार्श्वमेत्य 25 राजादेशमचकथत्। व्यापारिभिः प्रोक्तम्–खरमुख! द्वे मथुरे स्तः। एका दक्षिणमथुरा पाण्डवकृता। अपरा पूर्वमथुरा यद्गोष्ठे कृष्णः समुत्पन्नः। यत्र वृन्दावनादीनि वनानि। द्वयोर्मध्यात्का मथुरा ग्राह्येति पृच्छ। खरमुखेनोक्तम्–प्रतापमार्त्तण्डं तं कः प्रष्टुमीष्टे। वक्ष्यति हि–रे! मम चेतो न जानीथ?। तस्य च प्रकोपः सद्यः प्राणहरः। द्वे अपि मथुरे ग्रहीष्यामः। सैन्यं द्विखण्डं कृत्वा द्वे मथुरे एकस्मिन्नेव मध्याह्ने खरमुखेन जगृहाते। तत्पुरीद्वयग्रहणवर्द्धापनिकामुखौ द्वौ नरौ 30 आगमताम्[10]। यावत्प्रमोदात्तौ नृपतिरालपति तावत्तृतीय एक आगात्। स उवाच–देव! भवत्काराप्यमाणजैनप्रासादभूमितलेऽक्षयो निधिः प्रादुर्बभूव दिष्ट्या। यावत्तदभिमुखमीक्षते, तावदेव दासी प्रेममञ्जूषा शुद्धान्तादायासीत्।–स्वामिन्! देव्या चन्द्रलेखया सर्वाङ्गलक्षणः सुतो

---

1 A ०चिकीर्षु। 2 A 'चितायाम्' नास्ति, BED परिजनश्च तौ। 3 P ०मतिश्रम०। 4 P हसितोऽसि। 5 A विद्याभारतीं प्रति, BE विद्यावर्षं भारतीं प्रति। 6 P ०चीकरत्। 7 A गुणाकृष्टा। 8 P ०भ्यर्थयत्। 9 A आदिश०। 10 P आयातौ।

जातः। चतस्रोऽपि वर्द्धापनिका दत्ताः क्ष्मापालेन। तेन प्रमोदेनास्य महोन्माद उत्पन्नः। ततो मेलयित्वा लोकं हयारूढो गोदावरीतीरमुपेत्य, तां जगाद तारतरस्वरम्–

१९८. सच्चं भण गोदावरि! पुव्वसमुद्देण साहिया संती। सालाहणकुलसरिसं जइ ते कूले कुलं अत्थि॥ २॥

१९९. उत्तरओ हिमवंतो दाहिणओ सालवाहणो राया। समभारभरक्कंता तेण न पल्हत्थए पुहवी॥ ३॥

तादृशं तस्य गर्वमीक्षमाणा महामन्त्रिणोऽन्योऽन्यं मन्त्रयामासुः–नृपः श्रिया तरलितः। ततो[1] 5

२००. जितश्चेत्पुरुषो लक्ष्म्या, हृतं लोकद्वयं ततः। जिता चेत्पुरुषेणैषा जितं लोकद्वयं ततः॥ ४॥

तस्मादस्य दुःखोत्पादनेन मदगदोच्छेदः कर्तुमर्हः। इत्यालोच्य राजानं व्यजिज्ञपत्–देव! ललाटंतपतपनः कालः, भोजनावसरो वर्त्तते। पादोऽवधार्यतां सौधायेत्युदित्वा सौधमानेषुः। तत्रापि मदात् स्तम्भादीनि कुट्टयति। ततो मन्त्रिभिः खरमुखं वीरोत्तंसं छन्नीकृत्य राज्ञे उक्तम्–देव! खरमुखः सद्यो व्याधिना यामगमत्। अथ तच्छ्रवणे क्ष्मापो दुःखाच्छोकान्मदमहासीत्। 10 शोकात्तु वैकल्यमचकलत्। अथामात्यैर्विज्ञप्तम्–प्रजेश्वर! विदेशादायातैर्मृतजीवनविद्याविद्भिः[2] खरमुखो जीवितः। यद्यादेशः स्यात् तदा पदकमलयुगलतले लोठ्यते[3]। इत्युक्ते सुस्थो जातः। दृष्टः खरमुखः। सुष्ठु तुष्टो राजा। एवं तस्योदयः।

§९१) अन्यदासोऽसौ गोदावरीतीरे क्रीडति। [4]तदैकेन मीनेन जलाद्बहिर्मुखं निष्कास्य हसितम्[5]। भीतश्चमत्कृतश्च भूपः। रात्रौ ध्यानाकृष्टाऽऽयाता ब्राह्मी पृष्टा–देवि! मीनः किमर्थं 15 हसति?। ब्राह्म्याह–वत्स! प्राग्भवे त्वमत्रैव पुरे काष्ठभारहारक आसीः। स च मध्याह्ने काष्ठकष्टार्जितधनक्रीतान् सक्तून् उष्णोदकविलोडितान् मासक्षपणिकक्षपर्ये मुदा ददे। तेन पुण्येन त्वं सम्राडवातारीः[6]। तदेकस्तत्रत्यो व्यन्तरो वेत्ति। तेन मीने सङ्क्रम्य हसितं त्वया दृष्टम्। राजाह–हासस्य को भावः?। ब्राह्मी वक्ति–अयं भावः–अयं दानादासर्द्धिः, पुनर्दाने मन्दादरः। धिगात्मकार्यमूढं जीवलोकमिति। सातवाहनो जल्पति–तस्य व्यन्तरस्य मचर्चया किं कार्यम्?। 20 ब्राह्म्याह–प्राग्भवेऽयं तवैव सखाऽभूत्। तेन तु[7] कृपणत्वात्किमपि न दत्तम्। केवलं त्वद्दत्तमेव किञ्चिदनुमोदितम्। तेन पुण्येन व्यन्तरत्वेनावतीर्णोऽयम्। ततस्त्वयि हितार्थित्वमस्य। मां च त्वन्मन्त्रशक्तिसमाकृष्टिप्रत्यक्षां त्वन्मातृकल्पां जानाति। ततस्तथाऽहसदिति विद्धि। तद्वृत्तान्तज्ञानादवनीशो वदान्यत्वं सुष्ठ्वाददे। ब्राह्मी-श्रीदत्तशब्दवेधरससिद्धेरिच्छादानी मानी जैनः।

§९२) इत्थंकारं नानाविधान्यवदातानि हालक्षितिपालस्य कियन्ति नाम वर्णयितुं पार्यन्ते। 25 स्थापितश्चा[8]नेन गोदावरीतीरे महालक्ष्मीप्रासादः[9]। अन्यान्यपि च यथार्हं दैवतानि निवेशितानि तत्तत्स्थानेषु। राज्यं प्राज्यं चिरं भुञ्जाने जगतीजानौ, अन्यदा कश्चिद्दारुभारहारकः कस्यचिद्वाणिजस्य वीथ्यां प्रत्यहं चारूणि दारूण्याहृत्य विक्रीणीते स्म। दिनान्तरे च तस्मिन्ननुपेयुषि वणिजा तद्भगिनी पृष्टा[10]–किमर्थं भवद्भ्राताऽद्य नागतो मद्वीथ्याम्?। तया बभणे–श्रेष्ठिश्रेष्ठ! मत्सोदर्यः स्वर्गिषु सम्प्रति प्रतिवसति। वणिगभणत्–कथमिव?। सावदत्–कङ्कणबन्धादारभ्य विवाह-प्रकरणे दिनचतुष्टयं नरः स्वर्गिष्विव वसन्तमात्मानं मन्यते। तत्तदुत्सवालोकनकौतूहलात्। तच्चाकर्ण्य राजाऽप्यचिन्तयत्–अहो! अहं स्वर्गिषु किं न वसामि। चतुर्षु चतुर्षु दिनेषु अनवरतं

1 P नास्ति 'ततो'। 2 P ०जीवनविदुरैः। 3 BE लोट्यते; P लोच्यते। 4 तदैक०। 5 P हसितः। 6 P भूपोऽभूत्। 7 P नास्ति 'तु'। 8 P स्थापिता। 9 P महालक्ष्मीः प्रासादे। 10 P भगिन्यापृष्टा।

विवाहोत्सवमय एव स्थास्यामि। इति विचार्य चातुर्वर्ण्ये यां यां कन्यां युवतिं रूपशालिनीं पश्यति शृणोति स [1]च, तां तां सोत्सवं पर्यणैषीत्। एवं च भूयस्यनेहसि गच्छति लोकैश्चिन्तितम्–अहो! कथं भाव्यमनपत्यैरेव सर्ववर्णैः स्थेयम्। सर्वाः कन्यास्तावद्राज्ञैव विवोढाः। योषिदभावे च कुतः सन्ततिरिति। एवं विषण्णेषु लोकेषु विवाहवाटिकानाम्नि ग्रामे वास्तव्य
5 एको द्विजः पीठजां देवीमाराध्य व्यजिज्ञपत्–भगवति! कथं विवाहकर्माऽस्मदपत्यानां भावीति। देव्योक्तम्–भो वाडव! त्वद्भवनेऽहमात्मानं कन्यारूपं कृत्वाऽवतरिष्यामि। यदा मां राजा प्रार्थयते तदाऽहं तस्मै देया। शेषमहं भलिष्ये[2]। तथैव राजा तां रूपवतीं श्रुत्वा विप्रमयाचत। सोऽपि जगाद–दत्ता मया। परं महाराज! स्वयमत्रागत्य मत्कन्योद्वोढव्या। प्रतिपन्नं राज्ञा। गणकदत्ते लग्ने क्रमाद्विवाहाय प्रचलितः। प्राप्तश्च तं ग्रामं श्वशुरकुलमवनिपतिः। देशानुरोधा-
10 द्वधूवरयोरन्तराले जवनिका दत्ता। अञ्जलिर्युगन्धरीलाजैर्भृतः। लग्नवेलायां तिरस्करिणीमपनीय यावदन्योऽन्यस्य शिरसि लाजान्वितरीतुं प्रवृत्तौ, तदनु किल हस्तमेलापो भविष्यतीति, तावद्राजा तां रौद्ररूपां राक्षसीमिवैक्षिष्ट। ते च लाजाः कठिनकर्करपाषाणरूपा राज्ञः शिरसि लगितुं लग्नाः। क्षितिपतिरपि किमपि वैकृतमिदमिति विभावयन् पलायितः। तावत्सा पृष्ठलग्नाऽश्मशकलानि वर्षन्ती प्राप्ता। ततो नरपतिर्नागह्रदं प्राविशन्निजजन्मभूमिम्। तत्रैव च
15 निधनमानशे। अद्यापि सा पीठजा देवी प्रतोल्या बहिरास्ते निजप्रासादस्था। शूद्रकोऽपि क्रमेण कालिकादेव्याऽऽजारूपं विकृत्य वापीं प्रविष्टया करुणरसितेन विप्रलब्धस्तन्निष्कासनार्थं प्राविशत्। पतितस्य तस्य कृपाणस्य कूपद्वारे तिर्यक्पतनाच्छिन्नाङ्गः पञ्चतामानश्च। महालक्ष्म्या हि वरवितरणावसरे–अस्मादेव[3] कौक्षेयकात्तवदिष्टान्तावाप्तिर्भवित्री[3]त्यादिष्टमासीत्।

§९३) ततः शक्तिकुमारो राज्येऽभिषिक्तः सातवाहनायनिः। तदनन्तरमद्यापि[4] राजा न
20 कश्चित्प्रतिष्ठाने प्रविशति [5]वीरक्षेत्र इति। अत्र च यदसम्भाव्यं[6] क्वचिद् गर्भे, तत्र परसमय एव मन्तव्यो हेतुः*। यन्नासङ्गतवाग्जनो जैनः। श्रीवीरे शिवं गते ४७० विक्रमार्को राजा[7] तत्कालीनोऽयं सातवाहनस्तत्प्रतिपक्षत्वात्। यस्तु कालिकाचार्यपार्श्वात् पर्युषणामेकेनाह्ना अर्वागानायत्, सोऽन्यः सातवाहन इति सम्भाव्यते। अन्यथा–

२०१. नवसयतेणउएहिं समइक्कंतेहिं वीरमुक्खाओ। पज्जोसवणचउत्थी कालयसूरीहिं तो ठविआ ॥ ५ ॥

25 इति चिरत्नगाथाविरोधप्रसङ्गात्। न च सातवाहनक्रमिकः सातवाहन इति विरुद्धम्। भोजपदे बहूनां भोजत्वेन, जनकपदे बहूनां जनकत्वेन रूढत्वात्।

॥ इति सातवाहनप्रबन्धः समाप्तः ॥ १५ ॥



1 P नास्ति 'च'। 2 P करिष्ये। 3 एतत्पाठस्थाने P पुस्तके 'अस्माद्देवखड्गात्तव मरणं भावी०' एतादृश पाठः प्राप्यते। 4 P पुस्तके 'सातवाहनस्य निसूदनान्तर०' एतादृशो भ्रष्ट. पाठो विद्यते। 5 P वीरक्षेत्रत्वात्। 6 BP यदसद्भाव्य। * A आदर्शे 'मन्तव्यो हे वयं नासंगत०' एष. पाठ.। 7 P राजाऽभवत्।

## १६. अथ वङ्कचूलप्रबन्धः ।

२०२. पारेतजनपदान्तश्चर्मण्वत्यास्तटे महानद्याः । नानाघनवनगहना जयत्यसौ ढींपुरीति पुरी ॥ १ ॥

§९४) अत्रैव भारते वर्षे विमलयशा नाम भूपतिरभूत्। तस्य सुमङ्गलदेव्या सह विषयसुखमनुभवतः क्रमाज्जातमपत्ययुगलम्। तत्र पुत्रः पुष्पचूलः, पुत्री पुष्पचूला। अनर्थसार्थमुत्पादयतः पुष्पचूलस्य कृतं लोकैर्वङ्कचूल[1] इति नाम। महाजनोपलब्धेन राज्ञा रुपितेन निःसारितो नगराद्वङ्कचूलः। गच्छंश्च पथि पतितो भीषणायामटव्यां सह निजपरिजनेन स्वस्रा च स्नेहपरवशया। तत्र च क्षुत्पिपासार्दितो दृष्टो भिल्लैः। नीतः स्वपल्ल्याम्, स्थापितश्च मृतपूर्वपल्लीपतिपदे। पर्यपालयद्राज्यम्। अलुण्ठयद् ग्रामनगरसार्थादीन्। अन्यदा सुस्थिताचार्या अर्बुदाचलादष्टापदयात्रायै प्रस्थितास्तामेव सिंहगुहां नाम पल्लीं सगच्छाः प्रापुः। जातश्च वर्षाकालः। अजनि पृथिवी जीवाकुला। साधुभिः सहालोच्य मार्गयित्वा वङ्कचूलाद्वसतिं स्थिता तत्रैव सूरयः। तेन च प्रथममेव व्यवस्था कृता–मम सीमान्तर्धर्मकथा न कथनीया। यतो युष्मत्कथायां अहिंसादिको धर्मः। न चैवं मम लोको निर्वहति। एवमस्तु इति प्रतिपद्य तस्थुरुपाश्रये गुरवः। [2]वङ्कचूलेनाहूय सर्वे प्रधानपुरुषा भणिताः–अहं राजपुत्रस्तन्मतसमीपे[3] ब्राह्मणादय आगमिष्यन्ति। भवद्भिर्जीववधो मांसमद्यादिप्रसङ्गश्च पल्ल्या मध्ये न कर्त्तव्यः। एवं कृते यतीनामपि भक्तपानमजुगुप्सितं कल्पत इति। तैस्तथैव कृतं यावच्चतुरो मासान्। प्राप्तो विहारसमयः। अनुज्ञापितो वङ्कचूलः सूरिभिः।

२०३. समणाणं सउणाणं भमरकुलाणं च गोकुलाणं च। अनिआओ वसहीओ सारईआणं च मेहाणं ॥ २ ॥

इत्यादि वाक्यैः। ततस्तैः सह चलितो वङ्कचूलः। स्वसीमां प्रापुषा तेन विज्ञप्तम्–वयं परकीयसीमां न प्रविशाम इति। सूरिभिर्भणितः–वयं सीमान्तरमुपेतास्तत्[4] किमप्युपदिशामस्तुभ्यं [ दाक्षिण्यात्[5] ] तेनोक्तम्–यन्मयि निर्वहति तदुपदेशेनानुगृह्यतामयं जनः। ततः सूरिभिश्चत्वारो नियमा दत्ताः। तद्यथा–अज्ञातफलानि न भोक्तव्यानि १। सप्ताष्टानि पदान्यपसृत्य घातो देयः २। पट्टदेवी नाऽभिगन्तव्या ३। काकमांसं न भक्षणीयमिति ४। प्रतिपन्नास्तेन ते। गुरून् प्रणम्य [6]स्वगृहमगमत्। अन्यदा गतः सार्थस्योपरि धाट्या। शकुनकारणान्नागतः सार्थः। त्रुटितं च तस्य पथ्यदनम्। पीडिताः क्षुधा राजन्याः। दृष्टश्च तैः किम्पाकतरुः फलितः। गृहीतानि फलानि। न जानन्ति ते नामधेयमिति तेन न भुक्तानि। इतरैः सर्वैर्बुभुजिरे। मृताश्च ते किम्पाकफलैः। ततश्चिन्तितं तेन–अहो! नियमानां फलम्। तत एकाक्येवागतः पल्लीम्। रजन्यां प्रविष्टः स्वगृहम्। दृष्टा पुष्पचूला दीपावलोकेन पुरुषवेषा निजपत्न्या सह प्रसुप्ता। जातश्च कोपस्तयोरुपरि। द्वावप्येतौ खड्गप्रहारेण छिनद्मीति यावदचिन्तयत्तावत्स्मृतो नियमः। ततः सप्ताष्ट पदान्यपक्रम्य[7] घातं ददतः खाट्कृतमुपरि खड्गेन। व्याहृतं स्वस्रा–जीवतु वङ्कचूलः। इति तद्वचः श्रुत्वा लज्जितोऽसावपृच्छत्–किमेतदिति?। साऽपि नटवृत्तान्तमचीकथत्। कथं?[8]– भ्रातः! अत्र प्रतिभूपतेर्नटवेषधराश्चरा आगच्छन्। यदि पल्ल्यां वङ्कचूलोऽस्ति तदाऽस्माकं

1 A ०चूड। 2 A नास्ति 'वंकचूलेन'। 3 AE तत्समीपे। 4 P ते। 5 P पुस्तक एवैतत्पदं दृश्यते। 6 CP स्वस्व गृ०। 7 BC पदान्यपसृत्य। 8 P 'कथं' नास्ति।

नृत्यं पश्यतु—इत्यब्रुवन्। तदा मया चिन्तितं[1] साम्प्रतं भ्राता वङ्कचूलो नास्ति गृहे। तदा मया तव वेषधारिण्या नृत्यमकारि तेषां पार्श्वात्। दानमदायि तेभ्यः। गताश्च ते स्वस्थानम्। [ *ततो बहुनिशागमनेन निद्रापरवशा ] तेनैव[2] वेषेण भ्रातृजायापार्श्वे अस्वपम्। इति वृत्तान्तं श्रुत्वाऽतीव मनसि खेदो दध्रे तेन।

5 §९९) कालक्रमेण तस्य तद्राज्यं शासतस्तत्रैव पल्ल्यां तस्यैवाचार्यस्य शिष्यौ धर्मऋषि-धर्मदत्तनामानौ कदाचिद्वर्षारात्रमवास्थिषाताम्। तत्र तयोरेकः[3] साधुस्त्रिमासक्षपणकं विदधे, द्वितीयस्तु चतुर्मासक्षपणम्। वङ्कचूलस्तु तद्दत्तनियमानामायतिशुभफलतामवलोक्य व्यजिज्ञपत्—हे भदन्तौ! मदनुकम्पया कमपि पेशलं धर्मोपदेशं ददताम्[4]। ततस्ताभ्यां चैत्यविधापनदेशना पापनाशिनी विदधे। तेनापि शराविकापर्वतसमीपवर्तिन्यां[5] तस्यामेव पल्ल्यां चर्मण्वती सरित्तीरे

10 कारितमुच्चैस्तरं चारु चैत्यम्। स्थापितं च तत्र श्रीमन्महावीरबिम्बम्। तीर्थतया च रूढं तत्। तत्रायान्ति स्म चतुर्दिग्भ्यः सङ्घाः।

कालान्तरे कश्चिन्नैगमः सभार्यः सर्वर्द्ध्या तद्यात्रायै प्रस्थितः। प्राप्तः क्रमेण रन्तिनदीम्। नावमारूढौ च दम्पती चैत्यशिखरं व्यलोकयताम्। ततः सरभसं सौवर्णकचोलके कुङ्कुमचन्दनकर्पूरं प्रक्षिप्य जलं क्षेप्तुमारब्धवती नैगमगृहिणी। प्रमादात् निपतितं तदन्तर्जलतलम्[6]। ततोऽ-

15 भाणि वणिजा—अहो! इदं कचोलकं नैककोटिमूल्यरत्नखचितं राज्ञा ग्रहणकेऽर्पितमासीत्। ततो राज्ञः कथं †छुटितव्यम्। इति चिरं विषद्य वङ्कचूलस्य पल्लीपतेर्विज्ञापितं तत्†यथा—अस्य राजकीयवस्तुनो विचितिः कार्यताम्। तेनापि धीवर आदिष्टस्तच्छोधयितुं प्राविशदन्तर्नदीम्। विचिन्वता चान्तर्जलतले[7] दृष्टं तेन हिरण्मयरथस्थं जीवन्तस्वामिश्रीपार्श्वनाथबिम्बम्। यावत्पश्यति स्म स बिम्बस्य हृदये तत्कचोलकम्। धीवरेणोक्तम्—धन्याविमौ दम्पती यद्भगवतो

20 वक्षसि घुसृणचन्द्रचन्दनविलेपनार्हे स्थितमिदम्। ततो गृहीत्वा तदर्पितम् नैगमस्य। तेनापि[8] दत्तं तस्मै बहुद्रव्यम्। उक्तं च बिम्बस्वरूपं नाविकेन। ततो वङ्कचूलेन श्रद्धालुना तमेव प्रवेश्य[9] निष्कासितं तद्बिम्बम्। कनकरथस्तु तथैव[10] मुक्तः। निवेदितं हि स्वप्ने प्राग्भगवता [11]नृपतेः—यत्र क्षिप्ता सती पुष्पमाला गत्वा तिष्ठति, तत्र बिम्बं शोध्यमिति। तदनुसारेण [12]बिम्बमानीय समर्पितं राज्ञे वङ्कचूलाय। तेनापि स्थापितं श्रीवीरबिम्बस्य बहिर्मण्डपे, यावत्किल नव्यं चैत्यमस्मै

25 कारयामि—इत्यभिसन्धिमता। कारिते च चैत्यान्तरे, यावत्तत्र स्थापनार्थमुत्थापयितुमारभन्ते राजकीयाः पुरुषास्तावद्बिम्बं नोत्तिष्ठति स्म। देवताधिष्ठानात्तत्रैव स्थितम्। अद्यापि तथैवास्ते। धीवरेण पुनर्विज्ञप्तः पल्लीपतिः—यत्तत्र देव! मया नद्यां प्रविष्टेन बिम्बान्तरमपि दृष्टम्। तदपि बहिरानेतुमौचितीमञ्चति। पूजारूढं हि भवति। ततः पल्लीश्वरेण पृष्टा स्वपरिषत्—भोः! जानीते कोऽपि अनयोर्बिम्बयोः संविधानकम्?। केन खल्वेते नद्यन्तर्जलतले न्यस्ते?। इत्याकर्ण्यैकेन

30 पुराविदा स्थविरेण विज्ञप्तम्—देव! एकस्मिन्नगरे पूर्वं नृपतिरासीत्। स च परचक्रेण समुपेयुषा सार्द्धं योद्धुं सकलचमूसमूहं[13] सन्नह्य गतः। तस्याग्रमहिषी च निजं सर्वस्वमेतच्च बिम्बद्वयं कनक-

1 P ऽचिन्ति। * कोष्ठकगत पाठ P पुस्तक एव लभ्यते। 2 AB तेन। 3 P एकस्त्रिमास०। 4 P दत्त.। 5 AC 'तेनापि शिरोनामिदविकापर्वत०'। 6 AB ०जलं तत्। † दण्डान्तर्गता पङ्क्ति पतिता AED आदर्शेषु। 7 P चान्तर्जलं। 8 P तेन। 9 A प्रविश्य। 10 P तत्रैव। 11 AB नृपेण। 12 'बिम्बं' नास्ति A। 13 A चमूसमूलसन्नहनेन गतः; BE चमूसमूहसन्नहनेन।

रथस्थं विधाय जलदुर्गमिति कृत्वा चर्मण्वत्यां कौटिम्बके प्रक्षिप्य स्थिता । चिरं युध्यतस्तस्य कोऽपि खलः किल वार्त्तामानैषीत्–यदयं नृपतिस्तेन परचक्राधिपतिना व्यापादित इति । [1]तच्छ्रुत्वा देवी तत्कौटिम्बकमाक्रम्यान्तर्जलतलं प्राक्षिपत् । स्वयं च परासुतामासदत् । स च नृपतिः परचक्रं निर्जित्य यावन्निजनगरमागमत्, तावद्देव्याः प्राचीनं वृत्तमाकर्ण्य भवाद्विरक्तः पारमेश्वरीं दीक्षां कक्षीचक्रे । तत्रैकं बिम्बं देवेन बहिरानीतं पूज्यमानं चास्ति । द्वितीयमपि 5 चेन्निःसरति तदोपक्रम्यतामिति । तदाकर्ण्य वङ्कचूलः परमार्हतचूडामणिस्तमेव धीवरं तदानयनाय प्रावीविशत्[2] । स च तद्बिम्बं कटीदघ्नवपुर्जलतले तिष्ठमानं बहिस्थशेषाङ्गमधोऽवलोक्य निष्कासनोपायाननेकानकार्षीत् । न च तन्निर्गतमिति दैवतप्रभावमाकलय्य समागत्य च विशामीशाय न्यवेदयत् तत्स्वरूपम् । अद्यापि तत्किल तत्रैवास्ते ।

§ ९६) श्रूयते ह्यद्यापि, केनापि धीवरस्थविरेण नौकास्तम्भे जाते तत्कारणं विचिन्वता तस्य 10 हिरण्मयरथस्य युगकीलिका लब्धा । तां कनकमयीं दृष्ट्वा लुब्धेन तेन व्यचिन्ति–यदिमं रथं क्रमात् सर्वं गृहीत्वा ऋद्धिमान् भविष्यामीति । ततश्च स रात्रौ निद्रां न लेभे । उक्तश्च केनापि अदृष्टपुरुषेण–यदिमां तत्रैव विमुच्य सुखं स्थेयाः । नो चेत्सद्य एव त्वां हनिष्यामीति । तेन भयार्त्तेन तत्रैव विमुक्ता[3] युगकीलिका इत्यादि । किं न सम्भाव्यते देवताधिष्ठितेषु पदार्थेषु । श्रूयते च सम्प्रत्यपि काले कश्चिन् म्लेच्छः पाषाणपाणिः श्रीपार्श्वनाथप्रतिमां भङ्क्तुमुपस्थितः । स्तम्भि- 15 तबाहुर्जातो महति पूजाविधौ कृते सज्जतामापन्न इति । श्रीवीरबिम्बं महत्, तदपेक्षया लघीयस्तरं श्रीपार्श्वनाथबिम्बमिति महावीरस्यार्भकरूपोऽयं देव इति मेदाश्चेल्लण इत्याख्यां प्राचीकथत् । श्रीमच्चेलणदेवस्य महीयस्तममाहात्म्यनिधेः पुरस्ताभ्यां महर्षिभ्यां सुवर्णमुकुटाम्नायः साधितः । प्रकाशितश्च भव्येभ्यः । सा च सिंहगुहा पल्ली कालक्रमाद् ढिंपुरीत्याख्यया प्रसिद्धा नगरी सञ्जाता । अद्यापि स भगवान् श्रीवीरः, स च चेल्लणपार्श्वनाथः, सकलसङ्घेन तस्यामेव 20 पुर्यां यात्रोत्सवैराराध्यते इति ।

§ ९७) अन्यदा वङ्कचूल उज्जयिन्यां खातपातनाय चौर्यवृत्त्या कस्यापि श्रेष्ठिनः सद्मनि गतः । कोलाहलं श्रुत्वा वलितः[4] । ततो देवदत्ताया गणिकाया गृहं प्राविशत् । दृष्टा सा कुष्ठिना सह प्रसुप्ता । ततो निःसृत्य गतः पुरः श्रेष्ठिनो वेश्म । तत्रैकविंशोपको लेख्यके त्रुट्यतीति परुषवाग्भिर्निर्भर्त्स्य निःसारितो गेहात्पुत्रः श्रेष्ठिना । विरराम च यामिनी । यावद्राजकुलं 25 यामीत्यचिन्तयत्, तावदुज्जगाम धामनिधिः । पल्लीपतिश्च निःसृत्य नगराद् गोधां गृहीत्वा तरुतले दिनं नीत्वा पुना रात्रावागाद्राजभाण्डागाराद्बहिः । गोधापुच्छे विलग्य प्राविशत् कोशम् । दृष्टो राजाग्रमहिष्या रुष्टया । पृष्टश्च–कस्त्वमिति ? । तेनोचे–चौर इति । तयोक्तम्–मा भैषीः । मया सह सङ्गमं कुरु । सोऽवादीत्–का त्वम् ? । साऽप्यूचे–अग्रमहिष्यहमिति । चौरोऽवादीत्–यद्येवं तर्हि ममाम्बा भवसि । अतो यामि । इति निश्चिते तया स्वाङ्गं नखैर्विदार्य पूत्कृतिपूर्वमाहूता आरक्षकाः । 30 गृहीतस्तैः । राज्ञा चानुनयार्थमागतेन तद् दृष्टम् । राज्ञोक्तास्ते [5]पूरुषाः–मैनं गाढं कुर्वीध्वमिति । तै रक्षितः । प्रातः पृष्टः क्षितिभृता । तेनाप्युक्तम्–देव ! चौर्यायाहं प्रविष्टः । पश्चाद्देवभाण्डागारे देव्या दृष्टोऽस्मि । यावदन्यन्न कथयति, तावत्तुष्टो विदितवेद्यो[6] नरेन्द्रः स्वीकृतः पुत्रतया ।

1 AB ततः । 2 P प्राविशत् । 3 P मुक्ता । 4 P चलितः । 5 P स्वपुरुषाः । 6 P ०विधो ।

स्थापितश्च सामन्तपदे। देवी विडम्ब्यमाना रक्षिता वङ्कचूलेन। अहो! नियमानां शुभं फलमिति अनवरतमयमध्यासीत्। प्रेषितश्चान्यदा राज्ञा कामरूपभूपसाधनार्थं। गतो युद्धे घातैर्जर्जरितो विजित्य तमागमत्स्वस्थानम्। व्याहृताश्च राज्ञा वैद्याः। यावद्रुद्धो[1]ऽपि घातव्रणो विकसति। तैरुक्तम्-देव! 'काकमांसेन शोभनो भवत्ययम्। तस्य च जिनदासश्रावकेण सार्द्धं प्रागेव
5 मैत्र्यमासीत्। ततस्तदानयनाय प्रेषितः पुरुषः पुरुषाधिपतिना, येन तद्वाक्यात् काकमांसं भक्ष-यतीति। तदाऽऽहूतश्च जिनदासोऽवन्तीमागच्छन्नुभे दिव्ये सुदत्यौ रुदत्यावद्राक्षीत्। तेन पृष्टे-किं रुदिथः?। ताभ्यामुक्तम्-अस्माकं भर्त्ता सौधर्माच्च्युतः। अतो राजपुत्रं वङ्कचूलं प्रार्थयावहे। परं त्वयि गते स मांसं भक्षयिता। ततो दुर्गतिं गन्ता। तेन रुदिवः। तेनोक्तम्-तथा करिष्ये यथा तन्न भक्षयिता। गतश्च तत्र राज्ञोपरोधाद्वङ्कचूलमवोचत्-गृहाण बलिभुक्पिशितम्। पटू-
10 भूतः सन् प्रायश्चित्तं चरेः। वङ्कचूलोऽवोचत्-जानासि त्वं यदाचर्याप्यकार्यं प्रायश्चित्तं ग्राह्यम्, ततः प्रागेव तदनाचरणं श्रेय इति।

'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'

इति वाक्यान्निषिद्धो नृपतिः। विशेषप्रतिपन्नव्रतनिवहश्चाच्युतकल्पमगमत्। वलमानेन जिन-दासेन ते देव्यौ तथैव रुदत्यौ दृष्ट्वा प्रोक्तम्-किमिति रुदिथः?। न तावत्स मांसं ग्राहितः। ताभ्यां
15 अभिदधे-स ह्यधिकाराधनावशादच्युतं प्राप्तः। ततो नाभवदस्मद्भर्त्तेति। एवं जिनधर्मप्रभावं सुचिरं विभाव्य जिनदासः स्वावासमाससादेति। अस्य ढिंपुरीतीर्थस्य निर्मापयिता वङ्कचूलः।

॥ इति वङ्कचूलप्रबन्धः ॥ १६ ॥

---

## १७. अथ विक्रमादित्यप्रबन्धः।

§ ९८) विक्रमादित्यपुत्रं विक्रमसेनराजानं प्रति पुरोधसाऽऽशीर्दत्ता-यत्त्वं पितुर्विक्रमादित्याद-
20 धिको भूयाः। [2]तदा †देवताधिष्ठिताभिः सिंहासनस्थाभिश्चतसृभिः काष्ठपुत्रिकाभिर्हसितम्†। तदा विक्रमसेनेन पृष्टाः पुत्रिकाः-किमिति हस्यते?। ताः प्रोचुः-तेन सह समत्वमपि न घटते, कुतो नामाधिक्यम्?।

आद्याह-अवन्त्यां विक्रमो राजा अपूर्वसत्यवार्त्ताकथकाय दीनारपञ्चशतीं[3] दत्ते। एवं श्रुत्वा [4]खर्प्परकचौरेण दीनारपञ्चशती याचिता। वार्त्ता चैका कथिता। यथा-गन्धवहश्मशानसमीपे
25 पातालविवरकूपे मया दीपो देवीहरसिद्धिप्रेषितः पतन् दृष्टः। मयापि तत्पृष्ठे झम्पापितम्। पाताले तत्र दिव्यं सौधं दृष्टम्। तत्र तैलकटाहिका ज्वलन्ती दृष्टा। तत्पार्श्वे एको नरो दृष्टः। पृष्टश्च-किमर्थं त्वमिह?। तेनोक्तम्-अत्र सौधे शापभ्रष्टा दिव्यकन्याऽस्ति। सा ब्रूते 'यस्तैल-कटाहिकायां झम्पां दाता स मे वर्षशतं पतिर्भविता।' अतोऽहमेतत्पतित्वार्थमत्र तिष्ठामि। परं साहसं नास्ति। इति वार्त्तया पञ्चशती लब्धा। तेन[5] खर्प्परेण[6] समं राजापि तत्र गतो विवरेण।

---

1 P ०रुद्धो। 2 A ततो। † दण्डान्तर्गतपाठस्थाने ABE आदर्शेषु 'चतसृभिर्वारांगनाभिर्हसितं देवताधिष्ठिताभि. सिंहासनस्थिताभि' एतादृश. पाठभेद.। 3 A ०शतं। 4 AB कर्परक०। 5 A तत्र। 6 A कर्प्परचोरेण।

तैलकटाहिकायां झम्पा दत्ता । कन्यया सोऽमृतेन जीवितः । यावत्सा राजानं वृणुते । तावद्राज्ञोक्तम्–अग्रेतनं नरं वरय । वृतः स तया । एवं यः परोपकारी तदधिकोऽयं कथं भावी ? ॥ १ ॥

द्वितीययोक्तम्–काशीतो द्वौ द्विजौ आयातौ । विक्रमार्केण पृष्टौ राज्यस्वरूपम् । ताभ्यामूचे–अस्मद्देशे पातालविवरमस्ति । तत्रान्धो राक्षसो वर्त्तते । अस्मद्देशस्वामी तैलकटाहे झम्पां दत्त्वा स्वमांसेन राक्षसस्य पारणं कारयति स्म । राक्षसोऽपि तं पुनर्नवीकरोति । सप्त अपवरिकाः[1] स्वर्णसम्पूर्णाश्च[2] कुरुते । प्रत्यहं प्रातः सप्ताप्यपवरिकास्त्यागेन रिक्तीकुरुते । श्रुत्वेदं विक्रमोऽपि तत्र गतः । कटाहे झम्पा[3] दत्ता । रक्षसा भक्षितो जीवितश्च । पुनर्भक्षितो जीवितश्च[*] । राक्षसस्य[4] शापेनान्ध्यमस्ति । तच्छापान्तोऽभूत् । दृग्भ्यां पश्यति । दृष्ट्वा चाह–कस्त्वं साहसी ? । तेनोक्तम्–विक्रमोऽहम् । तुष्टोऽहं ते । याचस्व[5] । राज्ञोक्तम्–[तुष्टश्चेत्तदाऽस्य राज्ञो[†]] नित्यं सप्ताप्यपवरिकाः स्वर्णपूर्णा भूयासुः । तथाऽस्य पुनरेवं कटाहझम्पापातादियातना मा भूत् । रक्षसोक्तम्–एवमस्तु । अतः कथं विक्रमार्कादधिको भावी ?; समोऽपि न । अतो हसितः ॥ २ ॥

तृतीययोक्तम्–एकदा विक्रमार्को निजपूर्वोस्तव्यग्वल्वाटकुम्भकारयुक्तो देशान्तरं गतः । परवेशविद्यावेदी योगी मिलितः । स आवर्जितः तुष्टश्च विद्यां दातुमारेभे । राज्ञोक्तम्–प्रथमं मम मित्रस्य ददत[6] । तेनोक्तम्–न योग्योऽसौ । निर्बन्धात्तस्यापि दत्ता [†गुणरञ्जितेन योगिना नृपस्य पश्चाद् बलाहत्ता ।] अवन्तीं गतो राजा राज्यं करोति । एकदा पट्टाश्वो मृतः । विद्यापरीक्षार्थं राज्ञा स्वजीवस्तत्र क्षिप्तः । कुम्भकारेण स्वजीवो नृपदेहे । कुम्भकारो राज्यं करोति । तेनाश्वो मारणाय चिन्तितः । नृपजीवस्तु पूर्वमृतशुकदेहे प्रविष्टः । शुकोऽपि सोमदत्तश्रेष्ठिभार्याप्रोषितभर्तृकाकामसेनागृहं गतः । सा तच्चातुर्येण हृष्टा राज्ञी समीपं न गच्छति । श्रेष्ठी समागतः । सा राज्ञी समीपं गता । अनागमनकारणं पृष्टा । शुकचातुर्यकारणं प्रोक्तम् । तया आनायितः शुकः[7] । सा रञ्जिता तेन, यथा राज्ञा पूर्वम् । एकदा शुकेन राज्ञीस्नेहपरीक्षार्थं गृहगोधिकादेहे गतम् । राज्ञ्या तद्वियोगेन काष्ठभक्षणं कर्त्तुमारब्धम् । नृपजीवेन शुको जीवापितः । सा राज्ञी व्यावृत्ता । शुकेन सर्वोऽपि वृत्तान्तो राज्ञ्यै कथितः । राज्ञ्या कुम्भकारस्यावर्जना कृता । तेन कुम्भकारजीवेन तुष्टेन विद्याप्रदर्शनाय मृतचोत्कटदेहे स्वजीवः क्षिप्तः । नृपो निजदेहं गतः । अजो भयात्कम्पते । राज्ञा उक्तः–न भेत्तव्यम् । नाहं त्वत्समो भावी । सकृपोऽस्मि । त्वं सुखं जीव । चर । पिब । ततः कथं तेन समो भविष्यति ॥ ३ ॥

चतुर्थ्योक्तम्—एकदा [8]विक्रमार्केणोत्तमं सौधं कारितम् । राजा तत्र गतः विलोकनाय । तत्र चटकयुग्ममुपविष्टमस्ति । चटकेनोक्तम्–सुष्ठु सौधमस्ति । चटिकयोक्तम्–यादृशं स्त्रीराज्ये लीलादेव्या वासगृहमस्ति तादृशमेतत् । राज्ञा तच्छ्रुतम् । तद्गमनौत्सुक्यं जातम्[9] । [10]परं स्थानं तु न वेत्ति । तेन सचिन्तो [11]जातः । भट्टमात्रो नृपाशयं ज्ञात्वा तत्स्थानकज्ञानाय चचाल । तन्मार्गे लवणसमुद्रं ततो धूलीसमुद्रमुत्तीर्य तत्र रात्रौ मदनायतने स्थितः । निशीथे हयहेषारवसंसूचितं दिव्यालङ्कारभूषितं दिव्यस्त्रीवृन्दमागमत् । तत्स्वामिन्या कामः पूजितः [12]व्यावृत्तमानानां तासां

---

1 A अपवरकान् । 2 A ०सम्पूर्णांश्च । 3 A झम्पां दत्त्वा । * P पुस्तके इदं द्वितीयं वाक्यं नोपलभ्यते । 4 A रक्षसः । 5 AP नास्ति पदमेतत् । † P पुस्तक एव कोष्टकगतः पाठो दृश्यते । 6 A नास्ति । 7 A 'शुकः' नास्ति । 8 A विक्रमेण । 9-10 'जातं पर' नास्ति A आदर्शे । 11 'जात.' नास्ति A आदर्शे । 12 A व्यावर्तमा० ।

अश्वपुच्छे लगित्वा तत्र गतः। दासीभिर्दृष्टः। स्वामिनी पार्श्वे नीतः। तया स्नानादि कारितः। रात्रौ तद्गृह एव स्थितः। तया स्वपत्या उक्तम्–मम विक्रमादित्यो भर्त्ता भूयात्, किं वा यो मां चतुर्भिः शब्दैर्जागरयति। इत्युक्त्वा सुप्ता। तेन चिन्तितम्–किं चतुर्भिरपि शब्दैर्न जागर्त्ति। तर्हि एनामहमेव जागरयिष्यामि। चत्वारः शब्दाः कृताः। यदा न जागर्त्ति तदा पादाङ्गुष्ठश्चम्पितः। तया पादेनाहतो यत्र विक्रमादित्यः सुप्तोऽस्ति तत्र पतितः। राज्ञा पृष्टम्–किमिदं?। तेन सर्वोऽपि वृत्तान्तः प्रोक्तः।

ततो राजाऽग्निसञ्ज्ञं वेतालमारुह्य तत्र गतः। वेतालः प्रच्छन्नो जातः। राजा दासीभिस्तत्र नीतः। तया भक्तिः कृता। तद्रूपदर्शनात्सरागा जाता। परं शयानया प्रतिज्ञा कृता। तथैवोक्तम्।

राज्ञा दीपस्थितो वेताल उक्तः–भोः प्रदीप! कामपि कथां कथय। स वक्तुमारेभे–कश्चिद्विप्रः। तस्य पुत्री। सा चतुर्णां वराणां दत्ता पृथक् पृथग् ग्रामे[1]। चत्वारोऽप्यागताः। विवादो जातः। †तया महान्तमनर्थं दृष्ट्वा काष्ठभक्षणं कृतम्। स्नेहादेकेन वरेणापि चितामध्ये झम्पापितम्†। एकोऽस्थीनि गृहीत्वा गङ्गां गतः। एकस्तत्रोटजं कृत्वा स्थितो भस्मरक्षार्थम्। एको देशान्तरं गतः। भ्रमता च तेन सञ्जीवनी विद्या शिक्षिता। पुनरपि तत्रागतः। अपरेऽप्यागताः। सा जीवापिता। पुनर्विवादो जातः। तर्हि चतुर्णां मध्ये कस्य सा पत्नी?। राज्ञोक्तम्–अहं न वेद्मि[2]। त्वमेव[3] ब्रूहि। स आह–यश्चितया सहोत्थितः* स भ्राता। योऽस्थिनेता स पुत्रः। येन जीवापिता स पिता, उत्पत्तिहेतुत्वात्। यो भस्मरक्षकः स भर्त्ता, पालकत्वात्॥ ४–१॥

राज्ञा ताम्बूलस्थगिका [4]द्वितीयकथां पृष्टा। वेतालाऽधिष्ठानात्साप्याह–कुत्रापि मृतभर्तृका ब्राह्मणी अभूत्[5]। तस्या जारेण सह सुता जाता। तां रात्रौ बहिस्त्यक्तुं गता। इतश्च तत्र कोऽपि शूलाक्षिप्तो जीवन्नस्ति। तस्य पादे स्खलिता। तेनोक्तम्–कः पापी दुःखिनोऽपि दुःखमुत्पादयति। किं दुःखम्?। सोऽप्याह[6]–देहपीडादिकं, विशेषतो निष्पुत्रत्वं कथितम्। पुनः शूलानरेणोक्तम्–त्वमपि कथय,–का त्वम्?। निजचरितं तयोक्तम्। तन्निशम्य तेनाप्युक्तम्–पुराहृतं भूनिक्षिप्तं अत्रस्थं द्रव्यं त्वं मदीयमादाय सुतां मया सह विवाहय। ब्राह्मणी प्राह–त्वमिदानीं मरिष्यसि। सुता च लघ्वी। कथं पुत्रोत्पत्तिः?। ऋतुकाले कस्यापि द्रव्यं दत्त्वा पुत्रमुत्पादयेः। तया तथैव सर्वं कृतम्। ‡पुत्रो जातः। स रात्रौ राज्ञो द्वारे क्षिप्तः। राज्ञः केनाप्यर्पितः। कालेन[7] निष्पुत्रस्य नृपस्य राज्ये स एवोपविष्टः। श्राद्धदिवसे गङ्गायां पिण्डदानं कर्त्तुं गतः। जलाद्धस्तत्रयं निर्गतम्। स राजा विस्मितः। कस्य करस्य पिण्डं ददामि। तर्हि भो राजन्! वद कस्य देयः पिण्डः। राज्ञोक्तम्–चौरहस्तस्य॥ ४–२॥

राज्ञा स्वर्णपालकं[8] जल्पितम्। तदपि कथामाह–कस्मिन्नपि ग्रामे कश्चित्कुलपुत्रः। स परिणीतोऽन्यग्रामे। परं तत्पत्नी श्वशुरगृहं[9] नागच्छति। स्वजनैर्निर्गुण इति हस्यते। एकदा सर्वजनप्रेरितो मित्रयुतस्तत्र गतः। मार्गे यक्षस्य शिरो नामितम्। तत्प्रभावात्सादरा जाता। आगन्तुं

---

1 एतत्पदं नास्ति AB आदर्शे। † दण्डान्तर्गतपाठस्थाने ABE आदर्शेषु 'एकेन सह काष्ठभक्षणं कृत' इत्येव पाठो लभ्यते। 2 P वच्मि। 3 A त्वमिह। * अत्र A आदर्शे, पत्रपार्श्वभागे टिप्पन्यां 'तीर्थे तु स्थापकः पुत्र॰, पुनर्जन्मप्रद॰ पिता। सहोत्थश्च पुनर्भ्राता स भर्ता यस्तु पोषक.॥' एष श्लोको लिखितो लभ्यते। 4 A 'कथां' इत्येव। 5 A नास्ति 'अभूत्'। 6 A नास्ति। ‡ P पुस्तके 'पुत्रो जातमात्रो राजद्वारे क्षिप्त.।' ईदृशं वाक्यम्। 7 A नास्ति। 8 P ॰पालनकं। 9 P ॰गृहे।

प्रवृत्ता। यक्षभवने[1] समीपमागते स एकाकी यक्षं नन्तुमगच्छत्। यक्षेण स्त्रीलोभेन तस्य शिरश्छेदितम्। महत्यां वेलायां मित्रमागतम्। तदवस्थो जातो दृष्टः[2]। चिन्तितं च तेन[3]–जनप्रवादो भविष्यति, यथा–अनेन स्त्रीहेतोर्हतः। तर्हि ममापि मर्तुं युक्तम्। इति विचिन्त्य तेनापि स्वशिरश्छिन्नम्[4]। [5]साप्यागता। द्वावपि तदवस्थौ प्रेक्ष्य चिन्तितं तया–जनोऽग्रेऽपि 'मां पतिद्वेषिणीं[6]' कथयन्नास्ति, सम्प्रति पतिघ्नीमिति कथयिष्यति। तर्हि म्रियेऽहम्[7]। इति ध्यात्वा गले शस्त्रिका लगिता[8]। तावता यक्षेण करे धृता–मा साहसं कुरु। तयोक्तम्–द्वावपि जीवापय[9]। यक्षेणोक्तम्[10]–शिरसी निजनिजकबन्धे योजय। तयोत्सुकयाऽन्यान्यकबन्धयोर्न्यस्ते। तयोर्भार्याविवादो जातः–एको वदति मदीया, द्वितीयोऽपि तथा। तर्हि कस्य सा?। राज्ञोक्तम्–यस्य कबन्धे शिरः स भर्ता–'सर्वस्य गात्रस्य शिरः प्रधान'मिति वचनात्॥ ४–३॥

कर्पूरसमुद्गकोऽपि कथामाह–कुतोऽपि ग्रामात्स्वस्वकलाविदश्चत्वारः सुहृदो देशान्तरं चेलुः। एकः काष्ठसूत्रधारः, द्वितीयः स्वर्णकारः, तृतीयः शालापतिः, तुर्यो विप्रः। क्वापि वने रात्रावुषिताः। प्रथमयामे सूत्रधारः प्राहरके स्थितः। तेन काष्ठपुत्रिका तरुणीसदृशी कृता समग्राऽपि। द्वितीये प्रहरे स्वर्णकारो यामिकः। तेनाभरणैर्विभूषिता। तृतीये शालापतिः। तेन क्षौमाणि परिधापिता। चतुर्थे विप्रेण सजीवा कृता। प्रातः सजीवां दृष्ट्वा सर्वेऽपि तज्जिघृक्षया मिथो विवदन्ते। तर्हि कस्य सा, भो विक्रमादित्यनरेन्द्र!?। सा नाम श्रुत्वा चुक्षोभ। राज्ञोक्तम्–तदहं न वच्मि[11]। तयोरकथयतोश्च तया जल्पितम्–भो राजन्! कस्य सा?। राज्ञोक्तम्–स्वर्णकारस्य। [*अधुनापि यः स्वर्णं चटापयति स एव भर्ता भवति]॥ ४–४॥

सा पप्रच्छ–के यूयम्?। दीपस्थेन वेतालेनोक्तम्–असौ स विक्रमादित्यः। सा हृष्टा व्यूढा। तां गृहीत्वाऽवन्तीमागमत्। य ईदृग् तत्समः[12] कः; आधिक्ये[13] तु का कथेति हसितम्। विक्रमसेनेन गर्वस्त्यक्तः। [†]इति श्रीविक्रमप्रबन्धः॥

§९९) ततो विक्रमसेनः पुरोधसमप्राक्षीत्–यदि किल एताः काष्ठपुत्रिका मम पितरमद्भुतगुणं वर्णयन्ति, तर्हि स एव लोके तत्प्रथमतयोत्तमत्वेनावतीर्णो भविष्यति। ततः प्राक्[14] तु न कोऽपि तादृगुत्तमोऽभूदिति ब्रूमः। पुरोधाः प्राह–राजन्! अनादिरियं रत्नगर्भा। अनादिश्चतुर्युगी। युगे युगे नररत्नानि जायन्ते। अहमेव प्रधानमिति गर्वो न हितकारी, न च निर्वहते। यतस्त्वत्पितुर्विक्रमादित्यस्य मनस्येकदा एवमभूत्; यथा–रामेण व्यवहृत्य लोकः सुखीकृतः, तथाऽहमपि करिष्ये। ततो रामायणं व्याख्यापितम्। तत्र यथा रामस्य दानं, अगारस्थापनं, वर्णाश्रमव्यवस्था, गुरुभक्तिस्तथा सर्वमारब्धम्। ततोऽभिनवो राम इत्यात्मानं पाठयति। तद् दृष्ट्वा मन्त्रिभिश्चिन्त्यते स्म–अनुचितकारी अस्मत्प्रभुः, यो[15] गर्वादात्मानं तद्वन्मन्यते। अयं गर्वोऽस्योपायेनोत्तारयितव्यः प्रस्तावे। इतश्च त्वत्पित्रा विक्रमादित्येन पृष्टम्–लोके स कोऽपि क्वाप्यास्ते योऽश्रुतपूर्वं रामस्याचरणं ज्ञापयति नः। तत एकेन ज्यायसा मन्त्रिणाऽपरमन्त्रिप्रेरितेन कथितम्–राजेन्द्र! कोशलायां

---

1 A यक्षे। 2 P जातो धनिको दृष्टः। 3 AB नास्ति 'तेन'। 4 B छिन्ने। 5 P महति वेलायां साऽप्यागता। 6 P ऽग्रेऽपि द्वेषणीं। 7 'ऽहम्' नास्ति AB। 8 P लगापिता। 9 P जीवय। 10 AB तेनोक्तं। 11 A B वेद्मि। * कोष्ठकगता पंक्तिः प्रक्षिप्तप्राया P पुस्तके। 12 P ०समकः। 13 A अधिक. कोऽत्र। † P पुस्तके नास्ति समाप्तिज्ञापकमेतद् वाक्यम्। 14 A पराक् ननु। 15 AB यदात्मानं।

विप्र एको वृद्धोऽस्ति। स काश्चित् श्रीरामस्य वार्त्ताः पारम्पर्यायाताः सम्यग् [1]विवेद। आहूय पृच्छयते। राज्ञा आहूतः स सगौरवम्। आयातः। पूजितः पृष्टश्च–वृद्ध[2]! वद काश्चिद्रामकथां नव्याम्। विप्रो बभाण–पृथ्वीनाथ! यदि कोशलायामागच्छसि, तदा रामस्य कमपि प्रवन्धं साक्षाद्दर्शयामि। इह स्थितस्तु वक्तुं न पारयामि। तदा राज्ञा राज्यभारो मन्त्रिषु न्यस्तः। स्वयं महाचमूसहितो वृद्धद्विजयुक्त अयोध्योपशल्यां ययौ। स्कन्धावारे तस्थौ। तदानीं स एव सर्वदिगीश इत्यभीः। विप्रो भाषितः क्ष्मापालेन–दर्शय रामदेवचरित्रम्। ततो विप्रः स्थानमेकं दर्शयित्वा भूपालमालपत्–इदं भूखण्डं खानयत। ततः खानयति क्ष्मापालः। खनत्सु खनकेषु उपरि[3] हेमकलशः, ततो हैमी मण्डपिका प्रकटीबभूव। उपरितनं [4]रजोऽपसारितम्। पश्चानुपूर्व्या प्रथमद्वितीयतृतीयक्षणा हैमा दृष्टा महीभुजा। चतुर्थे क्षणे नीरजी[5]कृते विपुला[6] उपानदेका हैमसूत्रकृता ज्योतिर्जालजटालमाणिक्यखचिता दृष्टा। भूपेन[7] विस्मितेन[8] गृहीत्वा हृदि शिरसि निहिता। अहो! असामान्या रत्नजातिरियम्। ततो विप्रेण विज्ञप्तम्–देव! चर्मकारपत्न्या उपानदेषा; न स्प्रष्टुमर्हा[9] तव विष्टपपतेः। विक्रमेणोक्तम्–सा चर्मकार्यपि धन्या, यस्या ईदृगुपानत्। वद केयं कथा?। ततो विप्रो ब्रूते–विश्वेश्वर! श्रीरामे राज्यं कुर्वति सति, अत्र चर्मकारसदनानि आसन्। इदमेकस्य चर्मकारस्य सदनम्। तस्य पत्नी लाडबहुला। अतो गर्वमुद्वहति; विनयं न करोति। ततः [10]सा तेन हक्किता हता च। याहि रे दुःखं गृहीत्वा इत्युक्ता च। ततो रुष्टाऽस्यामेकस्यां उपानहि तटपतितायां अपरिहितायां द्वितीयस्यां तु परिहितायां निजतातस्य सदनं जगाम। गत्वा पत्युः कठोरं भाषितं पित्रे बभाण। पित्रा दिनद्वयमस्थापि,[11] आवर्जिता च। अथोक्ता–वत्से! कुलस्त्रियः पतिरेव शरणम्। तत्रैव याहि। सोचे–न यामि मानक्षयात्। द्वित्रिरुक्तिप्रत्युक्तयो भणिताः। पितृभ्यां भाणितापि यदा पतिगृहं न याति तदा पित्रा भाषितम्–वत्से! अहमेवं मन्ये–यदा श्रीरामः सीता–लक्ष्मणसहितः स्वयमागत्यानुनीय त्वां श्वशुरकुले प्रहिता, तदा तत्र गन्त्री त्वम्। साऽप्यलीकाभिमानिनी प्रवदति–इदमित्थमेव, राम एवागते यामि तत्र नापरथा। इमं वृत्तान्तं चरत्वनियुक्ताः प्रच्छन्नाः सुरा गत्वा रामं व्यजिज्ञपन्–देव! अयं वृत्तान्तश्चर्मकारपुत्र्याः। ततो देवः श्रीरामः प्रजावत्सलः प्रातः ससीतः सलक्ष्मणः सामात्यस्तच्चर्मकारभवनमगात्। तन्मध्यं प्रविष्टः। पूजितः कारुभिर्विस्मितैर्विज्ञप्तश्च–देव! अयमस्मान् कीटान् प्रति कियान् प्रसादः कृतः। स्वप्नेऽपि नेदं सम्भाव्यते–यद्देवोऽस्मानुपतिष्ठते। किं कारणमागमनस्य?। श्रीरामः प्राह–त्वत्पुत्र्याः श्वशुरकुले प्रेषणायायाताः स्मः। तस्या हि वराक्यास्तथाविधा [12]प्रतिज्ञाऽऽस्ते। ततो हृष्टस्तज्जनकः। अपवरकं गत्वा दुहितरमाह स्म–मुग्धिके[13]! तव प्रतिज्ञा पूर्णा। श्रीरामदेव आयातः सदेवीकः। एहि, वन्दस्व तं जगत्पतिम्। ततस्तुष्टा रामान्तिकमागता। ववन्दे तम्। आलापिता प्रजातातेन[14]–वत्से! गच्छ श्वशुरमन्दिरम्। तया भणितम्–आदेशः प्रमाणम्। ततो[15] गता पतिगृहम्। रामः स्वस्थानमायासीत्। श्रीविक्रम! अस्या द्वितीया उपानत् तत्र[16] पितृगृहे खन्यमाने लप्स्यते। स्वामिन्! आयाहि, तत्र[17] खान्यते। गतो राजा तत्र। खानितं तत्। लब्धा द्वितीयाऽप्युपानत्। दृष्टं हैमं गृहम्। एवमन्यान्यपि तेन विप्रेण

---

1 A सम्यग्वेद। 2 B विप्र। 3 P प्रथम। 4 A राज्ञाऽपसारितं। 5 P नीरजे। 6 AB विपुले। 7 AB नास्ति 'भूपेन'। 8 AB विस्मितेन च। 9 P ०मर्हति। 10 P अत कारणात् सा। 11 P स्थापिता। 12 P सन्धा। 13 AB पुत्रिके। 14 A प्रजानाथेन। 15 'ततो' नास्ति P। 16 AB नास्ति 'तत्र'। 17 P तत्।

खानयितानि[1] । लातं तद्धेम । राज्ञा विप्रः पृष्टः–विप्र[2] ! कथमीदृशं सम्यग् जानासि ? । विप्रेण गदितम्–पूर्वजपारम्पर्योपदेशात् ज्ञातं तुभ्यमुक्तं च । परं गर्वं मा धाः । स रामः स एष । तस्य ह्याज्ञया[3] जल-ज्वलनौ स्तम्भेते स्म । पतन्त्यो भित्तयो दत्तायां तदाज्ञायां न पेतुः । लूता द्विचत्वारिंशत्, अन्धगडाः सप्तविंशतिः, स्फोटिका अष्टोत्तरं शतम्, विड्वराणि दोषाश्च सर्वे व्यनेशन् । या तु तद्देवी सीता, ये त्रयस्तद्भ्रातरः, ये तद्भृत्या हनूमत्सुग्रीवादयस्तेषां महिमानं वर्षशतेनापि वाक्पतिरपि वक्तुं न शक्तः । इति श्रुत्वा विक्रमेण गर्वो मुक्तः । विरुदं निषिद्धं 'अभिनवरामः' इति । पुनरुज्जयिनीमागात् । यथाशक्ति लोकमुदधरत् । तस्य हि अग्निवेताल-पुरुषकसिद्धिभ्यां सुवर्णसिद्ध्या चोपकारैश्वर्यं तदा निरुपममासीत् । ततो विक्रमो धन्य एव । ततोऽधिकास्तु परे 'कोटाकोटयोऽभूवन्[4] । इत्याकर्ण्य विक्रमसेनो विवेकी अभूत् ॥

§ १००) *जैनतत्त्वबाह्यमुग्धजनचित्रमात्रफलं विक्रमादित्यप्रबन्धमेकं ब्रूमः ।

उज्जयिन्यां राज्यं शासति विक्रमादित्ये, आसन्ने ग्रामे विप्रेणैकेन हलं खेडयता दिव्यं ज्योतिष्मद्रत्नमेकं भूमौ पतितं लेभे[5] । जगृहे । तन्मौल्यप्रश्नार्थमुज्जयिन्यां रत्नपरीक्षिनैगमपार्श्वमागमत् । दर्शितं तद्रत्नम् । विस्मितास्ते ऊचुः–न वयमस्य रत्नस्य मौल्यकरणे क्षमाः, ईदृशस्य पूर्वमदृष्टत्वात्; अलीकमौल्यकरणे तीव्रदोषाच्च । केवलं देवः श्रीविक्रमादित्यो यदि वेत्ति मूल्यमस्य । स हि रेखाप्राप्तो रत्नमूल्यज्ञाने । विप्र उपविक्रमं जगाम । रत्नमदीदृशत् । विक्रमेण पृष्टम्–क लब्धमिदम् ? । विप्रेणोक्तम्–देव ! हलं खेटयता स्वक्षेत्रभूमौ लब्धम् । राज्ञा भणितम्–तर्हि दिनद्वयेन वक्ष्यामः । रत्नमस्मद्धस्त एवास्तु । विप्र ! मा भैः, न वयं परधनबद्धाभिलाषाः । धीरां दत्त्वा स्वसौधमध्य एव स्थापितः सः ।

अथ रात्रौ विक्रमेण विमृष्टम्–रत्नपरीक्षकाः संसारे बलिमनु । स च पाताले । तत्रापि गन्तव्यम् । 'कुतूहली ह्यलसो न भवेत्' । ततोऽग्निवेतालमारुह्याशु पातालं गतः । बलिभुवनद्वारेऽस्थात् । तत्र नारायणो द्वास्थः । प्रणतः । नारायणेन पृष्टम्–किं कार्यं तेऽत्रागमने ? । विक्रमेणोक्तम्–उपबलिगतो विज्ञपय, राजा कार्यगौरवादायातोऽस्ति । यद्यादेशः स्यात्तदा दर्शनं लभते । ततः कृष्णेनोक्तं[6] बलये–राजा समागतोऽस्ति द्वारे । बलिना निवेदितम्–राजा चेद्युधिष्ठिरः ?, पृच्छेः [7]कृष्ण ! । गतः कृष्णः । पप्रच्छ–किं युधिष्ठिरोऽसि ? । विक्रमेणोक्तम्–राजानं युधिष्ठिरं मन्यते सः, तस्मादन्यद्वक्तव्यम् । गच्छ कृष्ण[7] !, मण्डलीक आगतोऽस्तीति वद । गतः सः । विज्ञप्तं तत् । बलिरूचे–मण्डलीकः किं रावणः ? । पुनरागतः कृष्णः । मण्डलीकश्चेत् किं रावण इति पृष्टोऽसि । विक्रमेणाभाणि–तर्हि गत्वा वद, कुमार आगतोऽस्ति । गत्वा तथोक्तम् । बलिराह–किं कार्तिकेयः, किं वा लक्ष्मणः, किं वा पातालवासी नागपुत्रो धवलचन्द्रः, किंवा वालिपुत्रोऽङ्गदो रामदूत इति ख्यातः ? । पुनरेहिरेयाहिरा कृष्णस्य । पुनर्विक्रमेणाभाणि–वदेस्त्वम्, वण्ठ आयातोऽस्ति । पुनर्गतः । बलिर्भणति–वण्ठश्चेत्किं हनूमान् ? । पुनः कृष्णो वागरितः । भणितं बलिवचः । पुनर्विक्रमः प्रोचे–गत्वा वद, तलारक्ष आगतोऽस्ति । उक्तं तेन तत्तथा । ततो बलिर्जगाद–किं विक्रमकः ? । कृष्णेनैत्य पृष्टम्–किं विक्रमादित्यः ? । विक्रमादित्येन ओमित्युक्तम् । बल्यादेशा-

1 AB अखानयिपत । 2 P नास्ति 'विप्र' । 3 P स्वाज्ञया । 4 P पर·कोटयो । * P पुस्तके नोपलभ्यतेऽयं प्रबन्धः । 5 E नास्ति 'लेभे' । 6 B गतः कृष्णः उक्तं । 7 A 'कृष्ण' नास्ति ।

दुपबलि नीतः। पृष्टो बलिना-रे विक्रम! रत्नमूल्यं प्रष्टुमागतोऽसि?। विक्रमादित्यो वदति इत्थमेवेदम्। दर्शितं रत्नम्। बलिर्बभाण-ईदृशानि अष्टाशीतिं सहस्राणि रत्नानि नित्यं युधिष्ठिरो निर्मूल्यान्यदत्त पात्रेभ्यः। तेषां मध्यादिदमरुलत् २ विप्रेण लब्धम्। प्रायो भूमिं गतानि सर्वाणि रत्नानि, कालस्य बहुलत्वात्। ततो रे! राजा युधिष्ठिर एव, त्वं कः?। 5 विक्रमेणोक्तम्-देव! सत्यम्। एतत्प्रष्टुमिच्छामि-ईदृक्संपत्तिर्युधिष्ठिरस्य कुतः?। बलिराह-दिग्जयधनानि तस्मै भ्रातृभिश्चतुर्भिराहृतानि। पूर्वं[1] चमत्कृतनामा कार्प्पटिको दारिद्र्यमग्नो रुद्रमारराध। तेन तुष्टेन तस्मै स्ववाञ्छया कैलासासन्ना आमूलचूलं हेमरत्नमयी पूर्निष्पाद्य दत्ता। सा सुखेन[2] तेन भुक्ता। तस्मिन्मृते रुद्रेण पांशुवृष्ट्या सा पिदधे। यदा तु युधिष्ठिर-बान्धवः सहदेव उत्तरां दिशं साधयितुमुपतस्थे, तदा रुद्रस्तां पुरं स्वैर्गणैरुद्घाट्य सर्वां तद्धे-10 मादिविभूतिं युधिष्ठिरगृहप्रविष्टामचीकरत्। ततो युधिष्ठिरस्य दानेच्छासिद्धिः। ततः स राजा। मण्डलीकस्तु रावण इति व्यक्तम्। लोके तादृग्बलवत्त्वं विद्यादर्पयोगात्। कुमारस्तु कार्त्तिकेयो वक्तुं युक्तः। सप्ताहवयाः सन्, यस्तारकं जघान। लक्ष्मणोऽपि कुमारः, यो मेघनादं ममर्द। तथा धवलचन्द्रोऽपि पीहुलिपुत्रः कुमारः, यो विषेण जगद्धर्तुं क्षमः। विषममपि विषम-मृततां नेतुं समर्थः। अङ्गदोऽपि कुमारः सारः, य एवं वक्तुं समर्थः-

15 २०४. सन्धौ वा विग्रहे वापि मयि दूते दशाननी। अक्षता वा क्षता वापि क्षितिपीठे लुठिष्यति ॥ १ ॥

इत्यादि ख्यातिश्च। वण्ठश्च सत्यो हनूमान्, यः स्वामिनं रामं प्रियावियोगज्वरजर्जराङ्गं सन्धीरयामास मध्येसभम्।

२०५. देवाज्ञापय किं करोमि किमहं लङ्कामिहैवानये, जम्बूद्वीपमितो नये किमथवा वारांनिधिं शोषये।
हेलोत्पाटितविन्ध्यपर्वतहिमस्वर्णत्रिकूटाचल,-क्षेपक्षोभविवर्द्धमानसलिलं बध्नामि वा वारिधिम् ॥ २ ॥

20 इत्यादि चमत्कारिस्वामिकार्यसिद्धिसारतया वण्ठो हनूमान् एव। तलारक्षस्तु भवसि। गच्छ, मूल्यं नास्ति रत्नस्येति द्विजाय वदेः। तदाकर्ण्य विक्रमः स्वपुरीं ययौ। रत्नं दत्त्वा, वल्युक्तमुक्त्वा स्वग्रामाय विप्रं विसृष्टवान्। चिरं राज्यं चक्रे।

॥ इति विक्रमादित्यप्रबन्धः ॥ १७ ॥

## १८. अथ नागार्जुनप्रबन्धः।

25 §१०१) ढङ्कपर्वते सुराष्ट्राभूषणशत्रुञ्जयगिरिशिखरैकदेशरूपे राजपुत्ररणसिंहस्य [3] भोपलनाम्नीं पुत्रीं रूपलावण्यसम्पूर्णां पश्यतो जातानुरागस्य तां[4] सेवमानस्य वासुकिनागस्य पुत्रो नागार्जुन-नामा जातः। स च जनकेन पुत्रस्नेहमोहितेन सर्वासां महौषधीनां फलानि मूलानि दलानि च भोजितः। तत्प्रभावेन स महासिद्धिभिरलङ्कृतः, सिद्धपुरुष इति विख्यातः। पृथ्वीं विचरन् पृथ्वी-स्थानपत्तने सातवाहनस्य राज्ञः कलागुरुर्जातः। स च गगनगामि[5]नीविद्याध्ययनार्थं पालित्तानकपुरे 30 श्रीपादलिप्ताचार्यान् सेवते। अन्यदा भोजनावसरे पादप्रलेपबलेन तान् गगने उत्पतितान्

1 A पूर्वं च मरुत्वन्तु०। 2 BE 'सुखेन' नास्ति। 3 P भोपाल०। 4 'तां' नास्ति P। 5 A ०गामिविद्या०।

पश्यति। अष्टापदादितीर्थानि नमस्कृत्य स्वस्थानमुपागतानां तेषां पादौ प्रक्षाल्य, सप्तोत्तरशतमहौषधीनामास्वादेन वर्णगन्धादिभिर्नामानि निश्चित्य, गुरूपदेशं विनापि पादलेपं कृत्वा कुर्कुटपोत इवोत्पतन्नवटतटे निपतितः। व्रणजर्ज्जरिताङ्गो गुरुभिः पृष्टः–किमेतदिति ?। तेन यथास्थिते प्रोक्ते तस्य कौशल्येन चमत्कृतचित्ता आचार्यास्तस्य शिरसि पद्महस्तं दत्त्वा भणन्ति–षष्टिकतन्दुलोदकेन तान्यौषधानि वर्त्तयित्वा पादप्रलेपं[1] कृत्वा गगने गरुड इव स्वैरं व्रजेः। ततस्तां सिद्धिं प्राप्य [2]परितुष्टोऽसौ ननर्त्त। पुनरपि कदाचिद् गुरुमुखादाकर्णयति, यथा–रससिद्धिं विना दानेच्छासिद्धिर्न भवति। ततो रसं परिकर्मयितुं प्रवृत्तः। स्वेदन-मर्दन-जारण-मारणानि चक्रे। रसस्तु स्थैर्यं न बध्नाति। ततस्तु गुरून् पप्रच्छ–कथं रसः[3] स्थैर्यमाबध्नाति ?। गुरवः प्राहुर्यथा–दुष्टदैवतनिर्दलनसमर्थायां श्रीपार्श्वनाथस्य दृशि साध्यमानः, सर्वलक्षणोपलक्षितया महासत्या योषिता च मृद्यमानो रसः स्थिरीभूय कोटिवेधी भवति। तच्छ्रुत्वा स पार्श्वनाथप्रतिमां [4]समहिमामन्वेषयितुमारेभे। [ परं तादृशीं न क्वापि पश्यति*। ]

§ १०२) इतश्च नागार्जुनेन स्वपिता वासुकिर्ध्यात्वा प्रत्यक्षीकृतः, पृष्टश्च–श्रीपार्श्वनाथस्य[5] दिव्यकलानुभावां प्रतिमां कथय। तेनावाचि–द्वारवत्यां समुद्रविजयदशार्हेण श्रीनेमिनाथमुखान्महातिशयसम्पन्ना ज्ञात्वा श्रीपार्श्वस्य प्रतिमा प्रासादे स्थापयित्वा पूजिता। द्वारवत्या दाहानन्तरं समुद्रेण प्लाविता सा प्रतिमा तथैव समुद्रमध्ये स्थिता। कालेन कान्तीवासिनो धनपतिनामकस्य सांयात्रिकस्य यानपात्रं देवताऽतिशयात् स्खलितम्। अत्र जिनबिम्बं तिष्ठतीत्यदृष्टवाचा निश्चित्य नाविकांस्तत्र निक्षिप्य सप्तभिरामसूत्रतन्तुभिर्बद्धोधृता प्रतिमा। निजनगर्यां नीत्वा प्रासादे स्थापिता[6]। चिन्तिता[7]तिरिक्तलाभप्रहृष्टेन पूज्यते प्रतिदिनम्। ततः सर्वातिशायि तद्बिम्बं ज्ञात्वा नागार्जुनेन[8] रससिद्धिनिमित्तमपहृत्य सेडीनद्यास्तटे स्थापितम्[9]। तस्य पुरतो रससाधनार्थं सातवाहनस्य राज्ञीं चन्द्रलेखाभिधां महासतीं देवीं सिद्धव्यन्तरसान्निध्येनानाय्य प्रतिनिशं रसमर्दनं कारयति। एवं तत्र भूयो भूयो गतागते तया बान्धव इति प्रतिपेदेऽसौ। सा तेषामौषधानां मर्दनकारणं पृच्छति। स च कोटीवेधस्य रसस्य वृत्तान्तं सत्यं कथयति। अन्यदा द्वयोर्निजपुत्रयोस्तया निवेदितं यथा–सेडीनदीतटे नागार्जुनस्य रससिद्धिर्भविष्यति। तौ रसलुब्धौ निजराज्यं मुक्त्वा नागार्जुनान्तिकमागतौ। कैतवेन तं रसं जिघृक्षू प्रच्छन्नवेषौ यत्र नागार्जुनो जेमति तस्य गृहस्य परिसरे भ्रमतः। रन्धनीमालपतः–त्वं नागार्जुनाय रसवतीं लवणबहुलां कुर्याः। यदा तां रसवतीं क्षारां कथयति, तदाऽसभ्यं[10] वदेः। साऽप्योमिति प्रतिशुश्राव। अथ सा तज्ज्ञानार्थं तदर्थं सलवणां रसवतीं साधयति। षण्मास्यामतिक्रान्तायां रसवती तेन क्षारेति दूषिता। रन्धन्या च राजपुत्रयोरग्रे गदितम्। अद्य क्षारत्वं जज्ञे नागार्जुनेन। ताभ्यामपि तस्य रससिद्धिर्निश्चिक्ये। अथ तौ तस्य वधोपायं ध्यायतः पृच्छतश्च लोकं तज्ज्ञम्। पृच्छद्भ्यां ज्ञातं यथा–वासुकिना एवास्य दर्भाङ्कुरान्मृत्युः कथितोऽस्ति। नागार्जुनेन सिद्धस्य शुद्धस्य रसस्य कुतपौ द्वौ भृतौ ढङ्कपर्वतस्य गुहायां क्षिप्तौ। पृष्टचराभ्यां ताभ्यां ज्ञातौ। मुक्त्वा वलमानो नागार्जुनस्ताभ्यां संमुखस्थो दर्भाङ्कुरेण जघ्ने। मृतः सद्यः।

---

1 P पादलेपं। 2 ABE प्रतिष्ठोऽसौ। 3 BP रसं। 4 ABE नास्ति 'समहिमां'। * P पुस्तक एव एष कोष्ठकगत. पाठो दृश्यते। 5 AB श्रीपार्श्वस्य। 6 P स्थापिताऽस्ति। 7 A चिन्ताति०। 8 P नागार्जुनो। 9 P अतिष्ठिपत्। 10 'असभ्यं' नास्ति AB।

२०६. आलेख्ये चित्रपतिते मृते च मधुसूदन ! । क्षत्रिये त्रिषु विश्वासश्चतुर्थो नोपलभ्यते ॥ १ ॥

तौ कृतपौ देवतया संगृहीतौ । राजपुत्रौ नरकपङ्कगोचरतां गतौ । देवतया क्रुद्धया हतौ । न रसलाभो न च धर्मस्तयोः । तावपि राजपुत्रौ मरणकाले पश्चात्तापेन दग्धौ–हा हा ! येन खटिकासिद्धिवशाद्दशार्हमण्डपादिकीर्त्तनानि रैवतोपत्यकायां कृतानि, येन रसो लोकोपकाराय साधितः, तस्य प्राणद्रोहेणावाभ्यां किं साधितम् ? । [1]एकस्तावत्कलापात्रद्रोहः, [2]अपरश्च मातुलद्रोहः । एवं दुःखार्त्तौ मृतौ । रसस्तम्भनात् स्तम्भनं नाम तीर्थं तत्पार्श्वदेवस्य । कालान्तरे तद्बिम्बं ततः स्थानात्स्तम्भनपुरे पूज्यतेऽधुना ॥

॥ इति नागार्जुनप्रबन्धः ॥ १८ ॥

## १९. अथ वत्सराजोदयनप्रबन्धः ।

§ १०३) पूर्वस्यां वत्सो जनपदः । तत्र कौशाम्बी पूः । श्रीऋषभवंश्यशान्तनु-विचित्रवीर्य-पाण्डु-अर्जुन-अभिमन्यु-परीक्षित-जनमेजयकुले सहस्रानीको राजा । तत्पुत्रः शतानीकः । तस्य पत्नी महासती चेटकराजनन्दिनी मृगाक्षी मृगावती नाम । तयोर्नन्दन उदयनः, यः किल नादसमुद्रो विख्यातः । यो [3]गीतशक्त्या उज्जयिन्यां अनलगिरीभं विन्ध्याभिमुखं गच्छन्तं पुनरालाने निवेश्य चण्डप्रद्योतराज्यमद्योतयत् । स सुखेन राज्यं शास्ति । यौवनस्थो भोगी कलासक्तो धीरः ललितो नायकः ।

§ १०४) इतश्च पाताले क्रौञ्चहरणं नाम पत्तनम् । तत्र वासुकिः सर्पराजः श्वेतो नीलसरोजलाञ्छितफणः । तस्य नामलदेवी नाम दयिता । विपुलो देशः । तक्षको नाम तस्य प्रतीहारो विषमादेवीप्रियः । यस्य फणामण्डपे त्रयोदशभारकोट्यो विषस्य वसन्तीति श्रुतिः । वासुकेः पुत्री दिव्यरूपा कनी वसुदत्तिर्नाम । तस्याः सख्यश्चतुर्दश । तद्यथा–धारू १, वारू २, चम्पकसेना ३, वसन्तवल्ली ४, मोहमाया ५, मदनमूर्च्छा ६, रम्भा ७, विमलानना ८, तारा ९, सारा १०, चन्दनवल्ली ११, लक्ष्मी १२, लीलावती १३, कलावती १४ । सा ताभिः सह वीणामृदङ्गवंशसूक्तादिभिः क्रीडति । एकदा तासां मध्यादेकया उक्तम्–स्वामिनि ! वसुदत्तिके ! अहं स्वपरिच्छदा सध्रीची नरलोके कौशाम्ब्यां दिव्यरूपं महोद्यानं क्रीडितुमगाम् । दृष्टा तत्र बकुलविचकिलदमनकचम्पकविरहकादिद्रुमाणां सारणीनां द्रुमालवालानां वाटीकोट्टस्य श्रीः । यदि स्वामिनी तत्केलिं काम्यति, तदा तत्र पादमवधारयतु । इदं श्रुत्वा सा वसुदत्तिका ताभिः सर्वाभिः सहेच्छासिद्ध्या सहसा तद्वनं जग्मुषी[4] । तत्र केलिं कुर्वन्ति ताः, कुसुमानि चिन्वन्ति, तैः करण्डान् पूरयन्ति, धम्मिल्लानुत्तङ्गयन्ति, हारान् सारान् रचयन्ति । एवं खेलन्तीनां तासां वने कोकिलकुलकलरवकलः कोलाहल उच्छलितः । तदाऽऽकर्णनादुद्यानपालक एत्य ता अद्राक्षीत् । अहोरूपमहो स्वरोऽहो प्रभेति विसिष्मिये[5] । भक्त्या श्रीउदयनं ताः समालोकितुमाह्वातुमगमत् । उदयनोऽपि कुतूहलादल्पपरिच्छदो वनमगात् । वसुदत्तिं ससखीकामालोकिष्ट । अध्यासीच–

1 P एक । 2 P अपरं । 3 A योगी तत् शक्त्या । 4 P प्राप्ता । 5 A विसिस्मये ।

[ मनोजन्मनः महाव्याधेः परमरसायनमेतत् । अस्याः रूपसम्पत् जिह्वाभिः कोटिभिः ताभिर्वर्णयितुमशक्या* । ]

२०७. अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु[1] कान्तिप्रदः, शृङ्गारैकरसः स्वयं [2]नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो, निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १ ॥

२०८. यत्पश्यन्ति झगित्यपाङ्गसरणिद्रोणीजुषा चक्षुषा, गच्छन्ति क्रमलालितोभयभुजं यन्नाम वामभ्रुवः ।
भाषन्ते च यदुक्तिभिः सचकितं वैदग्ध्यमुद्रात्मभि,-स्तदेवस्य रसायनं रसनिधेर्मन्ये मनोजन्मनः ॥ २ ॥

तं दृष्ट्वा सा पलायिष्ट । नृपोऽप्यन्वगाद् द्रुतं द्रुतम् । क्षणार्द्धेन सर्वाः सख्योऽदृश्याः समपत्सत[3] । सापि पातालविवरप्राये गर्त्ते एकस्मिन् प्रविष्टा । राज्ञापि ज्ञातम्–कामरूपिणी गमिष्यत्येवेति । तावत्करे धृत्वा तस्या वेणीदण्डो यमुनाजलप्रवाहप्रायः कृपाणिकया छिन्नः । गता सा मृगशावलोचना । वेणी करेऽस्थात् । तां वेणीं पश्यंस्तां चमत्कृतचकोरचलाचलाक्षीं स मुहुर्मुहुरस्मार्षीत् ।

२०९. †नेत्रेन्दीवरिणी मुखाम्बुरुहिनी भ्रूवल्लिकल्लोलिनी, बाहुद्वन्द्वमृणालिनी यदि पुनर्वापी भवेत् सा प्रिया ।
तल्लावण्यजलावगाहनजडैरङ्गैरनङ्गानल,-ज्वालाज्वालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥ ३ ॥

–इत्यादि । ततो हतप्रारम्भ उद्बाष्पः सखेदः पूःपरिसरमेत्य अमात्यानाहूयावादीत्–मया एवं एवं बालिकायाः कस्याश्चिद्वेणी छिन्ना । सा तु श्वभ्रमूलमगात् । अतो मम राज्येन न कार्यम् । इमामेव वेणीं राज्यं कारयत । तेऽपि तथेति प्रतिपद्य पूर्वबहिर्मण्डपे सोत्सवं वेणीं राज्यं कारयन्ति रामपादुकावत् ।

इतश्च सा वसुदत्तिका खिन्ना गत्वा स्वसौधेऽस्वाप्सीत् । तस्याः सख्यस्तत्कबरीं छिन्नामीक्षित्वा नामलदेवीमाकार्यादीदृशत् । जागरितां पुत्रीं नामलदेवी–वत्से ! किमेतत् तवापि परिभवपदमित्यप्राक्षीत् । तनयापि यथास्थितं मात्रे आख्यत् । सापि नागपतये स्वपतये । क्रुद्धः सद्योऽसौ तक्षकमाकार्य कथामुक्त्वा आदिक्षत्, यथा–गच्छ सराष्ट्रमुदयनं भस्मीकुरु । सोऽपि तदादेशादचालीत् । कौशाम्बीं प्रापत् । तत्परिसरे उत्सवान् दृष्ट्वा नररूपः कश्चित्पप्रच्छ–किमेतदुत्सवसाम्राज्यम् ? । तत्रत्येन जनेनोक्तम्–एवं एवं राज्ञा दिव्यकन्यावेणी छिन्ना । उत्पन्नानुतापेन राज्यं तदायत्तं कृतम् । अतो वेणी राज्ञीह । राज्ञाऽत्रैव, एकदेशे तपस्तप्यते । तक्षकेणोत्सवो दृष्टो । मध्ये भ्रमता राजाऽप्यालोकितः । कुशस्रस्तरगः पद्मासनी जपमालापाणिः तपःक्षामः जितप्राणायामः मौनी । पृष्ठश्च तक्षकेण नृरूपेण–कस्त्वम् ?, किमर्थं तपश्चरसि ? । तेनापि दीर्घमुष्णं च निःश्वस्य गदितम्–भो पुरुषविप्र ! किं पृच्छसि मां मन्दभाग्यम् ? । दृष्टा मयैका पुण्यवती मृगदृक् । तामनुसर्पता मया पातकिना यान्त्यास्तस्याः कबरीं कृपाणिकया निजपुण्यदशया सह कृत्ता । सा मनीषितं स्थानं ससर्प । अहं तु उदयनो राजा राज्यं तत्सात्कृत्वा स्वयं तपः कुर्वाणोऽस्मि । एवं श्रुत्वा क्षणं स्थित्वा, उपद्रवमकृत्वा, पातालं यात्वा नागेन्द्रमाललाप निष्पापप्रज्ञः–देव ! दृष्टो मया उदयनः, वेणीपुरश्च तथा राज्योत्सवः । स पुण्यात्मा मृदुमना बाढं परितप्यते । विनयी मानमर्हति । तच्छ्रवणाद् अतुषदाशीविषेन्द्रः । तर्हि किं युक्तमिति तक्षकमूचे ।

* कोष्ठकगतेयं पंक्तिः P पुस्तक एव लभ्यते । 1 P तु । 2 P स्वयं नु तनो । 3 A समपश्यत; BE
† P पुस्तके नोपलभ्यते पद्यमिदम् ।

तक्षको बभाषे-देव! स एव वसुदत्तिविवाहार्हः। कुलेन शीलेन विद्यया वृत्तेन पराक्रमेण रूपेण च किं वर्ण्यते सः।

२१०. *अमुमकृत यदङ्गनां न वेधाः, स खलु यशस्वितपस्विनां प्रभावः।
त्रिजगति कथमन्यथा कथापि, क्षततपसां तपसा पदं लभेत ॥ ४ ॥

5 विद्या-कन्या-लक्ष्म्यो हि कुस्थाने निवेशिता निवेशयितारं शपन्ति। नामलदेवीमतं [1]कनीमतं च लात्वा तक्षकेणैव वत्सराजमाजूहवत्। प्रवेशमहमचीकरत्। विवाहः प्रारब्धः। प्रथमायां दक्षिणायां सवत्सा गौः कामधेनुर्लब्धा। द्वितीयस्यां विशिष्टा नागवल्ली। तृतीयस्यां सोपधाना खट्वा सतूलीका। चतुर्थ्यां रत्नोद्योतो दीपः। एवं रत्नचतुष्केण सत्कृत्य सजायं जामातरं कौशाम्बीं पुरीं [2]प्रति प्रेषयत्। गतः स्वपुरं। तत्र ऋद्धं राज्यं भुनक्ति।

10 २११. *सुधाधौतं धाम व्ययभरसहश्चार्थनिवहः, सकामा वामाक्षी सुहृदपि निवेद्यात्महृदयः।
गुणानामन्वेष्टा प्रभुरपि च शास्त्रव्यसनिता, पुराऽऽचीर्णस्यैतत् फलमलघु तीव्रस्य तपसः ॥ ५ ॥

२१२. यदेतत्स्वच्छन्दं विहरणमकार्प्पण्यमशनं, सदार्यैः संवासः श्रुतमुपशमैकश्रमफलम्।
मनो मन्दस्पन्दं बहिरिति चिरस्यापि विरसन्, न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ६ ॥

क्रमेण स एव वासवदत्तां चण्डप्रद्योतपुत्रीं गुणक्रीतां[3] पर्यणैषीत्। †डाहलदेशाधिपपुत्रीं 15 पद्मावतीं च। पञ्चालदेशाधिपेनाक्रान्तं कौशाम्बीराज्यं मन्त्र-क्षात्राभ्यां पुनरग्रहीत्†।

§ १०५) इयं च कथा जैनानां न सम्मता, देवजातीयैर्नागैः सह मानवानां विवाहासम्भवतः। विनोदिसभाऽर्हेति नागमतादुद्धृत्यात्रोक्ता।

॥ इति उदयनप्रबन्धः समाप्तः ॥ १९ ॥

## २०. अथ लक्षणसेनस्य–मन्त्रिणः कुमारदेवस्य च प्रबन्धः।

20 § १०६) पूर्वस्यां लक्षणावती पूः। तत्र लक्षणसेनो नाम प्रतापी न्यायी नृपः। तस्य द्वितीयमिव जीवितं प्रज्ञाविक्रमभक्ति[1]सारो मन्त्री कुमारदेवः। विपुलं राज्यम्, अपारं सैन्यम्।

अत्रान्तरे वाराणस्यां गोविन्दचन्द्राख्यनृपपुत्रो जयन्तचन्द्रो राजा। तस्य विद्याधरो मन्त्री। महेच्छानां, अन्नदातॄणां, सत्यवादिनां च प्रथमः।

एकदा जयन्तचन्द्रसभायां वार्त्ता इयमासीत्–यल्लक्षणावतीदुर्गं दुर्ग्रहम्, राजा महाचमूस-25 मूहसम्पन्नः। तां वार्त्तामवधार्य काशीपतिः प्रतिज्ञां सभासमक्षमग्रहीत्–इतश्चलित्वाऽस्माभिर्ल-क्षणावतीदुर्गं ग्रहीतव्यम्। अथ न गृह्णामि तदा यावन्ति दिनानि दुर्गतटे तिष्ठामि, तावन्ति हेमलक्षाणि दण्डे गृह्णामि। अन्यथा न निवर्त्ते। इति सन्धां निर्माय प्रयाणढक्कामदापयत्। मिलितः समकालं राजलोकः। जाता गजमयीव सृष्टिः, भूपालमालामयीव भूमिः, अश्वमयमिव जगत्। निर्गतं सैन्यं बहिः। अखण्डितैः प्रयाणैर्भञ्जन् परबलानि,[4] शोषयन् सरांसि, पङ्कयन् 30 नदीः, समीकुर्वन् विषमाणि, चूर्णयन् शिखराणि, लेखयन् शासनानि, जीवयन् साधुलोकान्,

* एतच्चिह्नाङ्कित पद्यद्वयं नोपलभ्यते P पुस्तके। 1 P नास्ति। 2 A नास्ति 'पुरीं प्रति'। 3 P गुणकीर्तिं। † दण्डान्तर्गत. पाठ. P पुस्तके नास्ति। 4 P बलान्।

लक्षणावतीं प्राप्तः । दुर्गान्नातिदूरासन्ने भूभागे आवासान् दापयामास । लक्षणसेनस्तु द्वाराणि पिधाय पूर्मध्ये एव तस्थौ । [1]क्षुभिता पुरी । सङ्कीर्णत्वमापन्नमन्नपाथोघृततैलवसनताम्बूलदलीदलादि[2]वस्तूनाम् । स्थाने स्थाने वार्त्ता आर्त्ताः प्रवर्त्तन्ते–काशीपतिस्तु मुत्कलं परदेशं ग्रसते । सार्था एहिरेयाहिरां[3] कुर्वन्ति । सुभिक्षमक्षामम् । नव्यानि कूपादीनि खातानि[4] । विचरन्ति स्वैरं सैनिकाः । वर्द्धन्ते व्यवसायर्द्धयः[5] । लुट्यन्ते ग्रामाः । द्वयोर्नृपयोरूर्ध्वमुखैरधोमुखैः शरैर्युद्धानि । गतानि दिनान्यष्टादश । तस्मिन् दिने सायं लक्षणसेनेन कुमारदेवो मन्त्री[6] न्यगादि–मन्त्रिन् ! इदमस्माभिरनुचितमाचरितम् । यदयं रिपुर्देशं प्रविशन्नेव न प्रतिस्खलितः । अधुना दुर्गरोधे लोको दुःखी, मानग्लानिर्नः । तस्मात्प्रातर्योद्धव्यम् । दण्डं न ददामि । आहूय सामन्तामात्यादीन् । कुमारदेवः प्राह–देव ! युक्तमेवेदम् ।

२१३. मृगेन्द्रं वा मृगारिं वा द्वयं व्याहरतां जनः । तस्य द्वयमपि व्रीडा क्रीडादलितदन्तिनः ॥ १ ॥

त्वयि धृतायुधे वज्रायुधोऽपि कातर एव । तत्कालं मिलिताः प्रधानयोद्धाः । उक्तो युद्धाभिप्रायः । प्रीतास्ते पीतामृता इव । उक्तं[7] च–

२१४. *मित्रस्नेहभरैर्दिग्धो रूपितो रणरेणुभिः । खड्गधाराजलैः स्नातो धन्यस्यात्मा विशुद्ध्यति ॥ २ ॥

उत्तम्भिता नेत्र[8]वैजयन्त्यः । निष्पन्ना वीरकरम्बकाः । सम्पन्नानि पव्यादि[9]मुत्कलापनानि । एवं सति कुमारदेवो राजान्तिकाद् गृहं गत्वा मन्त्रयते स्म–

२१५. अस्माकं प्रभुर्युद्धार्थी जयन्तचन्द्रस्तु बली । अस्थाने बलमारम्भो निदानं क्षयसम्पदः ॥ ३ ॥

तस्मात् किं कर्त्तव्यम् ? । आः ! ज्ञातम्–जयन्तचन्द्रमन्त्री विद्याधरोऽनुसरणीयः । स हि प्रतिपन्नशूरः सकृपो निष्पापो दानी । इति विमृश्य पत्रीमेकां स्वलिखितां सहादाय प्राकारान्नगरस्रोतोद्वारेणैवैकाकी निर्गत्य मध्यरात्रे बहिःसैन्ये मन्त्रिगृहद्वारेऽस्थात् । तत्र द्वाःस्थैर्मध्ये मन्त्रिणं विद्याधरमात्मानमायातमजिज्ञपत् । सद्य आहूतस्तेन । आसितः स्वसमीपे, पृष्टश्च–के[10] भवन्तः ? । मन्त्रिणोक्तम्–अहं लक्षणसेनामात्यः कुमारदेवस्त्वां द्रष्टुमायासिषम् । किञ्चिद्वक्तव्यमस्ति । तत्तु वक्तुं न शक्यते । पत्री तु लिखिता वक्ष्यति[11] । इत्युक्त्वा विद्याधरहस्ते तामार्पिपत् । तत्र श्लोको दृष्टः–

२१६. उपकारसमर्थस्य तिष्ठन् कार्यातुरः पुरः । मूर्त्या यामार्त्तिमाचष्टे न तां कृपणया गिरा ॥ ४ ॥

अस्य श्लोकस्यार्थं चिरं परिभाव्य विद्याधरोऽचिन्तयत्–अयं महीयान् मदन्तिकमागतः । जयन्तचन्द्रापसारणमीहते । दण्डं च न दित्सते । मय्येव भारमारोपयति । तस्मान्निस्तार्योऽसौ व्यसनसागरात् ।

२१७. स एव पुरुषो लोके स एव श्लाघ्यतामिह । निर्भयं सर्वभूतानि यस्मिन् विश्रम्य शेरते ॥ ५ ॥

इति ध्यात्वा कुमारदेवं जगाद–मा भैः । दण्डं मा दाः । प्रातरत्रास्मत्सैन्यं न स्थास्यत्येव, गच्छ । इत्युक्त्वा कुमारदेवं सत्कृत्य व्यसाक्षीत् । गतः स्वस्वामिलक्षणसेनसविधम्[12] ।

1 A क्षुभ्राति । 2 P ताम्बूलादि० । 3 P ०याहिरे । 4 P खनितानि । 5 P व्यवसायाद् ऋद्धयः । 6 ABD नास्ति 'मन्त्री' । 7 P नास्ति; C ऊचुश्च । * नोपलभ्यत इदं पद्यं P पुस्तके । 8 P तत्र वैजयन्त्यः । 9 P पव्या मुत्कला० । 10 P किं । 11 A वक्ष्यते । 12 P पुस्तके 'गतः स स्वस्थाने' इत्येव ।

इतश्च विद्याधरो जयन्तचन्द्रान्तिकं गत्वा विज्ञप्तवान्–राजेन्द्र! अद्य देवस्यात्रागतस्य दिनाष्टादशकं गतम्। कुमारदेवेन स्वयमेत्य ममाष्टादश हेमलक्षाणि प्रवेशितानि। अतोऽभयं देहि। प्रसीद, स्वस्थानं गच्छ। काश्यामपि मुक्तायां निर्वाहो नास्ति, दुर्ग्रहं च दुर्गम्। इति श्रुत्वा काशीन्द्रः सद्यो रात्रावेव चलितः। दशक्रोशीं गत्वा स्थितः। स्वनगर्यभिमुखीभिः पटकुटीभिः। लक्षणावतीलोको विस्मितो हृष्टश्च। लक्षणसेनेन कुमारदेवः पृष्टः–किमिति गतो जयन्तचन्द्रः?। मन्त्रिणोक्तम्–देव! त्वां युद्धोद्यतं श्रुत्वा काशीन्द्रः सुभीतः प्राणत्राणार्थं गतः। †अन्यैव तव पिण्डशक्तिः।

२१८. गतिरन्या गजेन्द्रस्य, गतिरन्या खरोष्ट्रयोः। गतिरन्यैव सिंहस्य लीलादलितदन्तिनः॥ ६॥

२१९. कः सिंहस्य चपेटपाटितमहामातङ्गकुम्भस्थल,-स्थूलास्थिस्थपुटीभवत्परिसरां लीलागुहां गाहते।
कः काकोदरभर्तुरुद्धतविषज्वालावलीडस्फुरत्,-फूत्कारावलिघोरमास्यकुहरं साडम्बरश्चुम्बति॥ ७॥

अथ चापल्याड्ढौकते कश्चित् तयोः तथापि क्षेमः कुतः। अतः स्वकीयमन्तुक्षमणोपायोऽयं तस्य†। काश्यधिपोऽपि काश्यासन्नं गतः सन् विद्याधरमादिशत्–लक्षणावतीशदण्डधनं चतुर्दिग्मिलितेभ्योऽर्थिभ्यो देहि। येन यशांसि प्रैधन्ते। विद्याधरोऽपि स्वामिनं निगदति स्म[1]–देव! कुमारदेवेन मह्यं रत्नमेकं दण्डपदे दत्तमस्ति। तेन सद्यः कथं हेम निष्पद्यते?। राजोचे–तर्हि रत्नं दर्शय। अथ तेन पत्रीगतः श्लोकोऽदर्शि, कुमारदेवागमनवृत्तान्तश्च प्रोक्तः। विद्याधरमुखात्त तदवधार्य जयन्तचन्द्रो जजल्प अनल्पधीः–मन्त्रिन्! तदैव किं नेयं पत्री दर्शिता, येन तेभ्यो विशिष्टां कृपां कुर्मस्तदैव। त्वया स्वधनार्पणाङ्गीकारेणैव वयं तत उत्थापिताः। प्रापितो दण्डोऽसभ्यं किल, तेन हेमाष्टादशलक्षाणि कोशादाकृष्यार्थिभ्यो देहि। अष्टादशहेमलक्षास्तु कृपाप्रसादपदे लक्षणसेनाय, अष्टौ हेमलक्षाः कुमारदेवाय प्रेषय। तथैव कृतं विद्याधरेण। प्रविष्टौ काशीं तौ। स्फीतं राज्यं भुङ्क्तः। षड्विंशतिहेमलक्षेषु तत्र गतेषु लक्षणसेनेन कुमारदेवः पृष्टः–किमिदम्?। कुमारः स्मितपूर्वकमाचष्ट– त्वां विरोध्य कः सुखी तिष्ठेत्। [2]ततोऽरिणा दण्डस्तेऽर्पितः। पिप्रिये पृथ्वीपतिः, मुमुदे[3] प्रजा, ववृते महोत्सवः। एवं मन्त्रिणः कालज्ञाः सुगूढाशयाः लोक-भूपयोः[4] कार्यं कुर्युरिति॥

॥ इति लक्षणसेन-कुमारदेवप्रबन्धः समाप्तः॥ २०॥



## २१. अथ मदनवर्मप्रबन्धः।

§ १०७) चौलुक्यवंश्यो मूलराज–चामुण्डराज–दुर्लभराज–भीमान्वये कर्णदेवजन्मा मयणल्लादेविकुक्षिभूर्द्वादशो रुद्र इति विदितविरुदः श्रीजयसिंहदेवनामा महीपतिरभूत्। स अणहिल्लपत्तनान्निर्गत्यामितैः सैन्यैर्मालवदेशराजधानीं धारां द्वादशभिर्वर्षैर्जग्राह। प्रतोलीत्रयं स्फोटयित्वा यशःपटहकुञ्जरेण लौहीमर्गलामन्वभञ्जत्। साऽद्यापि देवपत्तने श्रीसोमनाथाग्रे दृश्यते। यशःपटहो मृत्वा व्यन्तरोऽभूत्। जयसिंहो मध्ये परपुरं[5] प्रविष्टो नरवर्माणं ‡मालवेन्द्रं जीवग्राहमग्रहीत्।

† दण्डान्तर्गत पाठो नास्ति P पुस्तके। 1 P स्माह। 2 A तेन। 3 A मुमुदुः प्रजा। 4 A नास्ति पदमेतत्। 5 A मध्ये पुरं। ‡ पुष्पदण्डान्तर्गता पंक्तिः पतिता P पुस्तके।

द्वादशवर्षाणि जयसिंहस्य खड्गो निष्प्रत्याकारोऽस्थात्, नरवर्मचर्मघटितमेव प्रत्याकारं करोमीति प्रतिज्ञावशात्। अत एव हस्त्यारूढं नरवर्माणं भूमौ पातयामास। वितस्तिमात्रं चर्म्माहिसत्कमुदतीतरत्। अत्रान्तरे प्रधानैर्विज्ञप्तम्–राजन्! राजाऽवध्य एवेति नीतिवचः। तस्मान्मोक्तुमर्होऽयम्। ततो मुक्तः सः। मुक्त्वा[1] काष्ठपञ्जरे क्षिप्तः। नरवर्मचर्माऽन्यचर्मभ्यां सिद्धराजेन निजकृपाणे प्रत्याकारः कारितः। ततः कवीश्वरैर्विविधं स्तूयते सः– 5

२२०. एकधारापतिस्तेऽद्य[2] द्विधारेणासिना जितः। किं चित्रं यदसौ जेतुं शतधारमपि क्षमः॥ १॥

२२१. *क्षुण्णाः क्षोणिभृतामनेन कटका भग्नाऽस्य धारा ततः, कुण्ठः सिद्धपतेः कृपाण इति रे मा मंसत क्षत्रियाः। आरूढप्रबलप्रतापदहनः सम्प्राप्तधारश्चिरात्, पीत्वा मालवयोपिदश्रुसलिलं हन्तायमेधिष्यते॥ २॥

§१०८) ततो दक्षिणापथे महाराष्ट्र-तिलङ्ग-कर्णाट-पाण्ड्यादिराष्ट्राण्यसाधयत्। अनन्तं धनं सङ्घटितम्। ततो गूर्जरधरां प्रति व्याघुटत्। यावद्देशसीमसन्धौ सैन्यनिवेशं कृत्वा स्थितस्तावत् 10 सायम्, एकदा महर्द्ध्या सभायामुपविष्टोऽस्ति प्रत्यक्ष इव सुरपरिवृढः। तावत्कश्चिद्वैदेशिको भट्ट एत्याशीर्वादं भणित्वा सभां दृष्ट्वाऽवददिदं यथा–अहो! परमारवंशधूमकेतोः श्रीसिद्धराजस्य सभा मदनवर्मण इव मनोविस्मयजननी!। तदाकर्ण्य सिद्धेन्द्रस्तमेव भट्टं[3] पुर उपवेश्य पप्रच्छ–भट्ट! कोऽसौ मदनवर्मा?, क्व नगरे राज्यं करोति?। भट्टः प्राह–देव! पूर्वस्यां महोबकं नाम पत्तनं स्फारम्। तत्र मदनवर्मा नाम पृथ्वीपालः प्राज्ञस्त्यागी भोगी धर्मी नयी नल इव, पुरूरवा[4] इव, वत्सराज इव, पुनरवतीर्णः पृथिव्याम्। तं राजानं तच्च पुरं यः खलु नित्यं पश्यति 15 सोऽपि वर्णयितुं न पारयति। केवलं पश्यन्नन्तर्मनसं मूक इव स्वादं तद्गुणं जानाति। अस्माकं वचसि प्रायो लोकस्य विश्वासो नास्ति वावदूकत्वात्। परं प्रेषय कञ्चित्परमाप्तं निजं मन्त्रिणं ज्ञम्, येन स तामृद्धिं दृष्ट्वाऽत्रागत्य देवपादेभ्यो निवेदयति। एवं भाट्टीं वाचमवधार्य सिद्धराजो मन्त्रिणमेकं कतिपयजनयुतं द्रष्टुं तत्र तेनैव भट्टेन सह प्राहैषीत्। गतौ तौ भट्ट-मन्त्रिणौ महोबकपत्तनम्। दर्शितं पत्तनं भट्टेन। मन्त्रिणा दृष्ट्वा निर्विलम्बमुपराजमेत्य यथास्थितमभाणीत्–अवधारय स्वामिन्! गतस्तत्राहम्, दर्शितं भट्टेन तत्पत्तनम्। [5]तदा वसन्तमासोत्सवस्तत्र प्रवर्त्तते। गीयन्ते वसन्तान्दोलकादिरागैर्गीतानि। भ्रमन्ति दिव्यशृङ्गारा नार्यः। मकरध्वजलक्षभ्रान्तिमुत्पादयन्तो विलसन्ति युवानः। क्रियन्ते प्रतिरथ्यं छण्टनानि यक्षकर्दमैः। प्रासादे प्रासादे सङ्गीतकानि। देवे देवे महापूजा। भोजनवाराः साराः प्रतिसदनम्। राजकीयसत्राकारे 25 तु दालिकूरावस्रावणानि मुत्कलानि न मुच्यन्ते किन्तु गर्त्तायां नियन्त्र्यन्ते, तदा सघण्टो हस्ती निमज्जति। राजाश्ववाराः परितः पुरं भ्रमन्तो वीटकानि ददते लोकाय। कर्पूरैर्धूलिपर्वोदयः। रात्रौ विपणीन् वणिजो न संवृणन्ति; उद्घाटान् विमुञ्चन्ति[6]। प्रातरागत्योपविशन्ति। एवं नीतिः। व्यवसायोऽप्याचारमात्रेणैव [*तत्र देशे लोहखानिवत्सुवर्णरूप्यखानीर्वहन्ति तेन सर्वः कोऽपि] सिद्धार्थत्वात्। राजा तु कीदृगप्यास्ते, मया स न दृष्टः। इदं [7]तु श्रुतम्–स नारीकुञ्जरः सभायां 30 कदापि नोपविशति। केवलं हसितललितानि तनोति[8]। प्रत्यक्ष इन्द्रः।

---

1 नास्ति P 'मुक्त्वा'। 2 A तेन। * एतत्पद्यं नास्ति P पुस्तके। 3 P पुस्तके सर्वत्र 'भट्ट' शब्दस्थाने 'भद्र' शब्दो लभ्यते। 4 P पुरुरोत्तम। 5 AB प्राप्तस्तदा। 6 A विमुञ्चन्ते। * कोष्ठकगतः पाठः P पुस्तके प्रक्षिप्तप्राय एव। 7 P 'तु' नास्ति। 8 P नेति।

एवं वचः श्रुत्वा सिद्धराजः सैन्यरक्षायां सैन्यं नियुज्य महता[1] सैन्येन महोबकं प्रति प्रतस्थे। [क्रमेण गच्छन्[2]] तस्थौ तदासन्ने भूप्रदेशे क्रोशाष्टकेन। क्षुभितो देशः। स्थानाच्चलितं महोबकम्। प्रधानैर्मदनवर्मा दिव्योद्यानस्थः स्त्रीसहस्रसमावृत एत्योचे–स्वामिन्! सिद्धराजो गौर्जर उपनगरमागतोऽस्ति, स कथं पश्चान्निवर्त्तनीयः?। मदनवर्मणा स्मित्वा भणितम्–सिद्धराजः!; सोऽयं धारायां[3] द्वादश वर्षाणि विग्रहाय अस्थात्। स कबाडी राजा वाच्यो भवद्भिः–यदि नः पुरं भुवं च जिघृक्षसि, तदा[4] युद्धं करिष्यामः। अथार्थेन तृप्यसि[5] तदाऽर्थं गृहाणेति। ततो यद्याचते स वराकस्तद्देयं भवद्भिः। न वयं धने दत्ते त्रुट्यामः। सोऽपि जीवतु चिरम्, यो वित्तार्थं कृच्छ्राणि[6] कर्माणि कुर्वाणोऽस्ति। राज्ञो वचोऽनुगृहीत्वा मन्त्रिणः पुरमगुः[7]। †तावता सिद्धेशेन कथापितम्–दण्डं दत्त†। मन्त्रिभी राजवाक्यं दूतमुखेन भाणितम्–यदि अर्थमीहसे तदाऽर्थं लाहि, भूमिं चेत्तर्हि युध्यामहे वयम्। मदनवर्मदेवाय ज्ञापितमत्र भवदागमनम्। तेन अस्मत्प्रभुणा उक्तम्–कबाडी राजाऽर्थेन तर्पणीयः सः। सिद्धराजस्तल्लीलया विस्मितः षण्णवतिं कोटीः कनकस्यायाचीत्। दत्तास्ताः प्रधानैः सद्यः। देशं सुखं तस्थौ। तथापि पश्चान्न याति[8]। तदा प्रधानैर्भाणितम्–राजन्! अर्थो लब्धस्त्वया; कथमथ न प्रतिगच्छसि?। सिद्धेशेन भाणितम्[9]–मन्त्रिपुरुहूता[10]! तं लीलानिधिं भवत्प्रभुं दिदृक्षे[11]। तेऽप्येत्य मदनवर्माणमभणन्–अर्थेन तोषितः स क्लेशी राजा; परं भणति राजेन्द्रं द्रष्टुमीहे। ततो मदनवर्मणा निगदितम्–तर्हि एतु सः।[12]ततः सैन्यं तथास्थमेव मुक्त्वा मितसैन्यस्तत्रोद्याने आगतः सिद्धराजः[13], यत्र महाप्राकारस्थे सौधे मदनवर्माऽस्ति। प्राकाराद्बहिर्योधलक्षास्तिष्ठन्ति। प्रतोलीं यावदागत्य मध्येऽचीकथद् द्वाःस्थैः–[14]आगम्यतामस्माभिः?। महोबकप्रभुणा भाणितम्–जनचतुष्केण सहागच्छत। आगतो मध्ये सिद्धराजः। यावत्पश्यति काञ्चनतोरणानि सप्तप्रवेशद्वाराणि। अग्रे[15] ददर्श रजतमहारजत[16]मयीर्वापीः। नानादेशवेश[17]भाषाविचक्षणाः शशाङ्कमुखीर्विशालनितम्बस्थलास्तारुण्यपुण्यावयवाः स्त्रीः। पणव-वेणु-वीणा-मृदङ्गादिकलासक्तं परिजनजनम्। स्फीतानि गीतानि शुश्राव। नन्दनोद्यानाधिकमुद्यानम्, हिमगृहाणि, हंससारसादीन् खगान्, उपकरणानि हैमानि, कदलीदलकोमलानि वसनानि, जनितानङ्गरागान् उत्तुङ्गान् पुष्पकरण्डांश्चैक्षत। एवं पश्यन् पश्यन्, पुरः पुरो गच्छन्, साक्षादिव मदनं मधुरे वयसि वर्त्तमानं मितमुक्ताफलप्रायभूषणं सर्वाङ्गलक्षणं काञ्चनप्रभं मधुरस्वरं तामरसाक्षं तुङ्गघोणं[18] उपचितगात्रं मदनवर्माणमपश्यत्। मदनवर्माऽप्यभ्येत्याश्लिष्य[19] हेमासनं दत्त्वा तमभाणीत्–सिद्धेन्द्र! पुण्यमद्यास्माकं येन त्वमतिथिः सम्पन्नोऽसि। सिद्धराजः प्राह–राजन्! आवर्जनावचनमिदं मिथ्या। यत्तु त्वन्मन्त्रिणामग्रे कबाडी इत्युक्तं तत्सत्यम्। मदनवर्मा जहास। सिद्धेश! केन वो विज्ञसमिदम्?। सिद्धेशः प्राह–तैरेव मन्त्रिभिस्तावकैः। कोऽभिप्रायो मन्निन्दाभणने देवस्य?। मदनवर्मा आह[20]–देव! कलिरयम्, अल्पं जीवितम्, मिता राज्यश्रीः, तुच्छं बलम्, तत्रापि पुण्यैः स्फीतं राज्यं

---

1 P सिद्धराजो महता सैन्येन। 2 P पुस्तक एवेदं दृश्यते। 3 P यद्धारायां। 4 P तर्हि। 5 P तृप्यति। 6 P कृच्छ्रकर्माणि। 7 P परचक्रमगु.। † एषा पंक्ति. पतिता P पुस्तके। 8 ABD आदर्शे न दृश्यते वाक्यमिदम्। 9 A सिद्धसेनेन भणितं। 10 P मन्त्रिपुरः। 11 P दर्शयथ। 12 P नास्ति 'ततः'। 13 A नास्ति। 14 P आगतं। 15 A नास्ति 'अग्रे'। 16 P नास्ति 'महारजत'। 17 P 'वेश' नास्ति। 18 P तुङ्गाघ्राणं। 19 P ०आश्लिष्टे। 20 A अवदत्।

लभ्यते, तदपि चेन् न भुज्यते, रुल्यते विदेशेषु, तत्कथं न [1]कर्वाडिकत्वम् । सिद्धेशेनोक्तम्– सत्यम्, एतादृशः कर्वाटिक एवाहम् । [2]त्वमेव सत्यं धन्यो यस्येत्थं शर्माणि । त्वयि दृष्टेऽस्माकं जीवितं सफलम् । चिरं राज्यं भुङ्क्ष्व । इत्युक्त्वा तस्थौ । मदनवर्मणोत्थाय निजं परिजन-कोश-देवतावसरादि सर्वं दर्शितम् । प्रेमाऽवृधत् । विंशत्युत्तरं पात्रशतं स्वाङ्गसेवकं सिद्धराजाय व्यतरत्[3] । तेन प्रीतो[4] जयसिंहदेवः सैन्यं गृहीत्वा धरां[5] जित्वा पत्तनं अणहिल्लपुरं प्रविष्टः । तेषां १२० मध्यादर्द्धं पथि मृतं मार्द्दवात्, शेषं पत्तने प्रविष्टम् । पत्तनप्रवेशोत्सवे श्रीपालकवेः सिद्धराजोपश्लोकनकाव्यम्[6]–

२२२. ‡हे विश्वत्रयसूत्रधार ! भगवन् ! कोऽयं प्रमादस्तव, न्यस्यैकत्र निवेश यस्य परतस्तान्येव वस्तूनि यत् ।
पाणिः पश्य स एष यः किल बलेर्वाक् सैव पार्थस्य या, चारित्रं च तदत्र यद् रघुपतेश्चौलुक्यचन्द्रे नृपे ॥३॥

पुनः–

२२३. मानं मुञ्च सरस्वति ! त्रिपथगे ! सौभाग्यभङ्गीं त्यज, रे कालिन्दि ! तवाऽफला कुटिलता रेवे ! रयस्त्यज्यताम् ।
श्रीसिद्धेशकृपाणपाटितरिपुस्कन्धोच्छलच्छोणित,-स्रोतोजातनदीनवीनवनितारक्तोऽम्बुधिर्वर्तते ॥ ४ ॥

एवमन्यैरपि [7]कविभिर्भणितानि ॥

॥ इति मदनवर्मप्रबन्धः ॥ २१ ॥

## २२. अथ रत्नश्रावकप्रबन्धः ।

§१०९) उत्तरस्यां दिशि काश्मीरेषु[8] नवहुल्लं नाम महर्द्धिमत्पत्तनम् । तत्र विक्रमाक्रान्तभूचक्रो नवहंसो नाम भूपालः । तस्य राज्ञी रूपश्रीहसितरम्भा[9] विजया[10]देवीनाम्नी । तत्रैव पत्तने पूर्णचन्द्रः श्रेष्ठिराजोऽभूत् । तन्नन्दनास्त्रयः–रत्नः, मदनः, पूर्णसिंहश्च । त्रयोऽपि जैनाः श्रीमन्तः प्रियंवदाः सात्त्विकाः प्राज्ञाः राजपूज्याः प्रारम्भसिद्धाः । रत्नस्य पत्नी पउमिणिरिति ख्याता । पुत्रस्तु कोमल इति नाम बालो वर्त्तते । तदा श्रीनेमिनाथनिर्वाणादष्टसहस्री वर्षाणां व्यतीताऽस्ति । अस्मिन्नवसरेऽतिशयज्ञानी पट्टमहादेव[11]नामा नवहुल्लपत्तनपरिसरे समवासार्षीत् । देवैर्भूमिः शोधिता । उदकैश्छण्टिता । कनकपद्मं मण्डितम् । तत्र पट्टमहादेव उपविष्टः । मध्ये नगरस्य तदागमनं ज्ञापितमुद्यानपालेन[12] लोकाय नृपाय च । प्रथममागतो नृपः सान्तःपुरपरिच्छदः, सरत्न-मदन-पूर्णसिंहः । अपरोऽपि लोकस्तथैव । श्रेष्ठिनी पउमिणिरपि सपुत्रा [13]तत्रागता । एवं सभायां देव-दानव-मानव-विद्याधरादिवृन्दसुन्दरायां[14] गुरुर्देशनां प्रारेभे–

२२४. यास्यामीति जिनालये स लभते ध्यायंश्चतुर्थं फलं, षष्ठं चोत्थितुमुद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो[15] द्वादशं, मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥ १ ॥

---

1 A कर्वाटिकत्वं । 2 P त्वमेवायं । 3 AD वितेनिरे । 4 A ततो । 5 P धरामध्ये भूत्वा, A धरांचित्वा । 6 P श्रीपालकविना सिद्धराजो वर्णितः । ‡ P पुस्तके नास्तिपद्यमिदम् । 7 P विहाय नास्त्यन्यत्र 'कविभिः' । 8 P काश्मीरेषु देशेषु । 9 P ०रम्भागर्वा, A ०रम्भागर्वारम्भा । 10 B विजयदेवी । 11 BE ०महादेविनामा । 12 AE ०पालैः । 13 ABD तत्र सपुत्रा । 14 P ०मानवसुन्दरायां । 15 D तदा ।

२२५. सयं पमज्जणे पुन्नं सहस्सं च विलेवणे । सयसाहस्सिया माला अणंतं गीअवाइअं ॥ २ ॥
२२६. पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो[1] जपः । जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥ ३ ॥

इदं सामान्यतः सर्वजिनसेवाफलम् । शत्रुञ्जये तु सविशेषं तदेव, असंख्यानां यतीनां सिद्धत्वेन सिद्धक्षेत्रत्वात् ।

5 २२७. धूवे पक्खोवासो मासक्खवणं च कप्पूरधूवम्मि । कत्तिअमासक्खवणं साहूपडिलाभिए लहइ ॥ ४ ॥

इति वचनात् । शत्रुञ्जयादपि रैवतसेवा महाफला । रैवतो हि शत्रुञ्जयैकदेशत्वात् शत्रुञ्जय एव,[2] श्रीनेमिकल्याणकत्रयभावादतिशायितमप्रभावश्च । नेमिनाथस्य माहात्म्यं मिथ्यादृशोऽपि प्रभासपुराणे एवं प्रवदन्तः श्रूयन्ते–

२२८. पद्मासनसमासीनः श्याममूर्त्तिर्दिगम्बरः । नेमिनाथः शिवेत्याख्यो नाम चक्रेऽस्य वामनः ॥ ५ ॥

10 वामनावतारे हि वामनेन रैवते नेमिनाथाऽग्रे बलिबन्धसामर्थ्यार्थं तपस्तेपे इति तत्र कथा ।

२२९. कलिकाले महाघोरे सर्वकल्मषनाशनः । दर्शनात्स्पर्शनाद्देवि[3] कोटियज्ञफलप्रदः ॥ ६ ॥

ईश्वरोक्तमिदं प्रभासपुराण एव[4] । तस्माद्येन नेमिनाथो वन्दितो रैवतगिरिमारुह्य तेन किल परमपदं श्रद्धालुना गृहीतमेवेति तत्त्वम् । इत्येतां देशनां श्रुत्वा रत्नः श्रावक उत्थाय गुरोरग्रे प्रतिज्ञां चक्रे–मया ससङ्घेन यदा रैवतगिरौ[5] नेमिः[6] प्रणतो भविष्यति, तदा द्वितीया विकृति-15 र्ग्रहीतव्या । तदैव एकभक्तं [7]मोक्तव्यम् । तावन्तं च कालं यावद् ध्रुवं[8] भूमिशय्या-ब्रह्मचर्ये धार्ये । वरं प्राणांस्त्यजामि परं नेमिनाथं नमाम्येवेति । ततः स्वगृहमायातो राजा लोकश्च । रत्नश्रावकोपरोधात् पट्टमहादेवस्तत्रास्थात् । रत्नस्तूपायनं दत्त्वा राजानमूचे–राजन् ! मां नेमियात्रायै[9] रैवतगमनाय विसृज । राज्ञोक्तम्–स्वैरं धर्मः समाचर्यताम् । अस्माकं मतमेतत् । यद्विलोक्यते तद् गृहाण । रत्नो जहर्ष । सङ्घममेलयत् । गज-रथ-तुरग-पदातिरूपं महत्तमं सैन्यं नृपाल्लेभे । यस्य 20 यन्न्यूनं तस्य तत्पूरयामास । अमारि–चैत्यपरिपाटी–शान्तिक–भोजनवारा–प्रतिलाभना–बन्दिमोक्ष–लोकसत्कारांश्चकार । गणितं मुहूर्त्तम् । चलितो देवालयः । राजा महोत्सवकरः परमः सखा । करभशतैर्धनानि चेलुः । श्रेष्ठिनी पउमिणिर्नृपपत्नीं विजयादेवीं बालवयस्यां भेटयितुं जग्मुषी, पादयोस्तस्याः पेतुषी, आपप्रच्छे–स्वामिनि ! यात्रायै यान्त्यस्मि । भवद्वियोगदुःखं दिनकतिपयानि धर्मलोभतः सोढुमीहेऽहम् । राज्ञी अपि [10]साश्रमूचे–सखि ! तत्र गता धनकृशतया[11] 25 कार्प्पण्यं कृत्वा मां लज्जापात्रं मा कृथाः । स्वैरं ददीथाः । अमूनि धनानि[12] भूषणानि वसनानि च [13]गृहाण । इत्युक्त्वा भूरि ददे । पदानि कतिपयानि सम्प्रैषयत् । निवृत्ता राज्ञी । श्रेष्ठिनी सङ्घमध्यमध्यास्त । श्रीपट्टमहादेवो गुरुः सह व्यवहरत् । तेन सनाथः सङ्घः । नित्यं धनस्य स्वैरं व्ययः । कोटीश्वराः साधर्मिकाः परःसहस्राः । चन्द्रहासव्रणाङ्का भटाः शतसहस्राः । तेन[14] क भीः । एवं पथि तीर्थानि वन्दमानो रत्नः सङ्घपतिर्बान्धवद्वययुतः सपुत्रः सपत्नीकस्तावद् ययौ, 30 यावद् रोला-नोलाख्यौ द्वौ पर्वतौ स्तः । तत्र प्राप्तः । इह किल शत्रुञ्जयमध्ये भूत्वा रैवतं गच्छतां

---

1 A कोटिगुणो । 2 ABE नास्ति 'एव' । 3 D ०देव । 4 P एवम् । 5 PBD रैवते । 6 A नेमिनाथः । 7 P भोक्तव्यम् । 8 A वर्यं । 9 A नेमिनाथयात्रायै; B यात्रायै । 10 P शास्तु० । 11 P धनकृच्छ्रतया । 12 ABE धनान्यतिधनानि । 13 P यथेच्छं । 14 AB नास्ति 'तेन' ।

लोकानां रोला-तोलौ गिरी न स्तः। [1]परं भद्रेश्वरपथेन गच्छतां स्तः। तत्र रोला-तोलयोरद्र्योर्मुखे मिलित्वा तोडकद्वयमिव जातमास्ते। तत्र परिसरे सङ्घ आवासितः। दिनं सर्वं स्नात्र-चैत्यवन्दना-नादपूजा-भोजनादीनि स्वैरं ववृतिरे। रात्रौ सुखं स्थितम्। प्रातः पुरो गमनाय सन्नह्याचलत्सङ्घः। यावदग्रयानं गिरिमुखसङ्कटपथेन चलितुं प्रवृत्तम्, तावता कश्चिदेको मषीश्यामो व्यात्तवक्त्रो नरसिंहवपुरट्टहासी बहुगव्यूतोच्चो दंष्ट्राकरालास्यो नखरैर्लोकं दारयितुं प्रववृते। 5
भक्षयामि भक्षयामि च ऊचे। तद् [2]दृष्ट्वा भीतो लोकः पश्चान्निवृत्य गच्छति। तद्राजपुत्रैर्ज्ञातम्। तैर्गत्वा स कालरूपः प्रबभाषे-कस्त्वम्?; कथं जनमुपद्रवसि?। देवो वा दैत्यो वा राक्षसो वा येन तन्नाम्ना[3] पूजयामः। स कालमूर्त्तिर्वदति-किं रे! बाढं वदथ। यदि पुरः पदमेकं व्रजिष्यथ, तदा सर्वान् एकैकशश्चर्विष्याम्येव। इति गदति सति तस्मिन् सङ्घरक्षपालैर्भटैर्व्याघुट्य रत्नो विज्ञप्तः-देव! एवमेवं वृत्तान्तः। पुरो गन्तुं न लभ्यते[4]। एतद्[5]दंष्ट्राचर्विता लोकाः पुरः 10
[6]प्रेक्ष्यन्ताम्। तदाकर्ण्य कर्णकटुकं विषण्णो रत्नः। क उपायः?, का गतिः?, का मतिः?-इति कलकलितः सङ्घः। विशेषतः स्त्रीजनः। स्थाने स्थाने वृन्दशो वार्त्ताः। केचिद्वदन्ति-पश्चान्निवृत्य गम्यते। अयं सर्वं भक्षयिष्यत्येव। 'जीवन्नरो भद्रशतानि पश्यति'। अपरे त्वाहुः-म्रियते चेद् म्रियताम्। गम्यते पुरः, नेमिरेव शरणम्। केचिद् द्रुमलतान्तरितास्तस्थुः। अन्ये ज्योतिषमपश्यन्। इतरे सङ्घप्रस्थानमुहूर्त्तदातारमनिन्दिषुः। इत्येवं विषमे वर्त्तमाने सङ्घपतिरत्नेन 15
भटाः प्रभाषिताः-गत्वा पृच्छत तं घोरं नरम्, त्वं कथं प्रसीदसि?, येन तत्कुर्मः, पुरो व्रजामः। गता भटाः। भाषितं रत्नवचनं तदग्रे। तेनोक्तम्-अहमेतस्या गिरिभुवोऽधिष्ठाता। एकं सङ्घप्रधानमानुषं भक्षयामि, ततस्तृप्यामि, अन्येषां नोपद्रवामि, प्रतिज्ञां च न लङ्घे। ते भटास्तत्सम्यग्निर्णीय[7] तदालापं रत्नाय ऊचुः। रत्नेनैकत्रोपवेशिताः सर्वे लोकाः। तथा सनद्धा एव भणिताश्च ते लोकाः-पुण्यं मे महद्, येनासौ कोऽपि घोरपुरुष एकं मानुषं जिघत्सति[8]। तद्भ- 20
क्षणात् तृप्तश्चेच्छेषं न भक्षयति। तस्माद् यूयं यात, नेमिं वन्दध्वम्। मयाऽस्मै [9]स्वाङ्गं देयम्। अहो! लाभोदयः। इयत्कालं विविधयत्नपालितं देहं सङ्घार्थे उपकृतम्। एवमुक्त्वा तूष्णीके सङ्घेशे, राजपुत्राः प्रभणन्ति-नररत्न रत्न! त्वं चिरं जीव। अस्माकं [10]एकतरेण स भ्रायतु। वयं हि सेवकाः। सेवकानां च धर्मोऽयम्-मृत्वाऽपि प्रभुरुद्धरणीयः। अन्यथा धर्मयशोवृत्तिक्षयात्।

२३०. ते मुग्गडा हराविया जे[11] परिविट्ठा[12] ताहं। अवरुप्परजोयंतयहं[13] सामिउ गंजिउ जाहं ॥ ७ ॥ 25

सङ्घप्रधानसाधर्मिका ऊचुः-[14]रत्नदेव! त्वं चिरं जीव। युवाऽसि, राजपूज्योऽसि, सहस्रलक्षजन[15]पोषकोऽसि; वयं विनश्वरकलेवरव्ययेन स्थिरं धर्म्मं जिघृक्षामहे।

२३१. जइ उट्ठंभइ[16] तो कुहइ, अह डज्झइ तउ छारु[17]। एयह दुट्ठकलेवरह जं वाहियइ[18] तं सारु ॥ ८ ॥

२३२. *सा सुकंतइं जगु मरइ ते वीरडी म सुक्क। इक्कु मरंतइं सु मरइ वरिसउ मरउ म इक्क ॥ ९ ॥

भदन-पूर्णसिंहौ[19] जगदतुः-आवयोस्त्वं ज्येष्ठो भ्राता पिता यथा। पितुरायत्तश्च पुत्रप्रायो 30
लघुभ्राता। किं रामाग्रे युद्धा लक्ष्मणेन न प्राणास्तृणीकृताः?।

---

1 P पुस्तक एव 'पर' दृश्यते। 2 P विहाय नास्त्यन्यत्र 'तद् दृष्ट्वा'। 3 P पुस्तक एवेदं पदं लभ्यते। 4 P लभ्यतेऽभाग्यात्। 5 P एवं तद्। 6 P पुर. पतिताः। 7 P विहाय नोपलभ्यतेऽन्यत्र पदमिदम्। 8 P जिघृक्षति। 9 P स्थानं। 10 P अस्माकं मध्ये। 11 P ये। 12 A परिवुट्ठा, P परिविद्धा। 13 P अवरप्परजोयंतह। 14 P हे रत्न। 15 'जन, नास्ति A B। 16 A उब्भट्टइ; P रक्खिज्जइ। 17 P छारं। 18 A वाहिए, P वाहियइ। *A आदर्शे एवेदं पद्यं लभ्यते। 19 P ०सिंहभ्रातरौ।

२३३. स्नेहो न ज्ञायते देव ! प्रणामात्र मृदूक्तितः । ज्ञायते तु क्वचित्कार्ये सद्यः प्राणप्रदानतः ॥ १० ॥

पउमिणिर्ब्रूते–कुलस्त्रियः पत्याधीनाः प्राणाः । पत्यौ लोकान्तरिते जीवन्त्यपि मृताः शृङ्गाराद्यभावात् । यथा–

२३४. शशिना सह याति कौमुदी सह मेघेन तडिद् विलीयते । प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ११ ॥

5 भर्तरि मृते नार्याऽनुमर्तव्यं तावत् । यदि मयि मृतायां त्वं जीवसि, तदा किं न लब्धं मया । कोमलः प्राह तात !–

२३५. एकदेहविनिर्माणादधमर्णीकृतैः सुतैः । यशो-धर्ममयं देहद्वयं पित्रोर्वितीर्यते ॥ १२ ॥

इत्येवं [1]वदतस्तान् सर्वान् युक्तिभिर्बाढं[2] निषेध्य[3] स्वयं मर्त्तुं[4] स्थितः । सङ्घो वहन् कृतः । कालपुरुषेणोपद्रवो न कृतः । गते तु सङ्घे रत्नः श्रीनेमिपरायणः[5] स्थिरस्तस्थौ । पउमिणिर्नाग्रे 10 गता । परत्र स्थित्वा कायोत्सर्गमधात् । कोमलोऽपि तथैव । कालपुरुषेण रत्नो गिरिगुहायामेकस्यां क्षिप्तः । द्वारि शिलां दत्त्वा पुच्छमाच्छोटयति[6] । सिंहनादैः खं बधिरयति । तथापि रत्नो न बिभेति । [7]पविस्थिरजिनरागः ।

अत्रान्तरे कूष्माण्डीं वन्दितुं रैवतशिखरे क्षेत्रपतयः सप्त—कालमेघ १ मेघनाद २ गिरिविदारण ३ कपाट ४ सिंहनाद ५ खोटिक ६ रैवत ७ नामानो मिलिताः । ते देवीं वन्दित्वा 15 ऊचुः–देवि ! क्वापि पर्वतो धडहडायते । ईदृशं क्वापि पूर्वं न वृत्तम्[8], यादृगधुना वर्त्तते । ततः पश्य, किमिदम् ? । क्वापि पुरुषो महानेक उपद्रूयमाणोऽस्ति केनापि क्रूरेण । अम्बया ज्ञातं ज्ञानेन । तैः सह तत्र गता । पउमिणि-कोमलौ दृष्टौ तथाकायोत्सर्गस्थौ । कृपा-भक्ती जाते । गुहाद्वारं गत्वा स आक्षिप्तः क्रूरः–रे ! किमिदं करोषि ? । युध्यस्व चेत्समर्थोऽसि । रत्नं रक्षामो वयं क्षेत्रपालाः, अहं अम्बा जगदम्बा । तथोक्ते घुरुहुरितः[9] सः । युद्धं वृत्ते । [10]यावत् सोऽम्बया 20 पादे धृतः, शिरः परितो भ्रमयित्वा स्फालयिष्यते ग्रावण्युग्रे, तावत्प्रत्यक्षो दिव्यमूर्त्तिः पुरो[11] नरो ददृशे । रत्नश्च पुरः दिव्याभरणाङ्गरागी सप्रियः, सपुत्रः, सुखी । ऊचे च स दिव्याङ्गः–अम्बे ! क्षेत्रपाः ! श्रीरत्न ! शृणुत । यदा रैवतमहिमानं गुरुर्जगौ, तदाऽनेन नररत्नेन[12] रत्नेन प्रतिज्ञा कृता–मया प्राणव्ययेनापि नेमिर्वन्दनीय एवेति । तदाऽहं वैमानिकः सुरः[13] शङ्करो नाम तत्र उपगुरु निषण्ण आसम् । मया न सोढा साऽस्य सन्धा । [14]तेनात्रागत्य एवमुपद्रुतोऽयं 25 रत्नः महासत्त्वः । धन्याऽस्य जाया, पुण्यवानङ्गजः, श्लाघ्या यूयं सङ्घभक्ताः साहाय्यकराश्च[15] । अहं यदि सत्येनैव युध्येयं तदा भवद्भिर्न जीयेय । परं क्रीडामात्रमेवैतदमलिनमनसा कृतमिति । रत्नैर्वृष्ट्वा रत्नमालिङ्ग्य सङ्घमध्ये मुक्त्वा[16] स्वयं द्यां ययौ । अम्बाद्या गिरिमगुः ।

§ ११०) सङ्घो रैवतकमारुरोह । नेमिं ननाम । लेप्यमूर्त्तौ नेमौ तथा स्नात्रं जलैस्तेने, यथा बिम्बं घटीद्वये गलित्वा मृद्भूय भूम्या सह मिलितम् । विषण्णाः सर्वेऽपि ; विशेषतस्तु रत्नः । अचिन्तयच्च– 30 धिग्मामाशातनाकारिणम्, येन एवंविधतीर्थविध्वंसवृजिनभाजनं जातोऽस्मि । तदा[17] भोक्त-

1 D मदन. । 2 P पुस्तक एव लभ्यते 'बाढ' । 3 A B निषिध्य । 4 A B कर्तुं । 5 D नेमिध्यानपरायणः । 6 A आस्फोटयति । 7 P पुस्तके 'पविस्थिर' स्थाने 'हृदिस्थित' शब्द । 8 P जातम् । 9 P घुर्घुरित. । 10 P यावता । 11 P पुरतो । 12 P नास्ति 'नररत्नेन' । 13 P विहायान्यत्र नास्ति । 14 A B नास्ति 'तेन' । 15 P विहान्यत्र नास्ति पदमेतद् । 16 A क्षिप्त्वा । 17 P अथ तदा ।

व्यम्, यदा तीर्थं पुनः स्थापितं भविष्यति। इत्युक्त्वा बान्धवौ सङ्घरक्षायै नियुज्य, अम्बां ध्यात्वा, तपस्तेपे। षष्ठ्युपवासान्तेऽम्बा प्रत्यक्षीभूय तं काञ्चनबलानाख्ये इन्द्रनिर्मिते निशि निनाय। तत्र तीर्थे द्वासप्ततिजिनबिम्बानि महाकायान्यदीदृशत्। तत्राष्टादश हैमानि, अष्टादश रत्नानि, अष्टादश राजतानि, अष्टादश शैलमयानि–एवं द्वासप्ततिः। तत्रैकस्मिन् रत्नमये बिम्बे रत्नः स्वनामसाम्यादिव तुष्टो विलग्नः। इदमर्पय मे स्वामिनि!, येन तत्र स्थाने रोपयामीत्यम्बामूचे च। अम्बाऽप्याह स्म–वत्सक! तीर्थमिदं महत्। आगमिष्यति शनैः शनैः कलिः। तत्र लोको हीन-सत्त्वोऽर्थलुब्धः पापकारी सर्वधर्मबाह्यो भावी। तदग्रतो रत्नं बिम्बं न छुटिष्यति। महत्या-शातना भाविनी ततः[1]। तस्मादिदमाश्मनं गृहाण। रत्नेन तथेत्यूरीकृतम्। उदितं च–मातः! कथमिदं महन्मया नेयम्। देव्योक्तम्–आमसूत्रतन्तुभिरेभिर्वेष्टय। ततश्चल[2], मा भैः। यत्र तु पश्चाद्विलोकयिष्यसि तत्रैव स्थास्यति। इत्यम्बिका[3]गिरा चलितो रत्नो बिम्बं गृहीत्वा याव-त्कियतीमपि भुवं पुरो याति तावद् विस्मितः पश्चादालुलोके–किं अम्बा आगच्छति नवेति। तत्रैव तस्थौ बिम्बम्। [उदुम्बरोपरि न चलति स्थानान्मनुष्यलक्षैरपि। ततः परावृत्त्य*] [4]तथैव द्वारस्य प्रासादस्य च रचना कृता। साऽद्यापि तथैव[5] तत्रास्ते। एवं प्रतिज्ञां सम्पूर्य रत्नः ससङ्घो रैवताद् व्याघुट्य शत्रुञ्जये ऋषभं प्रणम्य अन्यान्यपि तीर्थानि वन्दित्वा नवहुल्लपत्तनं प्रविष्टः राज्ञा[6]ऽभ्यागतः। गृहे गृहे मङ्गलानि साधर्मिकवात्सल्यानि। ऋद्धिर्वृद्धिश्च[7]। आचन्द्रार्कस्थायि यशो लले। रत्नस्थापितं नेमिबिम्बमिदं यद्वन्द्यमानमास्तेऽधुना। तस्य तु स्तुतिरेवं प्राक्कविकृता–

२३६. न खानिमध्यादुदखानि सूत्रैर्नासूत्रि टङ्कैरुदटङ्कि नैव।
अघोति न घोतनकैर्न वाहैरवाहि योऽमत्रि न सिद्धमन्त्रैः॥ १३॥

२३७. अनादिरव्यक्ततनूरभेद्यः प्रभामयोऽनन्तबलः सुसिद्धः।
तरीस्तरीतुं भविनां भवाब्धिं स नेमिनाथः कृपयाऽऽविरासीत्॥ १४॥

॥ इति श्रावकरत्न-रत्नप्रबन्धः ॥ २२ ॥

## २३. अथ आभडप्रबन्धः ।

§१११) अणहिल्लपुरे श्रीमालवंश्यः श्रेष्ठी नृपनागः। तत्पत्नी सुन्दरी। तज्जः श्रीआभडः तस्मिन् दशवर्षदेश्ये माता-पितरौ द्यां गतौ। श्रीर्नष्टा। तथाप्याभडः सुजनाश्रितो व्यवसायज्ञ इति ववृधे। पूर्वजकीर्त्त्या[8] कन्या लब्धा। परिणीतः। वृत्त्यर्थं मणिकारकाणां[9] गृहे घुर्घुरान् घर्षति। लोष्टिकान् पञ्चोपार्जयति। तत्र[10] लोष्टिकमेकं धर्मे व्ययति। द्वौ कुटुम्बवृत्तिकार्ये। द्वौ सञ्चये विधत्ते। चतुर्दशेऽब्दे पुत्रो जातः। तस्य स्तन्यप्राप्तिरल्पा। अतश्छागीगवेषणाय आभडो बहिर्ग्रामं गतः। तत्र, आवाहे प्रातर्दन्तपावनं कुरुते। अत्रान्तरे आगतं अजायूथम्। ताः सर्वा आवाहे पयः पातुं लग्नाः। पयः कम्बुधवलमपि सहसा नागवल्लीदलनीलच्छायं[11] जातम्। विस्मित आभडः।

1 P नास्ति 'ततः'। 2 P इतश्चलमाने। 3 E B इत्यम्बा०। * P विहायान्यत्र नास्ति कोष्ठकगतः पाठ.। 4 P नास्ति। 5 A B तत्रैवास्ते। 6 P राजा स्वयमभ्यागतः। 7 'ऋद्धिः वृद्धिः' स्थाने P पुस्तके 'प्रवृत्तानि'। 8 P विनाऽन्यत्र नास्ति पदमेतत्। 9 B ०काराणां। 10 P तेषां मध्ये। 11 P ०दलच्छायं।

छागीषु पयः पीत्वा निवृत्तासु यावद् गवेषयति तावदेकस्याः कण्ठे टोक्करकं तन्मरकतरत्नगर्भं ज्ञात्वा तेन सह सा विक्रिये[1]। बालोऽजीवत्। [ रत्नं तु शिराणे उद्योतितं महातेजःपुञ्जमयम्। परीक्षकाणां दर्शितम्। तैरमूल्यं भणितम्। तदनु जेसिंघदेवनृपाय अर्पितम्। तुष्टेन राज्ञा एका स्वर्णकोटी दापिता* ] आभडोऽपि तेन महर्द्धिर्जातः। नखपृष्टमात्रं हि तल्लक्षं लभते। सुभिक्षं च 5 तदा। व्यवहारी[2]जातः। जयसिंहराज्यं तदा ऋद्धम्।

§ ११२) आभडस्य वहिकास्तिस्रः। एका रोक्यवही, अपरा विलम्बवही, तृतीया परलोक[3]वही। [ एतावता* ] को भावः–धरणबन्धनयातनाः कस्यापि न करोति कृपाम्भोधिः। ३६ वेलातटेषु धनर्द्धिः; महालाभाः। पूगहट्टिका १–निजसदनं २–श्रीहेमसूरिपौषधशाला ३–माषपिष्टकेष्टकाचिताऽकारि। अमारिकारकश्रीकुमारपालदेवसमये महाव्यापस्तस्य।

10 § ११३) एकदा श्रीहेमसूरिभिः साधर्मिकवात्सल्यं महाफलमिति राज्ञे व्याख्यातम्। राज्ञा आभड उक्तः–त्रुटितधनं श्रावककुलं दीनारसहस्रं दत्त्वोद्धार्यम्। वर्षान्ते लेख्यकं वयमवधाराप्याः। आभडेन वर्षान्ते राज्ञे लेख्यकं दर्शितम्। एका कोटिः[4]। राजा यावद्दापयति, तावदाभडेन विज्ञप्तम्–देव! भूभुजां कोशो द्विधा स्थावरो जङ्गमश्च। तत्र स्थावरो हेमादिः[5], जङ्गमो वणिग्जनः। वणिग्धनमपि स्वामिधनमेवेति। [ राजोवाच–एवं मा वादीः। लोभपिशाचो मां छल-15 यति। तावन्मात्रं तत्कालमेवानाय्य दापितम्*। ] राजा तुष्टः।

§ ११४) एवं व्रजति काले राजा कुमारपालदेवः श्रीहेमश्च वृद्धौ जातौ। श्रीहेमसूरिगच्छे च विरोधः। रामचन्द्र-गुणचन्द्रादिवृन्दमेकतः; एकतो बालचन्द्रः। तस्य च बालचन्द्रस्य राजभ्रातृव्येन अजयपालेन सह मैत्री। [ एकदा प्रस्तावे* ] राज्ञो गुरूणामाभडस्य च रात्रौ मन्त्रारम्भः। राजा पृच्छति–भगवन्! अहमपुत्रः कं स्वपदे रोपयामि। गुरवो ब्रुवन्ति–प्रताप-20 मल्लदौहित्रं राजानं कुरु धर्मस्थैर्याय; अजयपालात्तु त्वत्स्थापितधर्मक्षयः[6]। अत्रान्तरे आभडः प्राह–भगवन्! यादृशस्तादृशः स्वकीय[7]एवोपकारी। पुनः श्रीहेमः–अजयपालं राजानं मा कृथाः [ सर्वथैव* ]। एवं मन्त्रं कृत्वोत्थितास्त्रयः। स मन्त्रो बालचन्द्रेण श्रुतः। अजयपालाय च कथितः। [ अतो* ] हैमगच्छीयरामचन्द्रादिषु द्वेषः, आभडे तु प्रीतिः। श्रीहेमसूरेः स्वर्गगमनं जातम्। ततो दिनद्वात्रिंशता राजा कुमारपालो अजयपालदत्तविषेण परलोकमगमत्। 25 अजयपालो राज्ये निषण्णः। श्रीहेमद्वेषाद् रामचन्द्रादिशिष्याणां तप्तलोहविष्टरासनयातनया मारणम्[8], राजविहाराणां बहूनां पातनम्। लघुक्षुल्लकानाहाय्य प्रातः प्रातर्मृगयां कर्तुं अभ्यासयति। पूर्वमेते चैत्यपरिपाटीमकार्षुरित्युपहासात्। बालचन्द्रोऽपि स्वगोत्रहत्याकारापक इति ब्रुवद्भिर्ब्राह्मणैर्नृपमनस उत्तारितः। लघुता[9]। मालवान् गत्वा मृतः। 'पापं पच्यते हि सद्यः'। प्रासादपातनं दृष्ट्वा श्रावकलोकः खिद्यते। आभडः पूर्वप्रतिपन्ना[10]न्मान्योऽपि वक्तुं न शक्नोति, 30 उग्रत्वाद्राज्ञः। [ परं तेन* ] प्रपञ्चेन तु रक्षा [11]कारिता। [12]कथं?–

1 P क्रीता। * कोष्ठकगता पाठा. P पुस्तक एवोपलभ्यन्ते। 2 P नास्ति। 3 P पारलौकिक०। 4 P कोटिरायाता। 5 P हेमादिभाण्डागारः। 6 P ०क्षयो भावि। 7 P आत्मीयो भव्य.। 8 P मारणं कृतम्। 9 P लज्जितो। 10 P ०पन्नत्वान्। 11 P कारापिता। 12 P तदा हा कथं।

§११५) [एकदा*] आभडेन नृपवल्लभः कौतुकी सीलणो नामा भृत्यो[illegible]नेन प्रार्थितः– [illegible]। सीलणेन तथा कुरु, यथा शेषप्रासादा उद्धरन्ति। तेनोक्तम्–निश्चिन्तैः [illegible]। [illegible] सांठकसौधमेकं कृतम्। धवलितं चित्रितं च। पुत्राः पञ्च [illegible] शिक्षिताः। गतो नृपान्तिकं सीलणो वदति–देव! जरा मे [illegible]। पुत्राः [illegible] जातः। अधुना तीर्थयात्रायै विदेशान् यामि, यथादेशः स्यात्। राज्ञोक्तम्–यथारुचि [illegible]। [तदनु*] तत्सौधं पुत्रांश्चादाय महासभास्थे नृपे आगात्। पुत्रा [illegible]। पुत्राश्च भाषिता राज्ञि पश्यति सति–एतन्मे सौधं [illegible]। मम [illegible]। [बहु*] यत्न निष्पादितमिति। तैस्तथेति प्रतिपेदे। [नृपादिसर्वं*] [illegible] तीमपि भुवं यावत् सीलणो याति, किल तावत्तैस्तत् सौधं [illegible]। [illegible] त्कारं श्रुत्वा सीलणो व्याघुटितो वदति–रे हताशा! [illegible]। अने- नात्मीये पितरि मृते [सति*] तद्धर्मस्थानानि पातितानि; भवद्भिः पुनर्मां [illegible] गच्छन् न प्रतीक्षितः। राजा ललज्जे। चैत्यानामपातनमादिशति स्म।

§११६) तस्य कुत्सितस्य राज्ञो माता-पुत्रयोर्बलाद्वित्रं कारयितुं [illegible]। [illegible] कारयति। एकदा एकेन वण्ठेन छत्रधृतहस्त[illegible]कर्त्तिकया [illegible]।

§११७) दिनकतिपयानि कीर्त्तिपालनामा राजपुत्रो गूर्जरधरायां लोकरक्षामकरोत्। छत्र- चामरादि न तस्य।

§११८) तस्मिन् मालवसैन्ये मृते गूर्जरधरायां भीमदेवो राजा आसीत्। स [illegible]। [परं*] विकलः पुण्याधिकः। [तस्य*] सोढ्ढ मोढ्ढ द्वे गड्डरिके। ते द्वे [illegible], सर्वांगावयवबि- भूषिते कारयति[3], सुखासने उपवेशयति, ग्रामेषु ससैन्ये भ्रमयति। ग्रामाः '[illegible]' [एवं*] बहुकालो गतः। एकदा देशपालैः सम्भूय राजा विज्ञप्तः–देव! निरर्थकं किमिति स्वदेशं भक्षापयसि। अन्नघृतवसनादिव्ययो वृथाऽयम्। [तदा*] राजा आह–कथामेकां शृणुत। क्वचिद्वेलाकूले पूर्वं जलवेगाहतो [एको*] मीनस्तटे लग्नः। तदा तत्र दुर्भिक्षं घोरम्। अन्नाभावे क्षुधार्त्तो लोकः। अतः सर्वोऽपि जनः कुठाराद्यैश्छेदं छेदं तं मीनं भक्षयितुं गृह्णाति। तथापि स न म्रियते, महाकायत्वात्। अत्रावसरे क्षुधितः पत्नीप्रेरितः कोऽपि विप्रस्तन्मीनमांसं ग्रहीतुमग- मत्। अपरलोकैश्छिद्यमानं पश्यतस्तस्य स्वभावदयालोर्विप्रस्य दया आसीत्। न छिनत्ति। तदा व्यन्तरानुप्रवेशात् स मत्स्यो विप्रमाह–भो! छिन्धि माम्। अन्येऽपि खादन्तः सन्ति। तवो- पकृतो भव्यः। विप्रः प्रोचे–दया मे, [6]न छिनद्मि। मीनो वदति–तर्हि शृणु, अयं पापी लोको मां म्रियमाणं मारयति। अहं तु मृत्वाऽत्र तटे राजा भविष्यामि पुरन्दरो नाम। राजकुलेऽवत- रिष्यामि। त्वं ममोपाध्यायो भविष्यसि। अहं प्राग् वैरादमुं लोकं नवनवभङ्गिभिः कदर्थयि- ष्यामि। त्वया कस्याप्यर्थे विज्ञप्तिर्नैव करणीया। त्वां तु सत्पुरुषमहं गुरुबुद्ध्या पूजयिष्यामि। इति जल्पन् मृतः स मीनः। यथोक्तो राजा पुरन्दरो नाम समभूत्। विप्रस्तु गुरुः। तं लोकं कृत-

---

* कोष्ठकगतानि पदानि P पुस्तक एव दृश्यन्ते। 1 P तथा चैत्यस्य। 2 A यत्नेन। 3 A करोति। 4 A [illegible]। 5 P नास्ति 'तदा'। 6 P तेन न छिनत्ति।

परमागसं स राजाऽपीपिडत्। विप्रस्तु तदुक्तं स्मरन् न ऊचे किञ्चित्। तस्माद् भो! ग्रामण्योऽह
मपि तद्विधः कोऽप्यवतीर्णोऽस्मि। क्रीडया पीडयामि लोकम्। [तस्माद्*] भवद्भिर्न वाच्यम्
वक्ष्यथ चेद् [तदा*] रसनां छेत्स्यामि। [एवं श्रुत्वा*] स्थितस्तूष्णीं लोकः। देशोऽपचीयते

§ ११९) एवं राज्ये आभडस्तथैव ऋद्धिमान्। आभडस्य च चाम्पलदेनाम्नी बालविधवा वाग्मिनी
5 उचितज्ञा सर्वशास्त्रविदुरा तनया गृहव्यापारान् करोति [1]कारयति। एकदा लोभात्किञ्चिच्चोरयन्
भाण्डागारिको रुष्टेनाभडेन निष्काशितः। स कोपादुपभीमभूपं गतः। ऊचे च–राजन्
आभडस्य अनन्ता ऋद्धिः। एवमेवं तां गृहाण। राजाह–कोऽप्यस्यान्यायोऽस्ति?। भाण्डागारिक
ऊचे–नास्ति। तर्हि परधनं कथं वृथा गृह्यते?। भाण्डागारिकः प्राह–छलं किमपि क्रियते। राजाह
तथाऽहं करिष्यामि। [इति विचार्य*] भाण्डागारिकं स्वसौधे एव स्थापयित्वा छागीमांसं दासी
10 शिरसि स्थालस्थं कृत्वा प्राहैषीत्। आगता सा दासी मध्याह्ने आभडसदनद्वारम्। तदा आभडो
ध्यानेन जिनमर्चयति। चाम्पलया[2] स्वयं द्वारमुद्घाटि। दासी मध्यमागता। स्थालं दर्शितम्
चाम्पलया मांसं दृष्ट्वा, तदैव भाण्डागारिकविक्रियेयमिति ऊहांचक्रे। [मध्ये*] आनीता सगौ
रवम्। सा पृष्टा किमेतत्?। दास्याह–राज्ञा उत्सवे[3] गौरवाय वः प्रस्थापितमदः। एतन्मांसं
चाम्पलया स्थालान्तरे लातम्। सपादलक्षमूल्यो[4] हारो राज्ञेऽर्पितः। दास्यै कण्ठाभरणम्। स्थाल
15 मौक्तिकैर्वर्द्धापितम्। दासी हृष्टा उपराजं वव्राज। भोजनादनु आभडः पुत्र्या जगाद–तात
निष्कासितभाण्डागारिकप्रेरितनृपकर्त्तव्यमेतत्। मया दास्यै रीढा न कृता। यास्यति श्रीः। पर
उपायं कुरु। सर्वस्वधनं टिप्पयित्वा राज्ञे दर्शय, कथय च–गृहाण स्वामिन्! यदि ते रुचिरस्ति
तथैव चक्रे सः। नृपो विस्मितो लज्जितो हृष्टश्च। भाण्डागारिकं तटे धृत्वा राजोचे–रे मूढ
यस्मै विधिर्द्रव्यं दत्ते, तस्मै तद्रक्षोपायबुद्धिमपि दत्ते। ततो माऽत्र वृथा मत्सरी स्याः। पुनरेवा
20 भडपादयोर्लगितः। तृणमपि तत्सत्कं राज्ञा न गृहीतमेव। एवं धनी, अखण्डभाग्यः, चिरायुः
नीरुक्, आभडो मरणावसरे पुत्रोपकाराय स्वसदने चतुष्कोण्यां निधिचतुष्कं न्यास्थत्। मृत
स्वयं समाधिना। चाम्पलाऽपि द्यां गता। पुत्रैर्बाह्ये धने गते [सति*] ते निधयः सम्भालिताः
[परं*] न लभ्यन्ते। अञ्जनं चटापितम्[5]। अञ्जनी भणति–केऽपि श्यामाङ्गा मुद्गरपाणयोऽधोऽधो
धनं नयन्ति, किं मुधा क्लिश्यध्वे?। जाता निराशाः। सामान्यवणिजोऽभवन्। तस्मात्पुरुषाणां
25 पुण्योदय एव धनवृद्धिनिबन्धनं न कुलमिति॥

॥ इत्याभडप्रबन्धः ॥ २३ ॥



1 नास्ति P पुस्तके। 2 P चाम्पलदेव्या। 3 P महिणिमोत्सवे 4 P मूलहारो। 5 P च दापित।

## २४. अथ श्रीवस्तुपालप्रबन्धः ।

२३८. श्रीवस्तुपाल-तेजःपालौ मन्त्रीश्वरौ उभौ आस्ताम् ।
यौ भ्रातरौ प्रसिद्धौ, कीर्त्तनसंख्यां तयोर्ब्रूमः ॥ १ ॥

§१२०) पूर्वं गूर्ज्जरधरित्रीमण्डनायां मण्डलीमहानगर्यां श्रीवस्तुपाल-तेजःपालाद्याः वसन्ति स्म। [1]एकदा श्रीमत्पत्तनवास्तव्यप्राग्वाटान्वयठक्कुरश्रीचण्डप[2]ात्मज-ठक्कुरश्रीचण्डप्रसादाङ्ग[3]ज-मन्त्रिश्री-सोमकु[4]लावतंस-ठक्कुर[5]श्रीआसराज[6]नन्दनौ [7]कुमारदेवीकुक्षिसरोवरराजहंसौ श्रीवस्तुपाल-तेजः-पालौ श्रीशत्रुञ्जय-गिरिनारादितीर्थयात्रायै प्रस्थितौ । [8]हडालाग्रामं गत्वा यावत्स्वां भूतिं चिन्त-यन्तस्तावल्लक्षत्रयं जातं सर्वं स्वम् । ततः सुराष्ट्रास्व[9]सौस्थ्यमाकलय्य लक्षमेकमवन्यां निधातुं निशीथे महाश्वत्थतलं खानयामासतुः । तयोः खानयतोः कस्यापि प्राक्तनः[10] कनकपूर्णः शौल्व-कलशो निरगात् । तमादाय श्रीवस्तुपालः तेजःपालजायामनुपमदेवीं मान्यतया अपृच्छत्–क्व एतन्निधीयते ? । तयोक्तम्–गिरिशिखरे [11]एतदुच्चैः स्थाप्यते । यथा प्रस्तुतनिधिवन्नान्यसाद् भवति । तत् श्रुत्वा श्रीवस्तुपालः तद्द्रव्यं श्रीशत्रुञ्जयोज्जयन्तादौ अव्ययत् । कृतयात्रो व्यावृत्तो धवलक्कपुरमगात् ।

§१२१) अत्रान्तरे [12]महणदेवी नाम[13] कन्यकुब्जेश्वरसुता जनकात् प्रसन्नात् गूर्ज्जरधरां कञ्चुलि-कापदे लब्धां सुचिरं भुक्त्वा कालेन मृत्वा तस्यैव गूर्ज्जरदेशस्य अधिष्ठात्री महर्द्धिर्व्यन्तरी जाता । सा धवलक्कके शय्यायां सुखविश्रान्तं राणकश्रीवीरधवलं प्रत्यक्षीभूय जगाद–राणक ! इयं गूर्ज्जर-धरा वनराजप्रभृतिभिर्नरेन्द्रैः सप्तभिश्चापोत्कटवंश्यैः षण्णवत्यधिकं शतं वर्षाणां भुक्ता । तदनु मूलराज–चामुण्डराज–वल्लभराज–दुर्लभराज–भीम–कर्ण–जयसिंहदेव–कुमारपाल–अजयपाल-लघुभीम–अर्णोराजैः[14] चौलुक्यैः सनाथीकृताः । सम्प्रति युवां पिता-पुत्रौ लवणप्रसाद-वीरधवलौ स्तः । [15]इयं गूर्ज्जरधरा कालवशादन्यायपरैः पापैः स्वाम्यभावात् 'मात्स्यन्यायेन' कदर्थ्यमा-नाऽऽस्ते, म्लेच्छैरिव गौः । यदि युवां वस्तुपाल-तेजःपालौ मन्त्रिणौ कुर्वाथे[16], तदा राज्य-प्रताप-धर्मवृद्धिर्भवति । अहं महणदेवी सर्वव्यापिभिर्भवत्पुण्यैराकृष्टा वदन्त्यस्मि । इति वदन्त्येव वि-द्युदिव सहसाऽदृश्या बभूव । राणकवीरधवलः पद्मासनस्थस्तल्पोपविष्टश्चिन्तयति–अहो देव्युप-देशः साक्षात् !; कर्त्तव्यमेव तन्मन्त्रिद्वयं यद्देव्योक्तम् । यतः–

२३९. दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति, नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किन्तु, संस्कारमत्र मणिकारगणः करोति ॥ २ ॥

इत्यादि चिन्तयन् प्रातरुत्थितः । पूर्वोक्तमेवोपदेशं महणदेवी श्रीलवणप्रसादायाप्यदत्त । कृतप्रातःकृत्यौ मिलितौ पिता-पुत्रावेकत्र । कथितं रात्रिवृत्तमन्योऽन्यम् । तुष्टौ द्वावपि । तदैव च तेषां कुलगुरुः पुरुषसरस्वती सोमेश्वरदेवो द्विजः स्वस्त्ययनायागात्[17] । ज्ञापितोऽसौ तद्वृत्तान्तं ताभ्याम् । सोऽप्युवाच–देवौ ! युवयोः प्राचीनपुण्यप्रेरिता देवताऽपि साक्षात् । तस्मात्तदुक्त-

1 EB अन्यदा । 2 P चण्डपस्तदात्मज० । 3 P चण्डप्रसादस्तदङ्गज० । 4 P ०सोमस्तत्कुला० । 5 P मंत्रिश्रीआस० । 6 P ०राजस्तन्नन्दनौ । 7 P कुमरा० । 8 P हडालक० । 9 P सुराष्ट्रात्स्वं । 10 A प्राक्तन० । 11 A एवैतदुच्चैः । 12 P महणल० । 13 P नामा । 14 P अर्णोराज एवं । 15 A इति । 16 A कुर्वध्वे, P कुर्वाथे । 17 P स्वस्त्ययनयोगात् ।

माचरताम्। मन्त्रिबलं विना न किञ्चिद् राज्यपरिकर्मणम्। मन्त्रिणौ च यौ भवतोरग्रे प्रतिपादितौ देव्या, तावत्रागतौ स्तः। मम मिलितौ। राजसेवार्थिनौ, द्वासप्ततिकलाविदुरौ, न्यायनिष्ठौ, जैनधर्मज्ञौ स्तः। यद्यादेशः स्यात्, तदाऽऽनीयेते। राणकादेशात्पुरोहितेन[1] सद्य आनीतौ, नमस्कारिणौ, आसनादिप्रतिपत्त्या गौरविणौ। उक्तौ च श्रीलवणप्रसादादेशाद्वीरधवलेन स्वयम्–

5 २४०. आकृतिर्गुणसमृद्धिशंसिनी नम्रता कुलविशुद्धिसूचिका।
वाक्क्रमः कथितशास्त्रसङ्क्रमः संयमश्च युवयोर्वयोऽधिकः॥ ३॥

२४१. श्लाघ्यतां कुलमुपैति पैतृकं स्वान्मनोरथतरुः फलेग्रहिः।
उन्नमन्ति यशसा सह श्रियः स्वामिनां च पुरुषैर्भवादृशैः॥ ४॥

२४२. यौवनेऽपि मदनान्न विक्रिया नो धनेऽपि विनयव्यतिक्रमः।
10 दुर्जनेऽपि न मनागनार्जवं केन वामिति नवाकृतिः कृता॥ ५॥

२४३. आवयोश्च पितृपुत्रयोर्महा-न्नाहितः क्षितिभरः पुरद्रुहा[2]।
तद् युवां सचिवपुङ्गवावहं[3] योक्तुमत्र युगपत्समुत्सहे॥ ६॥

२४४. येन केन न च धर्मकर्मणा भूतलेऽत्र सुलभा विभूतयः।
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम्॥ ७॥

15 अथ वस्तुपालः प्राह–

२४५. देव! सेवकजनः स गण्यते पुण्यवस्तु गुणवत्सु चाग्रणीः।
यः प्रसन्नवदनाम्बुजन्मना स्वामिना मधुरमेवमुच्यते॥ ८॥

२४६. नास्ति तीर्थमिह पार्थिवात्परं यन्मुखाम्बुजविलोकनादपि।
नश्यति द्रुतमपायपातकं सम्पदेति च समीहिता सताम्॥ ९॥

20 २४७. सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः।
तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति॥ १०॥

२४८. किन्तु विज्ञपयिताऽस्ति किञ्चन स्वामिना तदवधार्यतां हृदि।
न्यायनिष्ठुरतरा गिरः सतां श्रोतुमप्यधिकृतिस्तवैव यत्॥ ११॥

२४९. सा गता शुभमयी युगत्रयी देव! सम्प्रति युगं कलिः पुनः।
25 सेवकेषु न कृत कृतज्ञता नापि भूपतिषु यत्र दृश्यते॥ १२॥

२५०. दृष्टिर्नष्टा भूपतीनां तमोभिस्ते लोभान्धान् साम्प्रतं कुर्वतेऽग्रे।
तैर्नीयन्ते वर्त्मना तेन यत्र भ्रश्यन्त्याशु व्याकुलास्तेऽपि तेऽपि॥ १३॥

२५१. न सर्वथा कश्चन लोभवर्जितः करोति सेवामनुवासरं विभोः।
तथापि कार्यः स तथा मनीषिभिः परत्र बाधा न यथाऽत्र वाच्यता॥ १४॥

30 २५२. *पुरस्कृत्य न्यायं खलजनमनादृत्य सहजानरीन् निर्जित्य श्रीपतिचरितमादृत्य च यदि।
समुद्धर्तुं धात्रीमभिलषसि तत्सैष शिरसा धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते॥ १५॥

किञ्च–सम्प्रति आवां मण्डलीनगरात् सेवार्थिनो वः समीपमागतौ स्तः सकुटुम्बौ। लक्षत्रयी द्रव्यस्य नो गृहेऽस्ति। यदा देवौ पिशुनवचने लगतः, तदा एतन्मात्रस्वापतेयसहितौ दिव्यं

1 A नास्ति 'हितेन'। 2 P परद्रुहा। 3 A पुङ्गवा नरं। * P पुस्तके एतत्पद्यं नोपलभ्यते।

कारयित्वा आवां मोक्तव्याविति । अत्र काहलिकं मर्यादीकृत्य परिग्रहस्य धीरा द्वयोश्च भवतु । इति राणकाभ्यां धीरां दत्त्वा दापयित्वा प्रधानमुद्रानिवेशस्तेजःपालस्य करे कृतः । स्तम्भतीर्थ-धवलक्कयोस्त्वाधिपत्यं वस्तुपालस्य निवेशितम् । एवं श्रीकरणमुद्रायां लब्धायाम्, अन्यैव तयोः स्फूर्त्तिरुदलासीत्, देवतासान्निध्यात् सहजबुद्धिबलोदयाच्च । स्वगृहमायातो वस्तुपालः श्रीजिन- 5
राजं पूजयामास । अथ तत्त्वं क्षणमचिन्तयत्–

२५३. उच्चैर्गर्वे समारोप्य नरं श्रीराशु नश्यति । दैन्यदत्तावलम्बोऽथ स तस्मादवरोहति ॥ १६ ॥

२५४. अन्धा एव धनान्धाः स्युरिति सत्यं[1] तथाहि ते । अन्योक्तेनाध्वना गच्छन्त्यन्य[2]हस्तावलम्बिनः ॥ १७ ॥

२५५. धनी धनात्यये जाते दूरं दुःखेन दूयते । दीपहस्तः प्रदीपेऽस्ते तमसा बाध्यतेऽधिकम् ॥ १८ ॥

२५६. छत्रच्छायाछलेनामी धात्रा चक्रे निवेशिताः । भ्रमन्तोऽपि स्वमात्मानं मन्यन्ते स्थिरमीश्वराः ॥ १९ ॥ 10

२५७. कालेन सौनिकेनेव नीयमानो जनः पशुः । क्षिपत्येष धिगासन्ने[3] मुखं विषयशाड्वले ॥ २० ॥

२५८. कायः कर्मकरोऽयं तन्नात्र कार्याऽतिलालना । भृतिमात्रोचितो ह्येष प्रपुष्टो[4] विचिकीर्षति ॥ २१ ॥

२५९. प्रयोजकान्यकार्येषु नश्यन्त्याशु महापदि । दुर्मित्राणीव खान्येषु बन्धुबुद्धिरधीमताम् ॥ २२ ॥

२६०. विषयामिषमुत्सृज्य दण्डमादाय ये स्थिताः । संसारसारमेयोऽसौ बिभ्यत्तेभ्यः पलायते ॥ २३ ॥

२६१. दुःखाग्निर्वा स्मराग्निर्वा क्रोधाग्निर्वा हृदि ज्वलन् । न हन्त शान्तिमायान्ति[5] देहिनामविवेकिनाम् ॥ २४ ॥

२६२. विधौ विध्यति सक्रोधे वर्म धर्मः शरीरिणाम् । स एव केवलं तस्मादस्माकं जायते[6] गतिः ॥ २५ ॥ 1

इत्यादि ध्यात्वा वस्त्राणि परावृत्त्य श्रीवस्तुपालः सपरिजनो बुभुजे । गृहीतताम्बूलो राजकुलमगमत् । एवं दिनसप्तके गते, प्रथमं तद्राज्यजीर्णाधिकारी एक एकविंशतिलक्षाणि बृहद्द्रम्माणां दण्डितः । पूर्वमविनीतोऽभूत् । [ तदनु* ] विनयं ग्राहितः । तैर्द्रव्यैः कियदपि हयपत्तिलक्षणं सारं सैन्यं कृतम् । तेजःपालेन पश्चात्सैन्यबलेन धवलक्कप्रतिबद्धग्रामपञ्चशतीग्रामण्यश्चिरसञ्चितं धनं हक्कयैव दण्डिताः; जीर्णव्यापारिणो निश्च्योतिताः । एवं मिलितं प्रभूतं स्वम् । ततः [7]स्वबलसै- 2
न्यसंग्रहपटुतेजसं श्रीवीरधवलं सहैवादाय सर्वत्र देशमध्येऽभ्रमन् मन्त्री । अदण्डयत् सर्वम् । ततोऽद्भुतर्द्धिर्वीरधवलस्तेजःपालेन जगदे–देव! सुराष्ट्रराष्ट्रेऽत्यन्तधनिनः ठक्कुरास्ते दण्ड्यन्ते । ततोऽचलदयम् ।

'लब्धास्वादः पुमान् यत्र तत्रासक्तिं न मुञ्चति ।'

§ १२२) अथ वर्धमानपुर-गोहिलवाड्यादिप्रभून् दण्डयन्तौ प्रभु-मन्त्रिणौ वामनस्थलीं आगा- 2
ताम् । तटे चतुरकान् दत्त्वा स्थितो वीरधवलः । वामनस्थल्यां तदानीं यौ प्रभू सहोदरौ तौ साङ्गण-चामुण्डराजनामानौ उद्दामस्थामानौ राणश्रीवीरधवलस्य शालकौ–इति सौजन्यमर्यादां पालयंस्तद्भगिनीं निजजायां [8]जयतलदेवीं मध्ये प्राहैषीत् । बहुपरिजना च सा गत्वा सहोदरौ अभाषिष्ट–भ्रातरौ! भवतां भगिनीपतिरदण्डदण्डनः [ अभङ्गभञ्जनः* ] गूर्जरधरायां[9] प्रतिग्रामं प्रतिपुरं दण्डयन् भवतोर्दण्डनायात्रा[10]गतोऽस्ति । दीयतां धनाश्वादिसारम् । एतद् भगिनीवचः 30
श्रुत्वा मदाध्मातौ[11] प्रोचतुः–मन्ये स्वसस्त्वं ततः समायाता सन्ध्यर्थम् । यतो माऽस्मद्बान्ध-

1 AB तथ्यं । 2 P अन्ये । 3 A ०सन्नो । 4 A पुष्टोऽपि । 5 A आयाति । 6 P जायतां । 7 P सबल० ।
8 P नाम्ना जयतलदेवीं बहुपरिजनपरिवृतां । 9 A ०धरां । 10 A दण्डनयात्रागतो० । 11 A B नास्ति ।

वयोः [1]समरारूढयोरहं निर्धवाऽभूवम् । [एतां*] मा स्म चिन्तां कृथाः । अमुं त्वत्पतिं हत्वापि ते चारु गृहान्तरं करिष्यावः । न च निषिद्धोऽसौ विधिः; राजपुत्रकुलेषु[2] दृश्यमानत्वात् । ततो जयतलदेव्या[3]–समानोदर्यौ ! नाहं पतिवधभीता वः[4] समीपमागाम्, किन्तु निषिपतृगृहत्व-भीता । स हि [5]कोऽस्ति वो मध्ये यस्तं जगदेकवीरं ऊपरवटाख्यहयारूढं नाराचान् क्षिपन्तं 5 कुन्तं[6] वेल्लयन्तं खड्गं खेलयन्तं वा द्रष्टुमीशिष्यते । कालः साक्षादरीणां सः ।

'अदृष्टपरशक्तिः सर्वोऽपि भवति बलवान् ।'

इत्येवं वदन्त्येव ततो निर्गत्य सा सती पतिसविधं गत्वा तां वार्त्तामुच्चैरकथयत् । तन्निशम्य वीरधवलः क्रोधकरालाक्षो भ्रुकुटीभङ्गभीषणभालानुकृतभीमसेनः[7] सङ्ग्राममममण्डयत् । तौ द्वावपि वीराधिवीरौ ससैन्यौ आगतौ । सङ्घटितो रणः । पतितानि योधसहस्राणि पक्षद्वयेऽपि । 10 रजसाऽऽच्छादितं गगनम् । गतः स्व-परविभागः । वीरधवलो हत इति सैन्यद्वयेऽपि व्याचक्रे[8] । क्षणार्द्धेन वीरधवलो दिव्याश्वाधिरूढः[9] सारसुभटयुक् साङ्गण-चामुण्डराजयोर्मेलापके गत्वा प्रसृतः । ऊचे च–रे सौराष्ट्रौ ! गृह्णीतं[10] करे शस्त्रं यद्यस्ति तेजः । इत्युक्त्वा तच्चक्रे यद्देवैर्दिवि शिरो धूनितं कुर्वद्भिर्ददृशे । हतौ साङ्गण-चामुण्डराजौ अभिमुखौ[11] । शोधितं क्षेत्रम्[12] । पालिताः स्वे परे च पालनार्हाः । प्रविष्टो वीरधवलो वामनस्थलीमध्यम् । गृहीतं शालकयोः कोटिसङ्ख्यं 15 पूर्वजशतसञ्चितं कनकम्, चतुर्दशशतानि दिव्यतुरङ्गमाणाम्, पञ्चसहस्राणि तेजस्वितुरङ्ग-माणाम्, अन्यदपि मणिमुक्ताफलादि । जितं जितमित्युद्घोषः समुच्छालितः । स्थितस्तत्र मासमेकम् । ततो वाजा–मानगजेन्द्र–चूडासमा–वालाकादिस्वामिनः प्रत्येकं गृहीतधनाः कृताः । द्वीपवेटपत्तनेषु प्रत्येकं बभ्राम । धनमकृशं मिलितम् । एवं सौराष्ट्रजयं कृत्वा समन्त्री राणो धवलक्कं प्राविक्षत् । उत्सवा उत्सवोपरि[13] प्रास्फुरन् ।

20 §१२३) तत्र प्रस्तावे चारणेन दोधकपादद्वयं पठितम्–

२६३. जीतउं छहिं उणेहिं, सांभली समहरि वाजियइ[14] ।

एतावदेव पुनः पुनरपाठीत्, नोत्तरार्द्धम् । गतश्चारणः स्वस्थानम् । तत्र राजवंश्याः षण्णां जनानां मध्ये आत्मीयं नाम न्यासयितुं रात्रौ तस्मै प्रत्येकं लक्षामदुः । सोऽपि समग्रहीत् । एवं ग्राहं ग्राहं परिपारिते, एकदा प्रातः सभायां बहुजनाकीर्णायां राणकाग्रे उत्तरार्द्धमप्यपाठीत् ।

25 बिहुं भुजि वीरतणेहिं चिहुं पगि ऊपरवटतणे ॥ २६ ॥

[इति श्रुत्वा*] सर्वेऽपि चमत्कृता राजन्यकाः । अहो ! प्रपञ्चेनानेनास्मान् वञ्चयित्वा निर्यासे तत्त्वमेवोक्तम् । पुनः सविशेषं ददुः [स्वामिभक्तत्वात्*] ।

§१२४) तदा भद्रेश्वरवेलाकूले भीमसिंहो नाम प्रतीहारस्तिष्ठति । स आत्मबली कस्याप्याज्ञां न मनुते[15]; धनी च । तस्मै वीरधवलो राजा आदेशमदीदपत्–सेवको भव । सोऽपि प्रत्यदीदपत्– 30 सेवको भव । 'यद्दीयते तल्लभ्यते' इति न्यायः । वीरधवलस्तद्विग्रहाय गूर्जरधराराजपुत्रानमेल-

---

1 A B समारूढयो० । 2 P ०कुले । 3 P देव्याह । 4 A च । 5 P नास्ति । 6 A B शल्यं । 7 P भीमः सन् । 8 P व्याचक्षे । 9 A C ०श्वारूढ । 10 P गृह्णीत. । 11 B आभिमुखौ, P असिमुखै । 12 P रणक्षेत्रे । 13 P उत्सवोपर्यपुस्फुरन् । 14 P वाजतइ । 15 P मन्यते ।

यत्, बहुसैन्यं च[1]। भीमसिंहोऽपि[2] बलेन प्रबलः। उभयपक्षेऽपि बलवत्ता।

§१२५) अत्रान्तरे जावालिपुरे चाहमानकुलतिलकः †श्रीअश्वराजशाखीयः केतूपुत्रसमरसिंहनन्दनः† श्रीउदयसिंहो नाम राजकुलो राज्यं भुनक्ति। तस्य दायादास्त्रयः सहोदराः सामन्तपाल–अनन्तपाल–त्रिलोकसिंहनामानो दातारः शूरास्तद्दत्तग्रासेन तृप्तिमदधतो धवलक्कमागत्य श्रीवीरधवलं द्वाःस्थेनावभाणन्–देव! वयममुकवंश्यास्त्रयः क्षत्रियाः सेवार्थिन[3] आगताः स्मः। यद्यादेशः स्यात् तदा आगच्छामः। राणकेनाहूतास्ते। तेज-आकृति-श्रमादिभिः शोभनाः। रुचितास्ते तस्य। परं पृष्टाः–को ग्रासो वः कल्पते?। ते प्रोचुः–देव! प्रतिपुरुषं लूणसापुरीयद्रम्माणां लक्षं लक्षं ग्रासः। राणकेनोक्तम्–इयता धनेन शतानि भटानां सङ्गच्छन्ते। किमधिकं यूयं करिष्यथ?। न दास्यामीयत्। इति कथयित्वा[4] ते वीटकदानपूर्वं विसृष्टाः। तदा मन्त्रिवस्तुपाल-तेजःपालाभ्यां विज्ञप्तम्–स्वामिन्! न एते मुच्यन्ते। पुरुषसङ्ग्रहाद् धनं न बहु मन्तव्यम्। 1

२६४. वाजि-वारण-लोहानां काष्ठ-पाषाण-वाससाम्। नारी-पुरुष-तोयानां अन्तरं महदन्तरम्॥ २७॥

एवं विज्ञप्तमपि राणकेन नावधारितम्। मुक्ता एव। ते गताः प्रतिभटतटं श्रीभीमसिंहं प्रतीहारम्। भेटितः सः[5]। उक्तो वीरधवलकृतः कार्पण्यव्यवहारः। तुष्टो भीमसिंहः। कृतं तदिष्टवृत्तिद्वैगुण्यम्। तैश्चोक्तम्–देव! शीघ्रमेव कथापय वीरधवलाय अस्मद्बलेन, यथा–यदि क्षत्रियोऽसि, तदा शीघ्रं युद्धायागच्छेः[6]। अन्यथा अस्मदीयो भूत्वा जीवेः। प्रेषितो भीमसिंहेन भट्टः। उक्तः समेत्य वीरधवलस्तत्। [एवं श्रुत्वा*] वीरधवलःससैन्यश्चलितः। भट्टं पुरः प्राहैषीत्। पञ्चग्रामग्रामे[7] युद्धमावयोः। तत्र क्षेत्रं कारयन्नस्मि। शीघ्रमागच्छेरित्याद्याख्यापयत्। सोऽपि तत्र ग्रामे समेतः [8]सबलः। सङ्घटितं सैन्यद्वयम्। वर्त्तन्ते [भटानां*] सिंहनादाः, नृत्यन्ति पात्राणि, दीयन्ते धनानि। [पूज्यन्ते शस्त्राणि, बध्यन्ते महावीराणां टोडराणि*] त्रिदिनं तैर्युद्धं प्रतिष्ठितम्। उत्कण्ठिता योद्धारः। 20

'नेदीयानिद्धबाहूनामाहवो हि महामहः।'

सङ्ग्रामदिनादर्वाग् मन्त्रिवस्तुपाल-तेजःपालाभ्यां स्वामी विज्ञप्तः–देव! त्रयो मारवाः सुभटास्त्वया न संगृहीतास्ते परबले मिलिताः। तद्बलेन भीमसिंहो निर्भीर्गर्जति, इति अवधार्यम्। चरैरपि निवेदितमेतन्नौ। राणकेनोक्तम्–यदस्ति तदस्तु। किं भयम्।

'जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः?।' 25

मन्त्रिणा ज्यायसोक्तम्–स्वामिन्! कार्मुककरे देवे के परे परोलक्षा अपि। [9]यदुक्तम्–

२६५. कालः केलिमलङ्करोतु करिणः क्रीडन्तु कान्तासखाः, कासारे [10]वनकासराः सरभसं गर्जन्त्विह स्वेच्छया।
अभ्यस्यन्तु भयोज्झिताश्च हरिणा भूयोऽपि झम्पागतिं, कान्तारान्तरसञ्चरव्यसनवान् यावन्न[11] कण्ठीरवः॥२८॥

कण्ठीरवे तु दृष्टे कुण्ठाः सर्वे वन्याः। अन्यच्च, प्रभो! अस्मदीयसैन्ये डोडीयावंशीयो जेहुलः, चौलुक्यः सोमवर्मा, [12]गुलकुल्यः क्षेत्रवर्माऽस्ति। देवस्तु किं वर्ण्यते कल्यर्जुनः। एवं वार्त्तासु वर्त्तमानासु द्वाःस्थ एत्य व्यजिज्ञपद्राणकम्–देव! पुरुष एको द्वारि वोऽस्ति। कस्तस्यादेशः?। 30

1–2 A नास्ति 'च' 'ऽपि'। † P पुस्तके नास्ति दण्डान्तर्गतः पाठः। 3 P सेवार्थिनराः। 4 E D नास्ति 'कथयित्वा'; A °दास्यामीत्युदिते। 5 P श्रीभीमसिंहप्रतीहारेण भेटितास्ते। 6 A युद्धायापत्तेः। * P विना नास्त्यन्यत्र। 7 P °ग्रामाग्रामे। 8 P समेतसैन्येन सबलः। 9 A नास्ति। 10 P बन। 11 A यावद्धि। 12 A गुणकुल्यः।

भूसंज्ञया राणकस्तममोचयत्। मध्यमागत्य स उवाच-देव! सामन्तपाल-अनन्तपाल-त्रिलोक-
सिंहैस्त्वत्त्यक्तैर्भीमसिंहमाश्रितैः कथापितमास्ते-देव! त्रिभिर्लक्षैर्ये भटास्त्वया स्थापिता भवन्ति,
तैरात्मानं सम्यग् रक्षेः। प्रातः कुमार्यामारेण्यां त्वामेव प्रथमतममेष्यामः। इति श्रुत्वा हृष्टेन
राणेन ससत्कारं स प्रैषि। कथापितं च-एते वयमागता एव प्रातर्भवद्भिरपि ढौक्यम्। सर्वेषामपि
तत्रैव ज्ञास्यते भुजसौष्ठवम्। गतः स तत्र। प्रातर्मिलितं बलद्वयम्। वादितानि रणतूर्याणि।
अङ्गेषु भटानां वर्माणि न ममुः। दत्तानि दानानि। तैस्तु त्रिभिर्मारवैरात्मीयं वर्षलभ्यं[1] द्रव्यलक्ष-
त्रयं भीमसिंहात्सद्यो लात्वाऽर्थिभ्यो ददे। स्वयमश्वेष्वारूढाः। प्रवर्त्तन्ते प्रहाराः। उत्थितमान्ध्यं
शस्त्रैः। पतन्ति शराः कृतान्तदूताभाः। आरूढं प्रहरमात्रमहः। सावधानो वीरधवलः। दत्ताव-
धाना मन्त्र्यादयस्तद्रक्षकाः। अत्रान्तरे आगतास्ते त्रयो मरुवीराः। भाषितः स्वमुखेन तैर्वीरध-
वलः-अयं देवः, इमे वयम्। सावधानीभूय रक्षाऽऽत्मानम्। त्वद्योधा अपि त्वां रक्षन्तु। वीरधवले-
नाप्युक्तम्-किमत्र विकत्थध्वे[2]। क्रिययैव दोःस्थाम प्रकाश्यताम्। एवमुक्तिप्रत्युक्तौ लग्नं युद्धम्।
यत्परेषु तटस्थेषु रक्षत्स्वपि तैर्भल्लत्रयं वीरधवलस्य भाले लिङ्गितम्[3]। एवं त्वां हन्मः, परं एकं
तव वीटकं तदा भक्षितमस्माभिः-इति वदद्भिस्तैरेव श्रीवीरधवलस्य तटस्थाः प्रहरणैः पातिताः।
तेऽपि त्रयो मारवाः [4]व्रणशतजर्जराङ्गाः सञ्जाताः। राणश्रीवीरधवल ऊपरवटाश्वात्पातितः।
ऊपरवटस्तैर्मारवैः स्वोत्तारके बन्धितः प्रच्छन्नः। रजसाऽन्धं जगत्। तदा राणश्रीवीरधवलो भुवि
पातितो भट्टैरुत्पाट्य लले। तावता पतिता सन्ध्या। निवृत्तं सैन्यद्वयम्। रात्रौ भीमसिंहीयाः
सुभटाः सर्वेऽपि वदन्ति-अस्माभिर्वीरधवलः पातितः। ततो मारवैरभिहितम्-युष्माभिः पातित
इति किमत्राभिज्ञानम्। तैरुक्तम्-किं भवद्भिः पातितः?। मारवैरभिदधे-अस्माभिरेव पातितः।
ऊपरवटो वदिष्यति। उत्तारकादानीय ऊपरवटो दर्शितः। तुष्टो भीमसिंहः। उक्तवांश्च-शुद्ध-
राजपुत्रेभ्यो दत्तं धनं शतधा फलति। इदमेव प्रमाणम्। 'रिपुहयहरणं क्षत्रियाणां महान्
शृङ्गारः'। एवं वार्त्ताः कुर्वतां भटानां रात्रिर्गता। प्रातर्वीरधवलो व्रणजर्जरोऽपि पट्टभूयाश्वान्
क्रीडितुं[5] प्रवृत्तः। भीमसिंहसैन्यहेरिकैर्गत्वा तज्ज्ञात्वा तत्रोक्तम्-वीरधवलः कुशली गर्जति।
[एवं सति[6]] यज्जानीथ तत्कुरुथ। अथ भीमसिंहाय तन्मन्त्रिभिर्विज्ञप्तम्-देव! अयं बद्धमूलो
देशेशः। अनेन विरोधो दुरायतिः। तस्मात्सन्धिः श्रेष्ठः। भीमसिंहेन मानितं तद्वचनम्[7]। परं
सङ्ग्रामाडम्बरः कृतः। अन्योऽन्यमपि यावद् [8]अङ्कितौ द्वौ, तावद् भट्टैरन्तरा [9]प्रविश्य मेलः कृतः।
ऊपरवटाश्वो राणाय दापितः। भीमसिंहेन भद्रेश्वरमात्रेण धृतिर्धरणीया, विरुदानि न पाठनी-
यानि; इति व्यवस्थाऽऽसीत्। एवं कृत्वा श्रीवीरधवलो दानं तन्वन् श्रीधवलक्ककमागात्। शनैः
शनैः प्राप्तपरमप्राणो भीमसिंहमपराध्यन्तं मूलादुच्छेद्य एकवीरां धरित्रीमकरोत्। [[10]एवं] धव-
लक्के राज्यं कुर्वतस्तस्य क्षुभितैः प्रभूतैः परराष्ट्रनृपतिभिः स्वं दत्तम्। तेन स्वेन सैन्यमेव
मेलितम्। चतुर्दशशतानि महाकुलानि राजवंश्यानां राजपुत्राणां मेलितानि। तानि समभोजन-
भोग-वसन-वाहनानि श्रीतेजःपालस्य सहचारिणीछायावत् समजीवितमरणत्वेन स्थितानि।
तद्बलेन सैन्यबलेन च स्वभुजाबलेन सर्वं जीयते।

---

1 ABD नास्ति पदमेतत्। 2 ABD विकत्थन (?)। 3 A लिखित। 4 A व्रणवात०। 5 A देवितुं। 6 P विनाऽन्यत्र नास्ति। 7 A तद्वचन मत। 8 A अङ्कुतौ, P मिलितौ। 9 P विनाऽन्यत्र नास्ति 'अन्तरा प्रविश्य'। 10 P विना नास्ति।

§१२६) इतश्च महीतटाख्यदेशे गोध्रा[1] नाम नगरम् । †यत्र तत्तत्कार्येषु सङ्ग्रामे मृतानां राजपुत्राणां एकोत्तरशतसंख्यानि स्वयंभूलिङ्गानि[2] उदभूवन्† । तत्र घूघुलो नाम मण्डलीकः । स गूर्ज्जरधरा-समागन्तुकसार्थान् गृह्णाति । राणश्रीवीरधवलस्याज्ञां न मन्यते । तस्मै मन्त्रिभ्यां वस्तुपाल-तेजः-पालाभ्यां भट्टः प्रेषितः—अस्मत्प्रभोराज्ञां मन्यस्व, अन्यथा साङ्गण-चामुण्डराजादीनां मध्ये मिल इति कथापितम् । तच्छ्रवणात् क्रुद्धेन तेन तेनैव भट्टेन सह स्वभट्टः प्रस्थापितः । तेनागत्य राणश्री-वीरधवलाय कज्जलगृहं शाटिका चेति द्वयं दत्तम् । उक्तं च—ममान्तःपुरं सर्वोऽपि राजलोक इति नः प्रभुणा ख्यापितमस्ति । राणेन स भट्टः सत्कृत्य प्रहितः । गतः स्वस्थानम् । राणेन भाषिताः [3]सर्वे निजभटाः[4]—घूघुलविग्रहाय बीटकं को ग्रहीष्यति ? । [5]कोऽपि नाद्रियते । तदा तेजःपालेन गृहीतम् । चलितः प्रौढसैन्यपरिच्छदः । गतस्तद्देशादर्वाग्भागे कियत्यामपि भुवि[6], स्थित्वा सैन्यं कियदपि, स्वल्पमग्रे प्रास्थापयत् । स्वयं महति मेलापके गुप्तस्तस्थौ । अल्पेन सैन्येनाग्रे गत्वा गोध्रागोकुलानि वालितानि । गोपालाः शरैस्ताडिताः । तैरन्तर्गोध्रकं पूत्कृतम्—गावो ह्रियन्ते कैश्चित् । क्षात्रं धर्म्मं पुरस्कृत्य ततो धावत धावत इति शब्दे श्रुते घूघुलो व्यचिन्तयत्[7]—नवीनमिदम्, केनास्मत्पद्रमागत्य गावो ह्रियन्ते ? ।

२६६. वृत्तिच्छेदविधौ द्विजातिमरणे स्वामिग्रहे गोग्रहे, सम्प्राप्ते शरणे कलत्रहरणे मित्रापदां वारणे ।
आर्त्तत्राणपरायणैकमनसां येषां न शस्त्रग्रह,-स्तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥ २९ ॥

इति वदन्नेव ससैनस्तुरङ्गममारूढः । जातोऽनुपदी[8] गोहर्त्तृणाम् । गोहर्त्तारोऽपि घूघुलाय दर्शनं ददते, शरान् सन्दधते, न च स्थित्वा युध्यन्ते । इत्येवं खेदयद्भिस्तैस्तावन्नीतो घूघुलो यावन्म-न्त्रिणो महति वृन्दे प्रविष्टः । ततो ज्ञातमीदृशं छद्मेदं मन्त्रिणः । भवतु तावत् घूघुलोऽस्मि । निजाः सुभटाः समराय प्रेरिताः । स्वयं सविशेषमभियोगं दधौ । ततो लग्नः संहर्त्तुम् । मन्त्रि-कटकेनापि[9] ढुढौके । चिरं रणरसरभसोऽभूत् । भग्नं घूघुलेन मन्त्रिकटकं कांदिशीकं दिशोदिशि गच्छति । तदा मन्त्रितेजःपालेन स्थिरमश्वस्थितेन तटस्थाः सप्तकुलीनाः शुद्धराजपुत्रा भाषिताः—अरिस्तावद्बली, आत्मीयं तु भग्नं सकलं बलम् । नष्टानामस्माकं का गतिः, किं यशः ? । [यशो[10] विना] जीवितव्यमपि नास्त्येव । तस्मात् कुर्मः समुचितम् । तैरपि सप्तभिस्तद्व-चोऽभिमतम् । व्याघुटिताऽष्टौ घ्नन्ति नाराचादिभिः परसेनाम् । तावन्मात्रं स्ववृन्दं सङ्घटितं दृष्ट्वा, अपरेऽपि सत्त्वं धृत्वा[11] वलिताः । तदा तेजःपाल एकत्र निजांसेऽम्बिकादेवीमपरत्र कपर्दियक्षं पश्यति । अतो जयं निश्चित्य प्रहरंस्तावद्ययौ यावद् घूघुलः । गत्वा भाषितः—हे मण्डलीक ! येनास्मन्नाथाय कज्जलगृहादि प्रहीयते तद् [12]भुजाबलं दर्शय । घूघुलोऽपि प्रत्याह—इदं तद् भुजाबलं पश्य—इत्युक्त्वा निबिडं युयुधे । द्वन्द्वयुद्धं मन्त्रि-मण्डलीकयोः सञ्जातम्[13] । अथ मन्त्री सहसा दैवतबल-भुजाबलाभ्यां तमश्वादपीपतत् । जीवन्तं बद्ध्वा काष्ठपञ्जरेऽचिक्षिपत् । स्वसेनान्तर्निनाय । स्वयं बहुपरिच्छदो गोध्रानगरं प्रविवेश । अश्वसहस्राणि चत्वारि, अष्टादश कोटीर्हेम्नां कोशम्, मूटकं शुद्धमुक्ताफलनाम्, दिव्यास्त्राणि, दिव्यवस्त्राणि इत्यादि[14] सर्वं जग्राह ।

---

1 P गोधिरा । † दण्डान्तर्गत पाठो नास्ति P पुस्तके । 2 ED स्वयं च लिंगानि, B स्वयं च लिंगितानि । 3 ABD स्वे सर्वे । 4 P विहाय नास्त्यन्यत्र, अग्रे 'उक्तं च' इत्यपि दृश्यतेऽधिकम् । 5 P परं कोऽपि । 6 A भुवं । 7 A विचिन्त-यति । 8 P गतोऽनुपदं । 9 A पृतनाऽपि । 10 P विहाय नास्त्यन्यत्र 'यशो विना' । 11 A अवलम्ब्य । 12 A सर्वत्र 'भुजबल' । 13 A B नास्ति । 14 P पुस्तक एव लभ्यते पदमिदम् ।

घूघुलस्थाने आत्मीयं सेवकं न्यास्थत्। वलितो मन्त्री गतो [†]धवलक्ककम्। दर्शितो घूघुलः श्रीवीरधवलाय। तत्कज्जलगृहं तद्गले बद्धं शाटिका च वण्ठैः परिधापिता। तदा घूघुलः स्वजिह्वां दन्तैः खण्डयित्वा मृतः। जातं वर्द्धापनं[†] धवलक्कके। श्रीवीरधवलेन महत्यां सभायामाकार्य श्रीतेजःपालः परिधापितः। प्रसादपदे स्वर्णं भूरि ददे। तदवसरे कवीश्वरसोमेश्वरे च दृक्
5 सञ्चारिता श्रीवीरधवलेन। ततः सोमेश्वरदेवः प्राह–

२६७. मार्गे कर्दमदुस्तरे जलभृते गर्त्ताशतैराकुले, खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोधसि।
शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनी,-मीदृक्षे गहने विहाय धवले वोढुं भरं कः क्षमः? ॥३०॥

विसृष्टा सभा। मिलितौ वस्तुपाल-तेजःपालावेकत्र। कृताः कथाश्चिरम्। तुष्टौ द्वौ मन्त्रयेते[1] स्म। [2]धर्म्मे एव धनमिदं पुण्यलब्धं व्ययनीयम्। ततः सविशेषं तथैव कुरुतः। ततः कविना
10 केनाप्युक्तम्–

२६८. पन्थानमेको न कदापि गच्छेदिति स्मृतिप्रोक्तमिव स्मरन्तौ।
तौ भ्रातरौ संसृतिमोहचौरे संभूय धर्मेऽध्वनि सम्प्रवृत्तौ ॥ ३१ ॥

§१२७) अथ श्रीवस्तुपालः शुभे मुहूर्त्ते स्तम्भतीर्थं गतः। तत्र मिलितं चातुर्वर्ण्यम्। दानेन तोषितं सर्वम्[3]। तत्र च [4]सदीकनामा नौवित्तको वसति[5]। स च सर्ववेलाकूलेषु प्रसरमाणवि-
15 भवो महाधनाढ्यो बद्धमूलोऽधिकारिणं नन्तुं नायाति। प्रत्युत तत्पार्श्वेऽधिकारिणा गन्तव्यम्। एवं बहुकालो गतः। पूर्वं मन्त्रीन्द्रस्तं भट्टेनोवाच–अस्मान्नन्तुं किमिति नागच्छसि?। स प्रति-वक्ति–न[6] नवेयं रीतिः, प्रागपि नागच्छामि। यत्तु स्यान्यूनं तव, तदा तत्पूरयामि स्थानस्थः। तत् श्रुत्वा मन्त्री रुष्टः कथापयामास–पुरुषो भूत्वा तिष्ठेः। शास्मि त्वां दुर्विनीतम्। ततस्तेन वडूआख्यवेलाकूलस्वामी राजपुत्रः, पञ्चाशद्धंशमध्यस्थखादिरमुशलस्य एकखड्गप्रहारेण[7] छेदने
20 प्रभुः, प्रभूतसैन्यत्वात् 'साहणसमुद्र' इति ख्यातः शंखाख्य उत्थापितः। तेन भाणितं मन्त्रिणे–मन्त्रिन्! मदीयमेकं नौवित्तकं न सहसे। मदीयं मित्रमसौ ज्ञेयः। तस्माद्वचनात् क्रुद्धो मन्त्री तं प्रत्यवोचत्[8]–श्मशानवासी भूतेभ्यो न बिभेति। त्वमेव प्रगुणो भूत्वा युधि तिष्ठेः। [इति श्रुत्वा*] सन्नद्धबद्धो [भूत्वा सोऽप्यागतः*] मन्त्री[9] वस्तुपालो[10]ऽपि धवलक्ककाद् भूरि सैन्यमानाय्याभ्यषेणयत्। रणक्षेत्रेऽढ्कितौ[11] द्वौ। [*प्रारब्धं रणम्*] शङ्खेन
25 निर्दलितं मन्त्रिसैन्यं पलायिष्ट दिशोदिशि। तदा श्रीवस्तुपालेन स्वस्य राजपुत्रो माहेचकनामा भाषितः–इदमस्मन्मूलघट्टं वर्तते[12]। त्वं[13] च वर्त्तसे। [अथ*] तत् कुरु येन श्रीवीरधवलो न लज्जते। ततोऽसौ राजपुत्रः स्वैरेव कतिपयैर्मित्रराजपुत्रैः सह तमभिगम्योवाच–हे शङ्ख! नेयं वडूआख्या तव ग्रामहट्टिका[14], क्षत्रियाणां सङ्ग्रामोऽयम्। शङ्खोऽप्याह–सुष्ठु वक्तुं वेत्सि। नायं तव प्रभोः [15]पट्टकिलपरिपन्थनप्रदेशः, किन्तु सुभटस्य क्रीडाक्षेत्रमिदम्। इत्येवं
30 वादैर्जाते द्वन्द्वरणे माहेचकेन[16] मन्त्रिणि पश्यति मन्त्रिप्रतापाच्छङ्खः पातितः। समरे जातो

† दण्डान्तर्गत पाठ पतित P पुस्तके। 1 AB मन्त्रयेतां। 2 AB तस्माद् धर्मे। 3 AB नास्ति। 4 P सैद०। 5 P पुस्तक एवेद पदम्। 6 P तव। 7 AB खड्गेन छेदने। 8 A प्रत्यवीवचत्। * P पुस्तक एव एते पाठाः प्राप्यन्ते। 9 P मन्त्रिणा। 10 P वस्तुपालेन। 11 P मिलितौ। 12 P नास्ति। 13 P त्वमेव। 14 P ग्रामसीम-आखेटक्रीडा किन्तु। 15 P पट्ट किल परिपन्थिन। 16 AB माहिचकेन।

जयजयकारः। मन्त्रिणा तद्राज्यं गृहीतम्। वेलाकूलनृपर्द्धीनां[1] न संख्या। ततः स्तम्भतीर्थमुत्तो-रणमुत्पताकमविशत्। ततो[2] मन्त्री प्रविष्टः [3]सदीकसदनम्। तस्य भटान् सप्तद्विगुण[4]शतानि सन्नद्धानि हत्वा तं जीवग्राहं जग्राह। विद्रवाणं तं कृपाणेन जघान। ततो गृहं तदीयमामूलचूल-खातपातितम्[5]। हेमटंकानां[6] संख्या न। तथा मणिमुक्ताफलपदकानाम्। [¶प्रमाणं केनापि न ज्ञातम्। केचिद् वृद्धा वदन्ति-तत्र तेजनतूरिकायाः करण्डश्चटितः श्रीमन्त्रीश्वरस्य¶।] आयातो मन्त्री स्वधवलगृहम्। तोषितः स्वस्वामी वीरः, परिग्रहलोकश्च। ततः [कवी-श्वराणां*] स्तुतिः-

२६९. श्रीवस्तुपाल प्रतिपक्षकाल! त्वया प्रपेदे पुरुषोत्तमत्वम्।
तीरेऽपि वार्द्धेरकृतेऽपि मात्स्ये रूपे पराजीयत येन शङ्खः ॥ ३२ ॥

२७०. तावल्लीलाकवलितसरित्तावदभ्रंलिहोर्मि,-स्तावत्तीव्रध्वनितमुखरस्तावदज्ञातसीमा।
तावत्प्रेङ्खत्कमठमकरव्यूहबन्धुः ससिन्धु,-र्लोपामुद्रासहचरकरक्रोडवर्त्ती न यावत् ॥ ३३ ॥

ततश्चोक्षवाटि[7]-नौवित्तकवाट्योः पार्थक्यं कृतम्।

§१२८) [मन्त्रिणा*] आ महाराष्ट्रेभ्यः साधिता भूः। वेलाकूलीयनरेन्द्राणां नरेन्द्रान्तरा-क्रम्यमाणानां मन्त्री प्रतिग्राहेण[8] सान्निध्यं कृत्वा जयश्रियमर्पयति। इति [कारणात्*] ते [तुष्टाः*] वोहित्थानि सारवस्तुपूर्णानि प्राभृते प्रहिण्वन्ति। अम्बिका-कपर्दिनौ निधानभुवं रात्रौ [समागत्य*] कथयतः। ते निधयो मन्त्रिणा खातं खातं गृह्यन्ते। [तद्भाग्यात्*] दुर्भिक्षस्य नामापि नाभूत्। विड्वराणि दूरे नष्टानि। मुद्गलबलानि [वारं वारं*] आगच्छन्ति जघ्निरे एकदा। पुनर्नाययुः। पल्लीवनेषु दुकूलानि नागोदराणि च वस्त्राणि। ग्रहीता कोऽपि न। ग्रामे ग्रामे [मण्डितानि*] सत्राणि। सत्रे सत्रे मिष्टान्नानि। [उपरि*] ताम्बूलानि [च। तत्र ग्लानार्थं*] वैद्याः [विविधाः प्रस्थापिताः। मन्त्रिव्यवस्थया*] दर्शनद्वेषो न; वर्णद्वेषो न। प्रतिवर्षं स्वदेशे सर्वनगरेषु तिस्रस्तिस्रः श्वेताम्बरेभ्यः प्रतिलाभनाः। शेषदर्शनानामग्रेऽभ्यर्चा[9]।

§१२९) मन्त्रिवस्तुपालस्य पत्न्यौ द्वे ललतादेवि-सोखूनाम्न्यौ कल्पवल्लि-कामधेनू इव। ललिता-देव्याः सुतो मन्त्रिजयन्तसिंहः सूहवदेविजानिः प्रत्यक्षचिन्तामणिः। तेजःपालदयिताऽनुपमाऽनु-पमैव। पठितं च कविना-

२७१. लक्ष्मीश्चला शिवा चण्डी, शची सापत्न्यदूषिता। गङ्गा न्यग्गामिनी वाणी, वाक् साराऽनुपमा ततः ॥३४॥

श्रीशत्रुञ्जयादिषु नन्दीश्वरेन्द्रमण्डपप्रभृतिकर्मस्थायाः प्रारम्भिषत। आरासणादिदलिकानि स्थलपथेन [जलपथेन[10]] च तत्र तत्र प्राप्यन्ते। [†तपसामुद्यापनानां च प्रकाशः।]

§१३०) एकदा तौ भ्रातरौ द्वावपि मन्त्रिपुरन्दरौ महर्द्धिसङ्घोपेतौ श्रीपार्श्वं नन्तुं स्तम्भनक-पुरमीयतुः। प्रथमदिने ससङ्घौ तौ श्रीपार्श्वस्य पुरः श्रावकश्रेणिपुरःसरौ स्थितौ। [तदा*] गीत-[गान*] रासादि [महारसः प्र*] वर्त्तते। [तदवसरे तत्रत्य*] सङ्घोपरोधात् तत्रत्याध्यक्षाः सूरयो मल्लवादिनः समाकारिताः। ते यावद्देवगृहं प्रविशन्ति तावत् पठन्ति[11]-

---

1 AB वेलाकूलर्द्धीनां। 2 AB नास्ति 'ततो मंत्री'। 3 P सैद०। 4 P ०गुणित०। 5 P ०चूल खानितं पातितं च। 6 P हेमेष्टिकानां। ¶ P पुस्तक एवैषा पंक्तिः प्राप्यते। * कोष्ठकगताः पाठाः P पुस्तक एव लभ्यन्ते। 7 A चोक्षपवाटि०। 8 P प्रतिग्रहप्रेषणेन। 9 A ०दर्शनानामप्यर्चा। 10 A नास्ति पदमिदम्। † P पुस्तके नास्ति वाक्यमिदम्। 11 P तावत्तैरेव पाठितम्।

२७२. अस्मिन्नसारे संसारे सारं सारङ्गलोचनाः ।

मन्त्रिभ्यां श्रुतं चिन्तितं च–अहो! मठपतिर्गृहवद्देवगृहेऽपि शृङ्गाराङ्गारगर्भं पद्यं प्रस्तौति[1]। देवनमस्कारादिकमुचितमिह, तन्नाधीते[2]। तस्माददृष्टव्योऽसौ। उपविष्टः सूरिः सः। अन्येऽपि सूरयः शतशः पङ्क्तौ निषण्णाः। मङ्गलदीपान्तेऽपरसूरिभिर्मल्लवादिन एवाशीर्वादाय प्रेरिताः। मन्त्री 5 पुरस्तिष्ठति। 'अस्मिन्नसारे संसारे' इत्यादि पादद्वयं भणितं तैः। [व्याख्यातं च तदेव*] मन्त्री हस्तेन वन्दित्वा विरक्तो गतः स्वोत्तारकम्। एवं दिनाः ८ [स एव*] पद्यार्द्धपाठश्च [०चक्रे। नवनवभङ्ग्या व्याख्यातः*] मन्त्र्यवज्ञा[3] चारोहत्प्रकर्षे। अष्टम्यां रात्रौ मन्त्री मुत्कलापनिकां कर्त्तुं देवरङ्गमण्डपे निविष्टः। पुरो धनबदरकाः[4]। कोऽपि कविराह–

२७३. श्रीवस्तुपाल! तव भालतले जिनाज्ञा, वाणी मुखे हृदि कृपा करपल्लवे श्रीः।
10 देहे द्युतिर्विलसतीति रुषेव कीर्त्तिः, पैतामहं सपदि धाम जगाम नाम ॥ ३५ ॥

अपरस्तु–

२७४. अनिस्सरन्तीमपि गेहगर्भात्, कीर्त्तिं परेषामसतीं वदन्ति।
स्वैरं भ्रमन्तीमपि वस्तुपाल!, त्वत्कीर्त्तिमाहुः कवयः सतीं तु ॥ ३६ ॥

इतरस्तु[5]–

15 २७५. सेयं समुद्रवसना तव दानकीर्त्ति,-पूरोत्तरीयपिहिताऽवयवा समन्तात्।
अद्यापि कर्णविकलेति न लक्ष्यते यत्, तन्नाद्भुतं सचिवपुङ्गव! वस्तुपाल! ‡॥ ३७ ॥

कश्चित्तु–

२७६. क्रमेण मन्दीकृतकर्णशक्तिः, प्रकाशयन्ती च वलिस्वभावम्।
कैर्नानुभूता सशिरःप्रकम्पं, जरेव दत्तिस्तव वस्तुपाल! ॥ ३८ ॥

20 तेभ्यः कविभ्यः सहस्रलक्षाणि ददिरे। एवं गायनभट्टादिभ्योऽपि। यावज्जातं प्रातरिव, तदा मल्लवादिभिः स्वसेवकाश्चैत्यद्वारद्वयेऽपि नियुक्ताः। एकं द्वारमन्यदिशि, एकं च मठदिशि। उक्तं च[6] तेभ्यः–मन्त्री चैत्यान्निःसरन् ज्ञापनीयः। क्षणेन वस्तुपालो मठद्वारान्निर्गच्छति [यावत्*] तावता सेवकज्ञापिताः सूरयः समागत्य सम्मुखाः स्थिताः। मन्त्रिणा रीढया [7]भ्रूप्रणाम इव कृतः। आचार्यैरभिहितम्–

25 दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति।

विजीयताम्; तीर्थानि पूज्यन्ताम्। मन्त्री कौतुकात्तथैव तस्थौ, किंपर्यवसानेयं प्रस्तावनेति ध्यानात्; ऊचे च–न विद्मः परमार्थं किमेतदभिदध्वे। आचार्यैरुक्तम्–पुरो गम्यताम्, पुरोगम्यताम्। भवतां कार्याणि भूयांसि। मन्त्री सविशेषं पृच्छति। सूरयो वदन्ति–सचिवेन्द्र! श्रूयताम्–

§१३१) मरुग्रामे कचित् ग्रामाराः स्थूलबहुला लोमशाः पशवो वसन्ति। पर्षदि निषीदन्ति। 30 कपोलझल्लरीं वादयन्ति। तत्रैकदा वेलाकूलीयचरः पान्थ आगमत्। नवीन इति कृत्वा ग्राम्यै-

---

1 P पदद्वय कथयन्नस्तीति। 2 P तत्किं नाधीते। 3 A मन्त्र्यवज्ञातविचारोहत्प्रकर्षे, B मन्त्र्यज्ञात चारो०, DE मन्त्र्यज्ञानं चा०। 4 P बदरकाणा राशय। ‡ P पुस्तके नोपलभ्यते पद्यमिदम्। 5 P पुन कश्चिदूचु। 6 P चास्ति। 7 P प्रभुप्रणाम।

राहूतः । पृष्टः–त्वं कः? कुत्रत्यः[1]? । तेनोक्तम्–अहं समुद्रतटेऽवात्सम् । पान्थः, पुरो यामि । तैः पृष्टम्–समुद्रः केन खानितः? । तेनोचे–स्वयंभूः सः । पुनस्तैः पृष्टम्–कियान् सः? । पान्थेनोक्तम् अलब्धपारः । किं तत्रास्ते[2]?–इति पृष्टे पुनस्तेनाचख्ये–

२७७. ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी,
मुक्तौघाः सिकताः प्रवाललतिकाः सेवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नाम्नाऽपि रत्नाकरः,

इति पादत्रयं पठित्वा व्याख्याय पुरो गतः पान्थः । तेषु ग्राम्येष्वेकः सकौतुकः पृच्छन् पृच्छन् समुद्रतटमगात् । दृष्टः कल्लोलमालाचुम्बितगगनाग्रः समुद्रः । तुष्टः सः । अचिन्तयच्च– [इतो*] ऋद्धयः सर्वा लप्स्यन्ते । प्रथमं तृषितः सलिलं पिबामि । [इति मत्वा] पीतं तत् । दग्धः कोष्ठः । ततः पठति[3]–

दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ ३९ ॥

२७८. [4]वरि वियरा जहिं[5] जणु पियइ [6]घुट्टुघुट्ट [7]चुलुएहिं । सायरि अत्थि वहुत्तु[8] जलु छि[9] खारा[10] किं तेण ॥ ४० ॥

तैरेव पदैर्नष्टः स्वास्पदं गतः । तथा वयमपि स्मः । मन्त्रिणोक्तम्–कथं तथा यूयं यथा स ग्राम्यः? । सूरयस्तारमूचुः–महामात्य! वयमत्र श्रीपार्श्वनाथसेवकाः, त्रैविद्यविदः, सर्वर्द्धयः [अत्रस्थाः*] शृणुमः । यथा–धवलक्कके श्रीवस्तुपालो मन्त्री सरस्वतीकण्ठाभरणो भारतीप्रतिपन्नपुत्रो विद्वज्जनमधुकरसहकारः सारासारविचारवेद्यास्ते इति । तदुत्कण्ठितास्तत्रागन्तुम् । ईश्वरत्वाच्च न गच्छामः क्वापि । [पुनश्चिन्तितं च*] कदाचिद्, अत्र तीर्थमियेता[11] मन्त्री, तस्य पुरो वक्ष्यामः स्वैरं सूक्तानि । इति ध्यायतामस्माकं मन्त्रिमिश्रा [12]अत्रागताः । यावत्पश्यते किमपि ताव- [13]दसत्सम्भावनयाऽवज्ञापरा यूयं स्थिताः । ततः किं पश्यते? । गच्छत गच्छत; उत्सूरं भवति । मन्त्री प्राह–मम मन्तुः[14] क्षम्यताम्; किमेतत्पठितुमारेभे भवद्भिः? । आचार्या जगदुः–देव! यदा युवां सबान्धवौ श्रावकश्रेण्यग्रे राजराजेश्वरौ दिव्यभूषणौ, श्रावकाश्च धनाढ्या दृष्टाः, गीताद्युच्छ्रयश्च । तदा एतन्नश्चित्ते बभूव–जगति स्त्रीजातिरेव धन्या । यद्भुवो[15] जिन–चक्रयर्द्धचक्रि–नल–कर्ण–युधिष्ठिर–विक्रम–सातवाहनादयो जाताः । सम्प्रत्यपि ईदृशाः सन्ति । तस्मात् श्रीसाम्ब–श्रीशान्ति[16]–ब्रह्मणाग–आमदत्त–नागडवंश्यश्रीआभूनन्दिनी [17]कुमारदेवी श्लाघ्या । यया एतौ कलियुगमहान्धकारमज्जज्जिनधर्मप्रकाशनप्रदीपौ ईदृशौ नन्दनौ जातौ । इत्येवं चिन्तयतामस्माकं 2 पद्यपादत्रयं वदनादुद्गतम् । जिननमस्कारादि विस्मृतम् । पश्चार्द्धं तु शृणुत[18]–

यत्कुक्षिप्रभवा एते वस्तुपाल! भवादृशाः ॥ ४१ ॥

सविस्तरतरं व्याख्यानं कृतम् । लज्जितः[19] सचिवेन्द्रः । पदोर्लगित्वा सूरीन् क्षमयित्वा [चलितः*] क्रोशान्ते ग्राम एक आगात् । तत्र स्नातभुक्तविलिप्तः [तदनु*] स्वं भृत्यं सचिवमेकमाकार्य आदिक्षत्–इयं वाहिनी हेमसहस्रदशकबदरकयुक् सूरिभ्यो मठे देयाः । गतो मन्त्रिसेवकस्तत्र । 3 भापिताः सूरयः–मन्त्रिदत्तमिदमवधार्यताम् । आचार्यैर्दृष्टम् । अश्वमारुह्य भटशतोल्लालितकृपा-

---

1 P कत्यः । 2 P तत्रास्ति । * कोष्ठकगताः पाठाः P पुस्तक एव दृश्यन्ते । 3 P तेन पठति इति । 4 P वर । 5 P जिहिं । 6 P वट्ट घट्ट, B घुटुग्घुटु । 7 P जलुएहिं, P चलुएहिं । 8 P वहुत; B वहुय । 9 P छइ । 10 P खारु । 11 P तीर्थनत्यै एताऽत्र । 12 PB अभ्यागताः । 13 ABE ०दसम्भावन० । 14 P अपराधः । 15 P यद्गर्भे । 16 A नास्ति 'श्रीशान्ति' । 17 P कुमरा० । 18 A शृणु तत् । 19 A जिह्माय ।

णजलप्लावितरवास्तत्र गताः, यत्र श्रीवस्तुपालः । उदितश्च तैः–मन्त्रिन् ! किमहमुचितभाषी, किं[1] चारणः, किं बन्दी, किं नु[2] सर्वसिद्धान्तपारगः सम्यग् जैनः सूरिः[3] ? । मया मनःप्रमोदेन यद् व उपश्लोकनमुक्तं तन्मूल्यभूतामिमां वो दत्तिं कथं गृह्णामि । न मयेदं वित्तायाभिहितम् । किन्त्विदं अन्तर्मनसं ध्यात्वा [भणितं*] यथाऽद्यापि जयति जिनपतिमतम् [तीर्थकृद्वारकसदृशं
5 एवंविधैः पुरुषरत्नैः*] । धनं न गृह्णाम्येव । मन्त्री[4] प्राह–भवन्तो निःस्पृहत्वान्न गृह्णन्ति, वयं तु दत्तत्वान्न प्रतिगृह्णीमः; तर्हि कथमनेन हेम्ना भवितव्यमिति शिक्षां दत्त । ततः सूरिभिर्जगदे[5] जगदेकदानी मन्त्री–मन्त्रिन् ! स्वगृहाय सम्प्रति गंस्यते भवद्भिस्तीर्थाय कस्मैचिद्वा ? । मन्त्री आह– प्रभो ! श्रीसुव्रततीर्थवन्दनार्थं गच्छन्तः स्मः । आचार्याः प्राहुः–तर्हि लब्ध[6] एतद्हेमव्ययोपायः । तत्र लेप्यमयी प्रतिमाऽऽस्ते । तत्र स्नात्रसुखासिका न पूर्यते श्रावकाणाम् । तस्मादनेन राया
10 रीरीहेममयीं[7] स्नात्रप्रतिमां निर्मापयत । मन्त्रिणोर्ध्वनितं मनः । तत्तथैव [8]च कृतम् । ततः समायातः स्वसदनं गूर्जरेन्द्रमन्त्री ।

§ १३२) अन्येद्युरादर्शे प्रातर्वदनं पश्यता सचिवेन पलितमेकमालोकि, अपाठि च–

२७९. अधीता न कला काचित् न च किञ्चित्कृतं तपः । दत्तं न किञ्चित्पात्रेभ्यो गतं च मधुरं वयः ॥ ४२ ॥

२८०. आयुर्यौवनवित्तेषु स्मृतिशेषेषु या मतिः । सैव चेज्जायते पूर्वं न दूरे परमं पदम् ॥ ४३ ॥

15 २८१. आरोहन्ती शिरःस्थान्तादौन्नत्यं तनुते जरा । शिरसः स्थान्तमायान्ती दिशते नीचतां पुनः ॥ ४४ ॥

२८२. लोकः पृच्छति मे वार्त्तां शरीरे कुशलं तव । कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ ४५ ॥

ततोऽधिकं जिनधर्मे रेमे ।

§ १३३) अथैकदा द्वावपि भ्रातरौ राणश्रीवीरधवलं व्यजिज्ञपताम्–देव ! देवपादैरियं गूर्जरधरा साधिता, राष्ट्रान्तराणि करदानि कृतानि[9] । यद्यादेशः स्यात् तदा राज्याभिषेकोत्सवः क्रियते ।
20 राणकेनोक्तम्–मन्त्रिणौ ! ऋजू भक्तिजडौ युवाम् ।

२८३. अजित्वा साऽर्णवामुर्वीमनिष्ट्वा विविधैर्मखैः । अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ ४६ ॥

ततो राणकमात्रत्वमेवास्तु । इत्युक्त्वा व्यसृजत्तौ ।

§ १३४) एकदा मन्त्रिभ्यां श्रीसोमेश्वरादिकविभ्यो विपुला वृत्तिः कृता भूम्यादिदानैः । ततः पठितं सोमेश्वरेण–

25 २८४. सूत्रे वृत्तिः कृता पूर्वं दुर्गसिंहेन धीमता । विसूत्रे तु कृता तेषां[10] वस्तुपालेन मन्त्रिणा ॥ ४७ ॥

§ १३५) श्रीवीरधवलोऽपि सेवकान् सुष्ठु पदवीमारोपयन् जगत्प्रियोऽभूत् । किमुच्यते तस्य । पश्यत–श्रीवीरधवलो ग्रीष्मे चन्द्रशालायां सुप्तोऽस्ति । वण्ठश्चरणौ चम्पयत्येकः । राणकः पटी-पिहितवदनो जाग्रदपि वण्ठेन सुप्तो[11] मेने । ततश्चरणाङ्गुलिस्था रत्नाङ्का मुद्रा जगृहे, मुखे च चिक्षिपे । राणकेन किमपि नोक्तम् । उत्थितो राणः । भाण्डागारिकपार्श्वाद् गृहीत्वाऽन्या मुद्रा
30 तादृगेव पादाङ्गुलौ स्थापिता । द्वितीयदिने पुना राणकस्तत्रैव [12]चन्द्रशालायां प्रसुप्तः । वण्ठश्चरणौ

1 P कि वा । 2 AB तु । 3 P जैनसूरि । * P पुस्तक एवेद दृश्यते । 4 A मन्त्र्यप्याह । 5 P जगदेकदानवीर '। 6 P इद । 7 P तस्मादनेन हेममयीं । 8 'च' नास्ति P । 9 A नास्ति पदमिदम् । 10 P अस्माक । 11 A सुप्त इति । 12 P शालायां ।

[1]चम्पयति। राणस्तथैव[2] पटीस्थगितवदनोऽस्ति। वण्ठः पुनः पुनः मुद्रामालोकते। अहो! प्राक्तनी चेयम्। ततो राणेन्द्रः प्राह–भो वण्ठ! इमां तु मुद्रां मा ग्रहीः। या कल्ये गृहीता सा गृहीता। एतद्वचनाकर्णेन एव वण्ठो भीत्या वज्राहत इवास्थात्। यतः–

२८५. हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः। स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः॥ ४८॥

तां तस्य दीनतां दृष्ट्वा राणकेन भणितम्–वत्स! मा भैषीः। अस्माकमेवायं कार्पण्य[3]दोषो येन तेऽल्पा वृत्तिः। इच्छा न पूर्य्यते। ततो बह्वपाये चौर्ये बुद्धिः। अतः परं हय आरोहाय दीयमानोऽस्ति, लक्षार्द्धं वृत्तौ। इत्याश्वासितः सः। अतो वीरधवलः क्षमापरत्वाज्जगद्वल्लभः सेवकसदाफलत्वेन पप्रथे। स सहजदयार्द्र इति[4] मन्त्रिभ्यां रहः[5] कथान्तरे शान्तिपर्वणि श्रीद्वैपायनोक्तभीष्म-युधिष्ठिरोपदेशद्वाराऽऽयातं द्वैपायनोक्तद्वात्रिंशदधिकारमयेतिहासशास्त्रीयाष्टाविंशाधिकारस्थं शिवपुराणमध्यगतं च मांसपरिहारं व्याख्याय व्याख्याय प्रायो मांस–मद्य–मृगयाविमुखकृतः। पुनर्मलधारिश्रीदेवप्रभसूरिसविधे व्याख्यां श्रावं श्रावं सविशेषं तेन तत्त्वपरिमलितमतिर्विरचितः।

§१३६) अन्येद्युर्वस्तुपालो ब्राह्मे मुहूर्त्ते विमृशति–यद्यर्हद्यात्रा विस्तरेण क्रियते तदा श्रीः फलवती भवेत्।

२८६. *श्रीणां स्त्रीणां च ये वश्यास्तेऽवश्यं पुरुषाधमाः। स्त्रियः श्रियश्च यद्वश्यास्तेऽवश्यं पुरुषोत्तमाः॥ ४९॥

२८७. †वञ्चयित्वा जनानेतान् सुकृतं गृह्यते श्रिया। तत्ततो गृह्यते येन स तु धूर्तधुरन्धरः॥ ५०॥

२८८. नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः। तान् धूलिधावकेभ्योऽपि मन्ये मूढतरान् नरान्॥ ५१॥

इत्यादि विमृश्य तेजःपालेन नित्यभक्तेन सामत्यं कृत्वा मलधारिश्रीनरचन्द्रसूरिपादानपृच्छत्–भगवन्! या मे चिन्ताऽधुना [वर्त्तते*] सा निष्प्रत्यूहं सेत्स्यति?। प्रभुभिः शास्त्रज्ञकिरीटैरुक्तम्–जिनयात्राचिन्ता वर्त्तते, सा सेत्स्यति। वस्तुपालेन गदितम्–तर्हि देवालये वासक्षेपः क्रियताम्। तदा श्रीनरचन्द्रसूरयः प्राहुः–मन्त्रीश! वयं ते मातृपक्षे गुरवः, न पितृपक्षे। पितृपक्षे तु नागेन्द्रगच्छीयाः श्रीअमरचन्द्रसूरि-श्रीमहेन्द्रसूरिपदे-श्रीविजयसेनसूरय उदप्रभसूरिसञ्ज्ञकशिष्ययुजो विशालगच्छाः पील्हुआईदेशे वर्तन्ते। ते वासनिक्षेपं कुर्वन्तु [परं*] न वयम्। यदुक्तम्–

२८९. जा जस्स ठिई जा जस्स संतई पुव्वपुरिसकयमेरा। कंठट्ठिए वि जीए सा केण[7] न लंघियव्व त्ति॥ ५२॥

अथ मन्त्र्याह–अस्माभिर्भवदन्तिके त्रैविद्य-षडावश्यक-कर्मप्रकृत्याद्यधीतम्। यूयमेव गुरवः। प्रभुभिरुक्तम्–नैवं वाच्यम्, लोभपिशाचप्रवेशप्रसङ्गात्। ततो मन्त्रिभ्यां मरुदेशाद् गुरवः शीघ्रमानायिताः। मुहूर्तप्रतिष्ठा देवालयप्रस्थापनं वासनिक्षेपणं कुलगुरुभिः कृतम्। साधर्मिकवात्सल्यं शान्तिकं मारिवारणं स्वामिपूजनं लोकरञ्जनं चैत्यपरिपाटीपर्यटनं च विहितम्। अथ प्रतिलाभना। तत्र मिलिताः कवीश्वराः[8], नरेश्वराः, सङ्घेश्वराः। दत्तानि कौशेयकटककुण्डलहारादीनि लोकेभ्यः। यतिपतिभ्यस्तु तदुचितानि वस्त्र-कम्बल-भोज्यादीनि। तदा श्रीनरचन्द्र-[सूरिभिः] सङ्घानुज्ञातैर्व्याख्या कृता–

1 P चरणौ स एव चम्पयति। 2 AB नास्ति 'तथैव'। 3 P कार्पण्यजो। 4 P इति कारणात्। 5 P इह। * P विहायान्यत्र नोपलभ्यते पद्यमिदम्। † P पुस्तके नोपलभ्यत इदं पद्यम्। 7 AB तेण। 8 A नास्ति।

२९०. चौलुक्यः परमार्हतो नृपशतस्वामी जिनेन्द्राज्ञया, निर्ग्रन्थाय जनाय दानमनघं न प्राप जानन्नपि ।
स प्राप्तस्त्रिदिवं स्वचारुचरितैः सत्पात्रदानेच्छया, त्वद्रूपोऽवततार गूर्जरभुवि श्रीवस्तुपालो ध्रुवम् ॥ ५३ ॥

ध्वनितः सङ्कः[1] । अथ चलितः सुशकुनैः सङ्घः । मार्गे सप्तक्षेत्राण्युद्धरन् श्रीवर्द्धमानपुरासन्नमावासितः ।

5 § १३७) तदा [वर्द्धमानपुरमध्ये*] बहुजनमान्यः श्रीमान् रत्ननामा श्रावको वसति । तद्गेहे दक्षिणावर्त्तः शङ्खः पूज्यते । स रात्रौ करण्डान्निर्गत्य स्निग्धगम्भीरं घुमघुमायते नृत्यति च । तत्प्रभावात्तस्य[2] गृहे चतुरङ्गा लक्ष्मीः । शङ्खेन रात्रौ रत्न आलेपे–तव गृहेऽहं चिरमस्थाम् । इदानीं तव पुण्यमल्पम् । मां श्रीवस्तुपालपुरुषोत्तमकरपङ्कजप्रणयिनं कुरु । सत्पात्रे मद्दानात् त्वमपीह परत्र च सुखी भवेः । [तस्याभिप्रायं*] व्यक्तं तज्ज्ञात्वा रत्नो विपुलसामग्र्याऽभिमुखो गत्वा 10 मन्त्रीशं [ससङ्घं निमन्त्र्य*] स्वगृहे बहुपरिकरं भोजयित्वा परिधाप्योचे–एवमेवं शङ्खादेशो मे । गृहाणेमम् । मन्त्र्याह–न वयं परधनार्थिनः । [3]पिशुनाच्छङ्खसत्तां ज्ञात्वा तं ग्रहीष्यति स्वयं मन्त्री, तस्मात् स्वयमेव ददामि–इत्यपि मा शङ्किष्ठाः, निर्लोभत्वादस्माकमस्मत्प्रभूणां च । इत्युक्त्वा विरते मन्त्रिणि रत्नेन गदितम्–देव ! मद्गृहावस्थानमस्मै न रोचते । ततः किं क्रियते ?, गृहाणैव । ततो गृहीतो मन्त्रिणा शङ्खः । तत्प्रभावोऽनन्तः ।

15 § १३८) शनैः शनैः सङ्घः श्रीशत्रुञ्जयतलहट्टिकां[4] प्राप्तः । तत्र ललितासरः प्रासादादिकीर्त्तनानि पश्यन् प्रमुदितः ससङ्घः सचिवः । आरूढः शत्रुञ्जयाद्रिं विवेकं च भावं च । तत्र मन्त्री प्रथमं ऋषभं वन्दते । तदा काव्यपाठः–

२९१. आस्यं कस्य न वीक्षितं क्व न कृता सेवा न के वा स्तुताः, तृष्णापूरपराहतेन विहिता केषां च नाभ्यर्थना ।
तत् त्रातः ! विमलाद्रिनन्दनवनीकल्पैककल्पद्रुम !, त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे ॥५४॥

20 अथावारितसत्र-मेरुध्वजारोपणेन्द्रपदार्थिरञ्जनादीनि कर्त्तव्यानि विहितानि । देवेभ्यो हैमानि [5]आरात्रिकतिलकादीनि दत्तानि । कुङ्कुमकर्पूरागुरुमृगमदचन्दनकुसुमपरिमलमिलदलिकुलझङ्कारभारपूरितमिव गगनमभवत् । गीत-रासध्वनिभिर्दिक्कुहराणि[6] अभ्रियन्त । पूर्वं मन्त्रिश्रीउदयनदत्ता देवदायाः सर्वेऽपि सविशेषाः कृताः । देवद्रव्यनाशनिषेधार्थं चत्वारि श्रावककुलानि अद्रौ मुक्तानि । अनुपमा दानाधिकारिणी [कृताऽस्ति*] । तस्याः साधुभ्यो दानानि ददत्याः किल महति 25 वृन्दे पतता घृतकडहट्टकेन क्षौमाण्यभ्यक्तानि । तदा[7] याष्टिकेन कडहट्टभृते साधवे यष्टिप्रहारलेशो दत्तः । मन्त्रिण्या देशनिर्वासनं समादिष्टम् । [भणितं च–*] रे न वेत्सि ! यद्यहं तैलिकपत्नी कान्दविकी[8] वाऽभविष्यम्, तदा प्रतिपदं तैलघृताभिष्वङ्गान्मलिनान्येव वासांस्यभविष्यन् । एवं तु वस्त्राभ्यङ्गो [भाग्यलभ्यः*] दर्शनप्रसादादेव स्यात् । य इदं न मन्यते तेन नः कार्यमेव न इत्युक्तं च । अहो ! दर्शनभक्तिरिति ध्वनितं सर्वम् ।

30 § १३९) एकदा मन्त्रीश्वरो नाभेयपुर आरात्रिके स्थितोऽस्ति दिव्यधवलवासाश्चान्दनतिलको दिव्यपदकहारभूषितोरस्थलः । सूरीणां कवीनां श्रावक-श्राविकाणां च नतिः । तिलकं तिलकोपरि । पुष्पस्रक् पुष्पस्रगुपरि । तदा सूत्रधारेणैकेन दारवी कुमारदेव्या मातुर्मूर्त्तिर्महन्तकायनवीनघटिता

1 P ससङ्घो मन्त्री । * कोष्ठकगता पाठा P पुस्तक एव प्राप्यन्ते । 2 A रत्नस्य । 3 A पिशुनाः । 4 A ०हट्टिकायामाप । 5 P आभरणानि तिल० । 6 A दिक्षु अन्तराणि । 7 A तदयोयष्टीकेन । 8 P कान्दविकपत्नी ।

दृष्टौ कृता । उक्तं च तेन–मातुर्मूर्त्तिरियम् । तदा मन्त्रीश्वरेणाशिखानखं दृष्टा मूर्त्तिः । दृष्ट्वा रुदितं च[1] प्रथममश्रुमात्रम्, ततो व्यक्तेतरो ध्वनिः, ततो व्यक्ततरः । सर्वे तटस्थाः पृच्छन्ति–देव ! किं कारणं रुद्यते ? । हर्षस्थाने को विषादः ? । [यथा*] श्रुतशील उद्धव इव विष्णोः, अभय इव श्रेणिकस्य, कल्पक इव नन्दस्य, जाम्बक इव वनराजस्य, आलिग इव सिद्धराजस्य, उदयन इव कुमारपालस्य [तथा*] त्वं मन्त्री वीरधवलस्य । विपद्भीताः पर्वता इव सागरं [तथा*] त्वामाश्रयन्ति भूपाः । तार्क्ष्येणेव पन्नगाः [तथा*] त्वया हताः सपत्नाः पृथिवीपालाः । चन्द्राय इव चकोराः [तथा*] तुभ्यं स्पृहयन्ति स्वजनाः । हिमवत इव गङ्गा [तथा*] त्वत्प्रभवा[2] राजनीतिः । भानोरिव पद्माः [तथा*] तवोदयमीहन्ते सूरयः । विष्णाविव रमते त्वयि श्रीः । तन्नास्ति यन्न[3] ते [एवं सति किमर्थं दुःखं ध्रियते ?*] ततो मन्त्रिणोक्तम्–इदं दुःखं यन्मे [4]भाग्य-सङ्घाधिपत्यादि विभूतिर्मातृमरणादनन्तरं सम्पन्ना । यदि तु सा मे माता इदानीं स्यात्, तदा स्वहस्तेन मङ्गलानि कुर्वत्यास्तस्या मम च मङ्गलानि कारयतः पश्यतश्च लोकस्य कियत्सुखं भवेत् । परं किं कुर्मो धात्रा हताः स्मः [एकैकन्यूनीकरणेन*] । ततः[5] श्रीनरचन्द्रसूरिभिर्मलधारिभिरभिहितम्–मन्त्रीश्वर ! यथा त्वं सचिवेषु तथाऽत्र देशे प्रधानं राजसु सिद्धराजो व्यजयत[6] । स मालवेन्द्रं जित्वा पत्तनमागतो मङ्गलेषु क्रियमाणेष्वपाठीद् यथा–

२९२. मा स्म सीमन्तिनी कापि जनयेत् सुतमीदृशम् । बृहद्भाग्यफलं यस्य मृतमातुरनन्तरम् ॥ ५५ ॥

तस्मात् [हृदयमधःकृत्वा स्थीयते विवेकिभिः*] न सर्वेऽपि नृणां मनोरथाः प्रपूर्यन्ते । [इत्याद्युक्त्वा मन्त्री बलादारात्रिकमङ्गलदीपादिकारितः । ततो चैत्यवन्दना गुरुवन्दनं च । तदा*] श्रीनरचन्द्रसूरिभिराशीर्दत्ता–

२९३. तवोपकुर्वतो धर्मं तस्य त्वामुपकुर्वतः । वस्तुपाल ! द्वयोरस्तु युक्त एव समागमः ॥ ५६ ॥

इत्यादि[7] । अथ रात्रौ तन्मयतया नाभेयपूजाध्यानदानपूजाः[8] । तदा कवयः पठन्ति ।

एकः कश्चित्–

२९४. ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्वणा,-स्तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे ! भवत्या स्तुताः ।
तस्मात् त्वं तदघापघातविधये बद्धादरा सम्प्रति, श्रेयःस्थानविधानधिक्कृतकलिं श्रीवस्तुपालं स्तुहि ॥५७॥

अपरस्तु–

२९५. सूरो रणेषु चरणप्रणतेषु सोमो, वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु, मन्दोऽपि च [9]ग्रहमयो नहि वस्तुपालः ॥ ५८ ॥

अन्यस्तु–

२९६. श्रीभोजवदनाम्भोजवियोगविधुरं मनः । श्रीवस्तुपालवक्त्रेन्दौ विनोदयति भारती ॥ ५९ ॥

इतरस्तु–

२९७. श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलिच्छद्मतो, जग्मुर्दक्षिणपञ्चशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि,-र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥६०॥

सर्वत्र लक्षदानम् । अष्टाहिकायां गतायां ऋषभदेवं गद्गदोक्त्या मन्त्री आपृच्छत[10]–

---

1 P दृष्ट्वा च रुदितम् । * P पुस्तके प्रक्षिप्तप्राया एते पाठाः । 2 P प्रभवति । 3 PV यन्नास्ति । 4 P भाग्यं । 5 P तदा । 6 P व्यजियत । 7 A इति । 8 P ०ध्यानदान. । 9 V विग्रहमयो । 10 P अपृच्छत् ।

२९८. त्वत्प्रासादकृते नीडे वसन् शृण्वन् गुणांस्तव । सङ्घदर्शनतुष्टात्मा भूयासं विहगोऽप्यहम् ॥ ६१ ॥
२९९. यद्दाये द्यूतकारस्य यत्प्रियायां वियोगिनः । यद्राधावेधिनो लक्ष्ये तद् ध्यानं मेऽस्तु ते मते ॥ ६२ ॥

इत्याद्यकवत्[1]। एवं सङ्घोऽपि चलितः। ससङ्घः सचिवः मरुदेवाशिखरादग्रे यावत् कियदपि याति, तावत् श्रमवशाविगलत्स्वेदक्लिन्नगात्रवसनान् कत्यपि मालिकान् पुष्पकरण्डकभारितशिर-
5 सोऽपश्यत्। पृष्टास्ते–कथमुत्सुका इव यूयम्?। तैर्विज्ञप्तम्–देव! वयं दूरात् पुष्पाण्याहार्ष्मः। सङ्घः किल शत्रुञ्जयशिखरेऽस्ति; प्रकृष्टं मूल्यं लप्स्यामहे। तत्पुनरन्यथा जातम्[2]। सङ्घश्चलितः। तस्मादभाग्या वयमिति। तेषां दैन्यं दृष्ट्वा मन्त्रिणाऽभाणि–अत्रैव स्थीयतामूर्ध्वैः क्षणम्। तावता पाश्चात्यं सर्वमप्यायातम्। श्रीवस्तुपालेन स्वकुटुम्बं सङ्घश्चाभाण्येताम्[3]। यथा–भो धन्याः! सर्वेषां पूर्णस्तीर्थवन्दनापूजाभिलाषः?। लोकेनोक्तम्–[भवत्प्रसादात्*] पूर्णः। मन्त्र्याह–किमपि
10 तीर्थमपूजितं स्थितम् [अस्ति*]? लोकः प्राह–प्रत्येकं सर्वाणि तीर्थानि पूजितानि ध्यातानि। मन्त्रिमहेन्द्रः प्राह–यद्विस्मृतं तन्न जानीथ यूयम्, वयं स्मारयामः। सङ्घो वदति–किं विस्मृतम्?। [तत्कथयन्तु*] मन्त्री गदति–भो लोकाः! पूर्वं तीर्थमयं पर्वतः। यत्र स्वयमृषभदेवः समवासार्षीत्। ततो नेमिवर्जिता [4]द्वाविंशतिर्जिनाः समवासार्षुः। असङ्ख्याः सिद्धाश्च यत्र। सोऽद्रिः कथं न तीर्थम्?। लोकोऽप्याह–सत्यं तीर्थमयं पर्वतः। तर्हि पूज्यताम्। पुष्पादीनि केति चेत् [अकथयिष्यन्
15 तदा*] इमे मालिका इमानि पुष्पाणि वः पुण्यैरुपास्थिषतेति। ततः सङ्घेन तानि पुष्पाणि गृहीत्वाऽद्रिपूजा कृता। [द्रम्मेण पुष्पं जातम्*] नालिकेरास्फालन-वस्त्रदानादिकेलयश्च। तुष्टा मालिकाः। एवं पराशाभङ्गपराङ्मुखः आसराजभूः।

§१४०) [ततः*] शनैः शनैः पशु-तुरङ्ग-शिश्वाद्यपीडया सङ्घो रैवतकमारुरोह च। नेमिनि दृष्टे मन्त्री ननर्त्त, पपाठ च आनन्दाश्रुनिर्झरिताक्षः–

20 ३००. कल्पद्रुमस्तरुरसौ तरवस्तथाऽन्ये, चिन्तामणिर्मणिरसौ मणयस्तथाऽन्ये।
धिग् जातिमेव ददृशे चत यत्र नेमिः, श्रीरैवते स दिवसो दिवसास्तथाऽन्ये ॥ ६३ ॥

३०१. अभङ्गवैराग्यतरङ्गरङ्गे, चित्ते त्वदीये यदुवंशरत्न!।
कथं कृशाङ्ग्योऽपि हि मान्तु हन्त, यस्मादनङ्गोऽपि पदं न लेभे ॥ ६४ ॥

तत्राऽप्यष्टाहिकादिविधिः प्रागिव। नाभेयभवनकल्याणत्रय-गजेन्द्रपदकुण्डान्तिकप्रासाद-अ-
25 म्बिका-शाम्ब-प्रद्युम्नशिखरतोरणादिकीर्त्तनदर्शनैर्मन्त्री [5]सङ्घश्च नयनयोः स्वादुफलमार्पिपताम्। आरात्रिकेऽर्थिनांससम्भ्रमं मन्त्रिमध्ये झम्पापनं[6] दृष्ट्वा श्रीसोमेश्वरश्चकवे[7]–

३०२. इच्छासिद्धिसमन्विते[8] सुरगणे कल्पद्रुमैः स्थीयते, पाताले पवमानभोजनजने कष्टं प्रणष्टो वलिः।
नीरागानगमन् मुनीन् सुरभयश्चिन्तामणिः क्वाप्यगात्, तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ॥६५॥

लक्षः सपादोऽस्य दत्तौ मन्त्रिणः। दानमण्डपिकायां निषण्णो निरर्गलं [दानं*] ददद् एवं
30 स्तुतः केनापि [कविना*]–

३०३. पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि, स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः, केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः ॥ ६६ ॥

---

1 P इत्याद्यकथयत्; A इत्याद्येकवत्, V इत्याद्यपठत्। 2 V वृत्तम्। 3 P आभाण्यताम्। 4 P त्रयोविंशति०। 5 P सघस। 6 A झम्पापतनं। 7 A सोमेश्वरस्य कवे, P सोमेश्वरकवि प्राह। 8 P समुन्नते।

२०४. वस्तुपाल ! तव पर्वशर्वरीगर्वितेन्दुकरजित्वरं यशः ।
क्षीरनीरनिधिवाससः क्षितेरुत्तरीयतुलनां विगाहते ॥ ६७ ॥

एवं भावं सम्पूर्य देवोत्तमं श्रीनेमिनाथमापृच्छ्य सर्वास्तीर्थचिन्ताः[1] कृताः । निर्माल्यपदं दत्त्वा पर्वतादुदतारीत्, न सतां हृदयात् नापि महत्त्वात् ।

§१४१) अथ खङ्गारदुर्गादि-देवपत्तनादिषु देवान् ववन्दे । तेजःपालं खङ्गारदुर्गे स्थापयित्वा स्वयं ससङ्घो वस्तुपालः श्रीधवलक्कके श्रीवीरधवलमगमत् । स्वागतप्रश्नः स्वामिना कृतः । आरम्भसिद्धिप्रश्नश्च । ततो मन्त्र्याह–

२०५. कामं स्वामिप्रसादेन प्रेष्याः कर्मसु कर्मठाः । तद् वैभवं बृहद्भानोः क्वचिदूष्मा जलेऽपि यत् ॥ ६८ ॥

राणकेन ससङ्घः सचिवः स्वसदने भोजितः, परिधापितः, स्तुतश्च ।

तेजःपालस्तु[2] खङ्गारदुर्गस्थो भूमिं विलोक्य तेजलपुरममण्डयत् सत्रारामपुरप्रपाजिनगृहादिरम्यम् । प्राकारश्च तेजलपुरं परितः कारितः पाषाणबद्धस्तुङ्गः ।

§१४२) अथ वस्तुपालः श्रीवीरधवलपार्श्वे सेवां विधत्ते । देशः सुस्थः । धर्मो वर्त्तते । एवं सत्येकदा ढिल्लीनगरादेत्य चरपुरुषैः श्रीवस्तुपालो विज्ञप्तः–देव ! ढिल्लीतः श्रीमोजदीनसुरत्राणस्य सैन्यं पश्चिमां दिशमुद्दिश्य चलितम् । चत्वारि प्रयाणानि व्यूढम् । तस्मात्सावधानैः स्थेयम् । मन्ये अर्बुदादिशा[3] गूर्जरधरां प्रवेष्टा । मन्त्रिणा सत्कृत्य ते चरा राणपार्श्वे नीताः । कथापितः स प्रबन्धः । ततो राणकेनाभाणि–वस्तुपाल ! म्लेच्छैर्गर्द्दभिल्लो गर्द्दभीविद्यासिद्धोऽप्यभिभूतः । नित्यं सूर्यबिम्बनिर्यत्तुरङ्गमकृतराजपाटीकः शिलादित्योऽपि पीडितः । सप्तशतयोजनभूनाथो जयन्तचन्द्रोऽपि क्षयं नीतः । विंशतिवारबद्धरुद्ध[4]सहावदीनसुरत्राणमोक्ता पृथिवीराजोऽपि बद्धः । तस्माद् दुर्ज्जया अमी । किं कर्त्ताऽसि ? । वस्तुपाल उवाच–स्वामिन् ! प्रेषय माम्, यदुचितं तत्करिष्यामि । ततः साराश्वलक्षेण सह चलितो मन्त्री । तृतीये प्रयाणे [5]महणदेवीं कर्पूरादिमहापूजापूर्वं सस्मार । सा तद्भाग्यात्प्रत्यक्षीभूयोवाच–वत्सक ! मा भैषीः । अर्बुदगिरिदिशा यवनाः प्रवेक्ष्यन्ति । तव देशं यदाऽमी प्रविशन्ति तदैव [6]तल्लंघिता घट्टिकाः स्वराजन्यै रोधयेथाः । [तेऽथ*] यत्रावासान् गृह्णन्ति, तत्र स्थिरचित्तः ससैन्यो युद्धाय सरभसं ढौकेथाः । जयश्रीस्तव करपङ्कजे एव । इदं श्रुत्वा धारावर्षायार्बुदगिरिनायकाय स्वसेवकाय नरान् प्रैषयत् । अकथापयच्च–म्लेच्छसैन्यमर्बुदमध्ये भूत्वा आजिगमिषदास्ते । त्वमेतानागच्छतो मुक्त्वा पश्चाद् घट्टिकां रुन्ध्याः । तेन तथैव कृतम् । प्रविष्टा यवनाः । यावदावासान् ग्रहीष्यन्ति तावत्पतितो वस्तुपालः कालः । हन्यन्ते यवनाः । उच्छलितो बुम्बारवः । केचिद्दन्तान्तरं अङ्गुलीं गृह्णन्ति; अपरे तु[7] तोबां कुर्वन्ति । तथाऽपि न[8] च्छुटन्ति । एवं तान् हत्वा तच्छीर्षलक्षैः शकटानि भृत्वा धवलक्कमेत्य मन्त्री स्वस्वामिनं [9]प्रत्यदर्शयत् । श्लाघितश्च तेनायम् ।

२०६. न ध्वानं तनुषे न[10] यासि विकटं नोच्चैर्वहस्याननं, दर्प्पान्नोल्लिखसि क्षितिं खरपुटैर्नावज्ञया वीक्ष्यसे ।
किन्तु त्वं वसुधातलैकधवल ! स्कन्धाधिरूढे भरे, तीर्थान्युच्चतटीविटङ्कविषमाण्युल्लङ्घयन् लक्ष्यसे ॥ ६९ ॥

---

1 P सर्वासां तीर्थचिन्ताकृताम् । 2 P तेजःपालोऽपि । 3 P अर्बुदमध्ये भूत्वा । 4 P ०बद्धसहावदीन० 5 B महणक०; P महणल० । 6 A तदैतल्लंघिताः । 7 PB 'तु' नास्ति । 8 V न तु । 9 AB 'प्रति' नास्ति । 10 A ध्वानंतमुखेन ।

ततः परिधापितः। विसृष्टः स्वगृहाय। तत्र मङ्गलकरणाय लोकागमः। द्रम्मेण पुष्पं लभ्यते। [तदवसरेऽपि*]। एवं पुष्पस्रगव्ययो लोकैः कृतः।

§१४३) इतश्च नागपुरे साधुदेह्लासुतः सा० पूनडः श्रीमोजदीनसुरत्राणपत्नीबीबी[1]प्रतिपन्नबान्धवो अश्वपति-गजपति-नरपतिमान्यो विजयते। तेन प्रथमं श्रीशत्रुञ्जये यात्रा त्रिसप्तत्यधिकद्वादशशतवर्षे[2] (१२७३) बम्बेरपुरात्[3] विहिता। द्वितीया सुरत्राणादेशात् षडशीत्यधिके द्वादशशतसङ्ख्ये (१२८६) वर्षे नागपुरात्कर्त्तुमारब्धा। [तत्सङ्घे*] अष्टादशशतानि शकटानि, बहवो महाधराः। [तदनुसारेण शेषः परिवारः* ।] कुमारनेना[4]सहितो†† माण्डलिपुरं[5] यावदायातः [ससङ्घः*]। ततः[6] सम्मुखमागत्य महन्तकतेजःपालेन[7] धवलक्कमानीतः। श्रीवस्तुपालः सम्मुखमागात्। सङ्घस्य धूली पवनानुकूल्याद् यां यां दिशमनुधावति, तत्र तत्र स[8] गच्छति। [9]तटस्थैर्भणितम्—मन्त्रीश! इतो रजः, इतो रजः। इतः पादोऽवधार्यताम्। ततः सचिवेन बभणे—इदं रजः स्प्रष्टुं पुण्यैर्लभ्यते। अनेन रजसा स्पृष्टेन [10]पापरजांसि दूरे नश्यन्ति। यतः—

> २०७. ‡श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु बम्भ्रमवतो न भवे भ्रमन्ति।
> द्रव्यव्ययादिह नराः स्थिरसम्पदः स्युः, पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ ७० ॥

ततः सङ्घपतिपूनड-मन्त्रिणोर्गाढमालिङ्गन-प्रियालापौ संवृत्तौ। सरस्तीरे स्थितः सङ्घः[11]। †पूनडः कुलगुरुमलधारिश्रीनरचन्द्रसूरिपादान् ववन्दे†। रात्रौ श्रीवस्तुपालेन कथापितं पूनडाय पुण्यात्मने—प्रातः ¶सर्वसङ्घेनास्मद्रसवत्यातिथिना युष्मता च भवितव्यम्¶। धूमो न कार्यः स्वावासेषु[12]। पूनडेन तथेति [13]प्रतिपन्नम्। रात्रौ मण्डपो द्विद्वारो रसवतीप्रकाराश्च सर्वं निष्पन्नम्। [भोजनमण्डपे*] प्रातरायान्ति नागपुरीयाः। सर्वेषां चरणक्षालनं तिलकरचनां च श्रीवस्तुपालः स्वहस्तेन करोति। एवं लग्ना द्विप्रहरी। मन्त्री तु तथैवानिर्विण्णः। तदा तेजःपालेन विज्ञप्तम्—§अन्यैरपि देव! वयं सङ्घपदप्रक्षालनादि करिष्यामः, भुंग्ध्वम्, तापो भावी इति। [14]मन्त्रिनरेन्द्रेणोक्तम्—मैवं वदत[15]। पुण्यैरयमवसरो लभ्यते। गुरुभिरपि कथापितम्—

> ३०८. यस्मिन् कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः।
> तस्मिन् विनष्टे हि कुलं विनष्ट, न नाभिभङ्गे त्वरका वहन्ति ॥ ७१ ॥

तस्माद् भोक्तव्यं भवद्भिः, तापो मा भूद्[16]। $मन्त्रिणा पत्री गुरुभ्यः प्रैषि, तत्र काव्यम्—

> ३०९. अद्य मे फलवती पितुराशा, मातुराशिषि शिखाऽङ्कुरिताऽद्य।
> यद् युगादिजिनयात्रिकलोकं, पूजयाम्यहमशेषमखिन्नः ॥ ७२ ॥

भोजयता मन्त्रिणा नागपुरीयाणामेकपङ्क्तित्वं दृष्ट्वा शिरो धूनितम्। अहो! शुद्धा लोका एते।

---

1 P बीबी प्रेमकमला, V बीबी हूरा०। 2 P विक्रमात् १२७२ वर्षे। 3 A वस्सरे, BED वच्छरे, V बंब्बेर०, P बिम्बेरपुराद् कृता। * P पुस्तक एव कोष्टकगता पाठा लभ्यन्ते। 4 BED कुमारतेना०। †† P पुस्तके नास्तीदं वाक्यम्। 5 P माडलिग्रामासन्नो। 6 P तावत्। 7 P तेज पालमन्त्रिणा। 8 AB नास्ति 'स'। 9 P तटस्थैर्नरै। 10 A वृजिन०। ‡ P विहायान्यत्र नोपलभ्यते पद्यमिदम्। 11 AB नास्ति 'संघ'। † P नास्ति वाक्यमिदम्। 12 V आदर्श एव लभ्यते पदमिदम्। ¶ P पुस्तके 'सर्वसङ्घेनास्मदावासे भोक्तव्यम्,' V सर्वसंघेन भवता युष्मता चास्मद्रसव०। 13 AB तथेत्याद्दतम्। § P देव अन्यैरपि सघभक्ति कारयिष्यते। 14 P 'मन्त्री भणति' इत्येव। 15 P वादी.। 16 P नास्ति। $ P मन्त्रिणा गुरून् प्रति पुनरिद काव्य प्रहितम्।

एवं भोजयित्वा परिधाप्य च रञ्जितो नागपुरसङ्घः । गतौ वस्तुपाल-पूनडौ श्रीशत्रुञ्जयं ससङ्घौ । वन्दितः श्रीऋषभः । एकदा स्नात्रे सति देवार्चको देवस्य नासां पिधत्ते पुष्पैः, किल कलशेन नासा[1] मा पीडीदित्याशयतः । तदा मन्त्रिणा चिन्तितम्–कदाचिद् [2]दैवाद् देवाधिदेवस्य कलशादिना परचक्रेण §वाऽवक्तव्यममङ्गलं भवेत् तदा का गतिः सङ्घस्य । इति चिन्तयित्वा पूनड आलेपे– भ्रातः ! सङ्कल्पोऽयमेवं मे संवृत्तः । यदि बिम्बान्तरमस्य[3] मम्माणीमयं क्रियते तदा सुन्दरम् । तत्तु सुरत्राणमोजदीनमित्रे त्वयि यतमाने स्यान्नान्यथा । पूनडेनोक्तम्–ततः गतैश्चिन्तयिष्यतेऽदः§ । इत्यादि वदन्तौ रैवतादितीर्थान् वन्दित्वा व्यावृत्तौ तौ । गतः पूनडो नागपुरम् । मन्त्री धवलक्कके[4] राज्यं शास्ति ।

§ १४४) एवं स्थितेऽन्येद्युः सुरत्राणमोजदीनमाता वृद्धा हजयात्रार्थिनी स्तम्भपुरमागता । नौवित्तगृहेऽतिथित्वेनास्थात् । सा समागता सचिवेन चरेभ्यो ज्ञाता । चराः प्रोक्ताः श्रीमन्त्रिणा–रे ! यदा इयं जलपथेन याति तदा मे ज्ञाप्या । गच्छन्ती ज्ञापिता तैः[5] । मन्त्रिणा निजकोलिकान् प्रेष्य तस्याः सर्वं कोटीम्बकस्थं वस्तु ग्राहितम् । सुष्ठु रक्षापितं च क्वचित् । तदा नौवित्तैः पूत्कृतं उप-मन्त्रि–देव ! जरत्येकाऽस्मद्यूथ्या हजयात्रायै गच्छन्ती त्वत्पद्रे तस्करैर्लुण्ठिता । मन्त्रिणा पृष्टम्– का सा जरती ?। तैरुक्तम्–देव ! किं पृच्छसि ?, सा मोजदीनसुरत्राणमाता[6] पूज्या । मन्त्रिणा भणितं मायया–अरे ! वस्तु विलोकयत विलोकयत । [दिनद्वयं विलम्ब्य*] आनीयार्पितं सर्वम् । जरतीं तु स्वगृहे आनिन्ये । विविधा भक्तिः क्रियते । पृष्टा च–किं हजयात्रेच्छा वः । तयोक्तम्–ओमिति । तर्हि दिनकतिपयान् प्रतीक्षध्वम् । प्रतीक्षां चक्रे सा । तावताऽऽरासणाश्मीयं[7] तोरणं घटापितम् । [आनायितं च*] मेलयित्वा विलोकितम् । पुनर्विघटितम् । रूतेन बद्धम् । सूत्रधाराः सह प्रगुणिताः, मन्त्रिता[8] मन्त्रिणश्च । मार्गश्चान्तरे त्रिविधोऽस्ति । एको जलमार्गः, अपरः करभगम्यः, इतरश्च अश्वलङ्घ्यः । यत्र ये राजानः, योऽध्वा यथोल्लङ्घ्यते तथा सूत्रं कृतम् । राज्ञां उपदायै द्रव्याणि प्रगुणीकृतानि । एवं सामग्र्या [स्वयं सह भूत्वा*] सा प्रहिता । तत्र रचितं तोरणं [9]मसीतिद्वारे । तत्र दीपतैलादिपूजाचिन्ता तद्राजपार्श्वात् शाश्वती कारिता । दत्तं भूरि भूरि तत्र । उदभूद् भूरि यशः । [§श्रीनाभेयपादुकास्थाने महामण्डपश्च तत्र । परमार्थतस्तीर्थमिदं श्रीऋषभपादुकामयं बाहुबलिना कृतम् । ततो] व्यावृत्ता जरती । आनीता स्तम्भपुरम् । पुरप्रवेशमहः[10] कारितः । स्वयं तदंह्रिक्षालनं[11] चक्रे । एवं भक्त्या दिनदशकं स्थापिता [स्वगृहे*] । तावता धवलकिशोरशतपञ्चकं अन्यदपि दुकूलगन्धराजकर्पूरादि गृहीतम् । वृद्धा प्रोक्ता–मातश्चलसि[12] । [13]यद्यादिशसि तत्र मानं च दापयसि तदाऽहमप्यागच्छामि [तव सम्प्रेषणार्थम्*] । तया भणितम्–तत्राहमेव प्रभुः । स्वैरमेहि । पूजा ते[14] तत्र [बहुतरी*] । श्रीवीरधवलानुमत्या चलितो मन्त्रिमहेन्द्रः । गतो ढिल्लीतटम् । राजमातृवचनात् क्रोशद्वये [ऽर्वाग्*] तस्थौ । सुरत्राणः सम्मुखमागान्मातुः । माता प्रणता पृष्टा च सुखयात्राम् । जरत्या प्रोक्तम्–कथं न मे भद्रम् । यस्या ढिल्ल्यां त्वं पुत्रः, गूर्जरधरायां तु वस्तुपालः । राज्ञा पृष्टम्–कोऽसौ ? । जरत्या वृत्तान्तः प्रोक्तस्तद्विन-

1 P नासां 2 A 'दैवात्' नास्ति । 3 P अश्ममम्माणी० । § एतच्चिह्नान्तर्गताः पङ्क्तयः V आदर्शे नोपलभ्यन्ते सर्वथा; तत्स्थाने 'अव्यक्तदैवात्' इत्येव वाक्यांशो दृश्यते । 4 P स्तम्भतीर्थे । 5 P तैस्तथा कृतम् । गच्छन्ती ज्ञापिता । 6 AB मोजदीनमाता । 7 P आरासणे आश्मीयं । 8 AP नास्ति 'मन्त्रिताः'; V स्वसेवकाः । 9 A मशीति० । § V आदर्शे एवैषा पङ्क्तिः प्राप्यते । 10 P प्रवेश० । 11 AB ०क्षालने । 12 A चलामि । 13 AB यथा० । 14 AP पूज्यते ।

यख्यातिगर्भः। राजाह–स किमिति[1] नात्रानीतः। वृद्धाह–आनीतोऽस्ति। दृश्यतां[2] तर्हि?। अश्ववारान्[3] प्रहित्य आनाय्य दर्शितो वस्तुपालः। दत्तोपदा [मन्त्रिणा*]। आलापितश्च राज्ञा–[मात्रा मदधिकस्त्वं पुत्रो मतः। तेन मम बान्धवस्त्वम्*] अस्मन्माता त्वां स्तौति। [एवं सुखवार्त्तां कृत्वा महतोत्सवेन स्वमातुरग्रेसरः कृत्वा श्रीवस्तुपालो ढिल्लीपुरं नीतः। आवासितश्च
5 साधुपूनडस्यावासे। स्वमुखेन सुरत्राणेन निमन्त्र्य साधुपूनडसदने भोजयित्वा निजधवलगृहे आकारितः सचिवेन्द्रः। सविनयं सत्कृत्य परिधापितः। सुवर्णकोटिमेकां प्रसादपदे दत्त्वा उक्तश्चेति*–] किञ्चिद्याचस्व। [§येन वस्तुना प्रयोजनं तद्वद।] वस्तुपालेनाभिहितम्–देव! गूर्जरधरया सह देवस्य यावज्जीवं सन्धिः स्यात्। उपलपञ्चकं मम्माणीखनीतो दापय। राज्ञा मतं तत्। [दत्ता धीरा*] फलहीपञ्चकं तु[4] [नृपादेशात्*] पूनडेन प्रेषितं[5] शत्रुञ्जयाद्रौ।
10 तत्रैका ऋषभफलही। द्वितीया पुण्डरीकफलही। तृतीया कपर्दिनः। चतुर्थी चक्रेश्वर्याः। पञ्चमी तेजलपुर[6] [प्रासाद*] पार्श्वफलही। [चलितः पश्चात्*] मन्त्रीश्वरः स्वपुरं गतः। प्रणतः स्वस्वामी तेन चिरदर्शनोत्कण्ठाविह्वलेन[7]। पूर्वमपि कर्णाकर्णिकया श्रुतं ढिल्लीगमनवृत्तान्तम्। [पुनः सविशेषं*] मन्त्रिणं पप्रच्छ। सोऽपि निरवशेषमगर्वपरः प्राचख्यौ[8]। तुष्टो वीरधवलः। दत्ता दशलक्षी हेम्नां प्रसादेन[9]। सा तु गृहादर्वागेव दत्ता [बहुमिलितयाचकेभ्यः। मिलितो*]
15 मन्त्रिगृहे सर्वो[ऽपि*] लोकः। [स*] सत्कृत्य प्रेषितः। कवयस्तु पठन्ति–

> ३१०. श्रीमन्ति दृष्ट्वा द्विजराजमेकं, पद्मानि सङ्कोचमहो भजन्ति।
> समागतेऽपि द्विजराजलक्षे, सदा विकासी तव पाणिपद्मः॥ ७३॥
>
> ३११. उच्चाटने विद्विषतां रमाणामाकर्षणे स्वामिहृदश्च वश्ये।
> एकोऽपि मन्त्रीश्वरवस्तुपाल! सिद्धस्तव स्फूर्त्तिमियर्त्ति मन्त्रः॥ ७४॥

20 एवं स्तूयमान उत्तमत्वाल्लज्जमानो वस्तुपालोऽधो विलोकयामास। ततो महानगरवासिना नानाककविना[10] भणितम्–

> ३१२. एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितम्, लज्जानम्रशिराः स्थिरातलमिदं यद्वीक्षसे वेद्मि तत्।
> वाग्देवीवदनारविन्दतिलक! श्रीवस्तुपाल! ध्रुवम्, पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान् मार्गति॥७५॥

तदेव कृष्णनगरीयकविकमलादित्येन भङ्ग्यन्तरमुक्तम्–

> 25 ३१३. लक्ष्मीं चलां त्यागफलां चकार यां[11], साऽर्थिश्रिता कीर्त्तिमसूत नन्दिनीम्[12]।
> साऽपीच्छया क्रीडति विष्टपाग्रत,-स्तद्वार्त्तयाऽसौ त्रपते यतो महान्॥ ७६॥

[तेषां कवीनां भूरि दानं दत्तम्*।]

§१४५) अथ कदाचन मन्त्रिणा श्रुतं यथा–रैवतकासन्नं गच्छतां लोकानां पार्श्वतो भरटकाः पूर्वनरेन्द्रदत्तं करमुद्ग्राहयन्ति। पोट्टलकेभ्यः[13] कणमाणकमेकं १, कूपकात्कर्षः १–एवं उपद्रूयते
30 लोकः। तत आयतिदर्शिना सचिवेन ते भरटकाः कुहाडीनामानं ग्रामं दत्त्वा तं करमुद्-ग्राहयन्तो निषिद्धाः।

---

1 V किमानीतो न। 2 V दृश्यंतां। 3 VB वारं। * एते कोष्ठकगताः सर्वेऽपि पाठा. P पुस्तक एव उपलभ्यन्ते। § V आदर्शेऽधिक वाक्यमिदम्। 4 P नास्ति 'तु'। 5 A प्रैषि। 6 P ०पुरे श्रीपार्श्वे०। 7 A ०विलेन। 8 P प्राचख्यौ। 9 P प्रसादपदे। 10 VB ०वासिनानकविना। 11 P 'यां' नास्ति। 12 AB नन्दनीम्। 13 P पोट्टलि०।

अङ्कवालियाख्यो[1] ग्रामस्तु ऋषभ-नेमियात्रिकाणां क्षीणधनानां स्वगृहाप्तियोग्यपाथेयद्रम्मपदे दत्तः । शत्रुञ्जय-रैवतकतलहट्टिका[2]नगरयोः सुखासनानि कृत्वा मुक्तानि, अन्धज्वरितादीनां यात्रिकाणां तीर्थारोहणार्थम् । [3]तदुत्पाटकनराणां तु ग्रासपदे शालिक्षेत्राणि प्रतिष्ठितानि ।

तीर्थेषु सर्वेषु[4] देवेभ्यो रत्नखचितानि हैमभूषणानि [कारितानि*] । विदेशायातसूरिशुश्रूषार्थं सर्वदेशग्रामण्यो नियुक्ताः । †तथा महातीर्थभूमौ नवीनस्वीयजिनप्रासादान्; पुरे पुरे ग्रामे ग्रामे च पुनर्जिनप्रासादान् प्रारम्भयामास† । लौकिकतीर्थकरणमपि स्वस्वामिरञ्जनार्थं चकार,[4] न भक्त्या [स्वयं तु*] सम्यग्दृष्टित्वात् । [एवं तस्योपकाराः कियन्त्यु(न्त उ-?)च्यन्ते विवेकशिरोमणेः*] ।

§१४६) एकदा मन्त्री स्तम्भ[तीर्थ*]पुरं गतो धवलक्कात् । तत्र [समुद्रतीरे*] यानपात्रात्तुरङ्गा उत्तरन्तः सन्ति । तदा सोमेश्वरः कवीन्द्र आसन्नवर्त्ती[5] । मन्त्रिणा समस्या पृष्टा–

३१४.   प्रावृट्काले पयोराशिरासीद्[6] गर्जितवर्जितः ।

सोमेश्वरः पूरयति[7] स–

अन्तःसुप्तजगन्नाथनिद्राभङ्गभयादिव ॥ ७७ ॥

तुरङ्गमषोडशकमुचितदाने[ऽत्र दत्तम्*] । पुनः कदाचिन्मन्त्रिणोक्तम्–

काकः किं वा क्रमेलकः ।

सोमेश्वरेण पूरितं पद्यम्–

३१५. येनागच्छन्ममाख्यातो येनानीतश्च मत्पतिः । प्रथमं सखि! कः पूज्यः काकः किं वा क्रमेलकः? ॥ ७८ ॥

अत्रापि षोडशसहस्रा द्रम्माणां दत्तिः । एवं लीलास्तस्य ।

§१४७) एकदा वृद्धेभ्यः [8]श्रुतमैतिह्यम् । यथा–प्राग्वाट्वंशे श्रीविमलो दण्डनायको नेढ[9]-वाहिलयोर्भ्राताऽभवत्[10] । स चिरमर्बुदाधिपत्यमभुनक्, गूर्जरेश्वरप्रसत्तेः । तस्य विमलस्य विमलमतेर्वाञ्छाद्वयमभूत् । पुत्रवाञ्छा प्रासादवाञ्छा च । तत्सिद्ध्यै [स्वगोत्रदेवीं] [11]अम्बामुपवासत्रयेणाराराध । प्रत्यक्षीभूय सा प्राह–वत्स! वाञ्छां ब्रूहि । विमलो जगौ–पुत्रेच्छा प्रासादनिष्पत्तीच्छा चार्ऽबुदशृङ्गे मे वर्त्तेते । अम्बया प्रोक्तम्–द्वे प्राप्ती न स्तः । एकां ब्रूहि । ततो [भार्याश्रीदेव्या वचसा] विमलेन संसारवृद्धिमात्रफलामसारां पुत्रेच्छां मुक्त्वा प्रासादेच्छैव सफलीकर्त्तुमिष्टा । अम्बयोक्तम्[12]–सेत्स्यति तवेयम् । परं क्षणं प्रतीक्षस्व । यावताऽहं गिरिवरार्बुदाधिष्ठात्र्याः सख्याः श्रीमातुर्मतं[13] गृह्णामि । [इत्युक्त्वा गता देवी, तावद्*] विमलो ध्यानेन तस्थौ । श्रीमातृमतं लात्वा देव्यायाता;[14] अभाणीच्च–

३१६.   पुष्पस्रग्दामरुचिरं दृष्ट्वा गोमयगोमुखम् । प्रासादार्हां भुवं विन्द्याः श्रीमातुर्भवनान्तिके ॥ ७९ ॥

तत्रैव[15] दृष्ट्वा चम्पकद्रुमसन्निधौ तीर्थमस्थापयत्[16] । पैत्तलप्रतिमा तत्र महती । विक्रमादित्यात् सहस्रोपरि वर्षाणामष्टाशीतौ गतायां चतुर्भिः सूरिभिरादिनाथं प्रत्यतिष्ठिपत् । 'विमलवसतिः' इति प्रासादस्य नाम [दत्तम्*] । तस्मिन् दृष्टे जन्मफलं[17] लभ्यते ।

---

1 A आकवालिया । 2 AB ०रैवतोपत्यका० । 3 AB तद्युग्यनराणां । † एतदन्तर्गता पंक्तिः V आदर्शे एव विद्यते । 4 V विहाय नास्त्यन्यत्र पदमिदम् । 5 AB आसन्नः । 6 P ०राशिः कस्माद् । 7 P प्राह । 8 P श्रुतमेवंविधम् । 9 BV नेढ०, PV वाहिल० । 10 P 'दण्डनायकोऽभवत्' इत्येव पाठः । 11 P अम्बिका० । 12 V अम्बया प्रोक्तम् । 13 V ०मातुरनुमतं । 14 V ०मत नीत्वा अम्बायाता । 15 ABD तत्तथा । 16 BD अवास्थापयत्; A अवस्थापयत् । 17 P जन्म सफलं कथ्यते ।

एतत्कथाश्रवणान्मन्त्री दध्यौ[1]–वयं चत्वारो भ्रातरोऽभूम। [तन्मध्ये*] द्वौ स्तः। द्वौ तु मालदेव-लूणिगावल्पवयसौ दिवमगाताम्। [2]मालदेवनाम्ना कीर्त्तनानि प्रागपि अकारिषत कियन्त्यपि। लूणिगश्रेयसे तु लूणिगवसतिरर्बुदे काराप्या। एतत्तेजःपालाय प्रकाशितम्। तेन विनीतेन सुतरां मेने।

§ १४८) अथ तेजःपालो धवलक्ककादर्बुदगिरिभूषणां चन्द्रावतीं पुरीं गत्वा धारावर्षराणकगृहमगात्। तेनात्यर्थं पूजितः, किं कार्यम्?, आदिश्यतामित्युक्तं च। मन्त्रिणोक्तम्–अर्बुदशिखराग्रे[3] प्रासादं कारयामहे। यदि यूयं साहाय्याः स्यात[4]। धारावर्षेण भणितम्–तव सेवकोऽस्मि। अहं सर्वकार्येषु धुरि योज्यः। ततो राष्ट्रिक-गौग्गलिकादयो महादानैर्वशीकृतास्तथा, †यथा निष्पत्स्यमानं चैत्यं करैर्न भारयन्ति†। 'दानेन भूतानि वशीभवन्ति' [इति वचनात्*]। ततश्चन्द्रावतीमहाजनमुख्यं श्रावकं [5]चाम्पलनामानं गृहे गत्वाऽऽललाप–वयं चैत्यमर्बुदे कारयामहे, यदि पूजासान्निध्यं कुरुध्वे। [6]चाम्पलेनापि स्वस्य कुटुम्बान्तराणामपि देवपूजार्थं नित्यधनचिन्ता कृता। ततो मन्त्री आरासणं गत्वा चैत्यनिष्पत्तियोग्यं दलवाटकं निष्काशयत्[7]। तद् युग्यै रहकलैश्चार्बुदोपत्यकामानीनयत्। अर्द्धक्रोशार्द्धक्रोशान्तरे हट्टानि [मण्डापितानि तत्र*] सर्वं लभ्यते। पशूनां नराणां क्षुधादि[8] कृच्छ्रं मा भूदिति [कारणात्*]। [9]उम्बरिणीपथेन प्रासादनिष्पत्तियोग्यं दलं द्विगुणमुपरि गिरेः प्रवेशयामास। पुनस्तां पद्यां विषमां चकार यथा परचक्रस्य[10] प्रवेशो नो भवेत्। एवं सिद्धे पूर्वकर्मणि, शोभनदेवं सूत्रधारमाहूय कर्मस्थाये[11] न्ययुङ्क्त। ऊदलाख्यं [12]शालमुपरिस्थायिनमकरोत्। अर्थव्यये स्वैरितां च समादिशत्। एवं सूत्रं कृत्वा तेजःपालो धवलक्ककमागमत्। निष्पद्यते प्रासादः। श्रीनेमिबिम्बं कषोपलमयं [13]घट्यते। सूत्रधाराणां सप्तशती घटयति घाटम्। ते तु दुःशीलाः पुरःपुरोऽर्थं गृह्णन्ति। कार्यकाले पुनः पुनर्याचन्ते। तत ऊदलो मन्त्रितेजःपालाय लिखति–देव! द्रम्मा विनश्यन्ति। सूत्रधाराः कर्मस्थायात् प्रथमं प्रथमं गृह्णन्ति। ततस्तेजःपालेन कथापितम्–द्रम्मा विनष्टा इति किं ब्रूषे?। विनष्टाः किं कुथिताः?। न तावत् कुथिताः, किन्तु मनुष्याणामुपकृताः। उपकृताश्चेद्विनष्टाः कथं [कथ्यन्ते*]?। माता मे वन्ध्येति वाक्यवत्परस्परं विरुद्धं ब्रूषे। तस्मात् तत्त्वमिदम्–सूत्रधाराणामिच्छाछेदो न कार्यः, देयमेवेति। ततो दत्ते ऊदलः। तावन्निष्पन्नं यावद् गर्भगृहम्, मध्ये श्रीनेमिनाथबिम्बं स्थापितम्। एतच्च कृतं श्रीतेजःपालाय विज्ञप्तम्। तुष्टौ द्वौ मन्त्रिणौ। श्रीवस्तुपालादेशात् तेजःपालोऽनुपमया सहानल्पपरिच्छेदोऽर्बुदगिरिं प्राप्तः। प्रासादं निष्पन्नप्रायं ददर्श। तुतोष। स्नात्वा सद्वस्त्रप्रावरणः सपत्नीको मन्त्री नेमिं पूजयति स्म। अथ [14]ध्यानेनोर्ध्वस्तस्थौ चिरम्। क्षणार्द्धेनानुपमा पतिं तथास्थं मुक्त्वा प्रासादनिष्पत्तिकुतूहलेन बहिरागात्। तत्र सूत्रधारः शोभनदेवो मण्डपचतुःस्तम्भीमूर्ध्वयितुमुपक्रमते[15]। [तदा*] मन्त्रिण्योक्तम्[16]–सूत्रधार! मम पश्यन्त्याश्चिरं बभूव। अद्यापि स्तम्भा नोत्तम्भ्यन्ते!। शोभनदेवेनोक्तम्–स्वामिनि! गिरिपरिसरोऽयम्। शीतं स्फीतम्। प्रातर्घटनं विषमम्। मध्याह्नोद्देशे[17] तु गृहाय गम्यते, स्नायते, पच्यते,[18] भुज्यते। एवं विलम्बः स्यात्। अथ[19] विल-

1 A दधौ। 2 A मालवदेव०। 3 AV अर्बुदाग्रे। 4 A नास्ति। † P यथा निष्पद्यमानचैत्योपरि प्रद्वेष न भजन्ते। 5 V चम्पक०। 6 V चम्पकेनापि। 7 AB निरकाशयत् P निरवकाशयति। 8 A क्षुद्रादि। 9 V उम्बरणी०। 10 P परचक्रम०। 11 A ०स्थाने। 12 P आत्मशालकं। 13 BD पद्यते, P सज्जीकृतं विद्यते। 14 P अथ कायोत्सर्गे ध्यानेन०। 15 V उपचक्रमे। 16 A मन्त्रीण्युक्त। 17 P मध्याह्ने। 18 P विना नास्त्यन्यत्रेद पदम्। 19 V अथवा।

स्यात् किं भयम् ? । श्रीमन्त्रिपादाश्चिरं राज्यमुपभुञ्जानाः सन्तीह तावत् । ततोऽनुपमया जगदे-सूत्रधार ! चाटुमात्रमेतत् । कोऽपि क्षणः कीदृग्भवेत्; को वेत्ति ? । सूत्रधारो मौनेनातिष्ठत्[1] । पत्नीवचनमाकर्ण्य सचिवेन्द्रो बहिर्निःसृत्य सूत्रधारमवोचत्-अनुपमा किं वावदीति ? । सूत्रधारो व्याहार्षीत्-यद्देवेनावधारितम् । मन्त्री दयितामाह-किं त्वयोक्तम् ? । अनुपमाह-देव ! वदन्त्यस्मि-कालस्य को विश्वासः । कापि कालकला[2] कीदृशी भवति । न सर्वदा[3] तेजः[4] पुरुषाणां तथा । 5

३१७. श्रियो वा स्वस्य वा नाशो[†] येनावश्यं विनश्यति । श्रीसम्बन्धे बुधाः स्थैर्यबुद्धिं बध्नन्ति तत्र किम् ॥८०॥
३१८. वृद्धानाराधयन्तोऽपि तर्पयन्तोऽपि पूर्वजान् । पश्यन्तोऽपि गतश्रीकान् अहो मुह्यन्ति जन्तवः ॥ ८१ ॥
३१९. भूपभ्रूपल्लवप्रान्त[5]निरालम्ब[6]विलम्बिनीम् । स्थेयसीं बत मन्यन्ते सेवकाः स्वामपि श्रियम्[§] ॥ ८२ ॥
३२०. इतो विपदितो मृत्युरितो व्याधिरितो जरा । जन्तवो हन्त पीड्यन्ते, चतुर्भिरपि सन्ततम् ॥ ८३ ॥

एतत्तत्त्ववचः श्रुत्वा मन्त्रिवरः प्राह-अयि ! कमलदलदीर्घलोचने ! त्वां विना कोऽन्यः एवं वक्तुं जानाति ? । 10

३२१. ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिक्षुकुक्षिजैः । बद्धस्पर्द्धभरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ ८४ ॥

३२२. गृहचिन्ताभरहरणं मतिवितरणमखिलपात्रसत्करणम् ।
किं किं न फलति कृतिनां गृहिणी गृहकल्पवल्लीव ॥ ८५ ॥

राज्यस्वामिनि ! वद, केनोपायेन शीघ्रं प्रासादा निष्पत्स्यन्ते ? । देव्याह-नाथ ! रात्रीयसूत्र- 15 धाराः पृथग्, दिनीयसूत्रधाराः पृथग् व्यवस्थाप्यन्ते । कटाहिश्चटाप्यते । अमृतानि भोज्यन्ते । सूत्रधाराणां च विश्रामलाभाद्रोगो न प्रभवति[7] । एवं चैत्यसिद्धिः शीघ्रा । आयुर्यात्येव [8]श्रीरस्थिरैव । यतः-

३२३. गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत् । अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत् ॥ ८६ ॥

इत्यादि सरस्वतीवीणाक्कणितकोमलया गिरोक्त्वा निवृत्ता सुलक्षणा सा । मन्त्रिणा सर्वदेश- 20 कर्मस्थायेषु सैव रीतिः प्रारब्धा । निष्पन्नं च सर्वम् [स्तोकैरेव दिनैः] । गतो मन्त्री धवलक्ककम् । दिनैः कतिपयैर्वर्द्धापनिकानरा [9]आयाताः-देव ! अर्बुदाद्रौ नेमिचैत्यं निष्पन्नम् । हृष्टौ द्वौ बान्धवौ । [पुनः प्रासादप्रतिष्ठार्थं] गतौ ससङ्घौ तत्र ।

§ १४९) तत्र च [10]जावालिपुरात् श्रीयशोवीरो नाम भाण्डागारिकः, सरस्वतीकण्ठाभरणत्वेन ख्यातः, आहूत[11] आगात् । मिलिता वस्तुपाल-तेजःपाल-यशोवीरा एकत्र, न्याय-विक्रम-विनया 25 इव साक्षात् । चतुरशीती राणाः, द्वादश मण्डलीकाः, चत्वारो महाधराः, चतुरशीतिर्महाजनाः-एवं सभा । तदा वस्तुपालेन यशोवीरः प्रोचे-भाण्डागारिक ! त्वं [12]उदयसिंहस्य मन्त्री, यौगन्धरायण इव वत्सराजस्य । तव स्तुतीः स्वस्थानस्थाः शृणुमः । यथा-

३२४. बिन्दवः श्रीयशोवीर ! मध्यशून्या निरर्थकाः । सङ्ख्यावन्तो विधीयन्ते त्वयैकेन पुरस्कृताः ॥ ८७ ॥
यशोवीर ! लिखत्याख्यां यावच्चन्द्रे विधिस्तव । न माति भुवने तावदाद्यमप्यक्षरद्वयम् ॥ ८८ ॥ 30

---

1 P मौनं कृत्वा स्थितः । 2 V क्वापि कला कालस्य; P ०कालवेला । 3 P सर्वदापि । 4 P तेजस्तथा यथा- । † V स्वस्य श्रियो वा नाशे । 5 P ०प्रान्ते । 6 P ०लम्बाऽविल० । § P स्वल्पावस्थायिनीं लक्ष्मीं मन्यन्ते मंत्रिणो बुधाः ॥ 7 A न भवति; V रोगा न भवन्ति । 8 P विहाय सर्वत्र 'स्थिरः स्थिरैव' । 9 P ०पनिकानर आयातः । 10 P जालहुरपुरात् । 11 P स आहूतः । 12 P नृपउदय० ।

अत एव नः सदा भवद्दर्शनरणरणकाक्रान्तमेव स्वान्तमासीत्। इदानीं चारुसम्पन्नं भवदीयसाङ्गत्यम्। तदपि विशेषतः श्रीमन्नेमिदृष्टौ। ततो यशोवीरो व्याहरति–

३२५. श्रीमत्कर्णपरम्परागतभवत्कल्याणकीर्तिश्रुतेः, प्रीतानां भवदीयदर्शनविधौ[1] नास्माकमुत्कं मनः।
[2]श्रुत्यप्रत्ययिनी सदा ऋजुतया स्वालोकविस्रम्भिणी, दाक्षिण्यैकनिधान! केवलमियं दृष्टिः समुत्कण्ठते॥८९॥

5 इत्याद्याः सङ्कथाः प्रपथिरे। प्रासाद-बिम्बप्रतिष्ठोत्सवाः संवृत्ताः।

श्रीवस्तुपालेन एकदा चैत्यस्य दूषण-भूषणानि पृष्टो यशोवीरः प्रोचे–देव! शोभनदेवः सूत्रधारः शोभनः। ततो[3] युक्तमेतदम्बा कीर्तिस्तम्भोपरि स्थिता [4]एकामङ्गुलीमूर्ध्वीकृत्य वर्त्तमाना घटिता। [*स तु कर्मकर एव। द्रव्यलोलुपः। अत्र तव मातुर्मूर्त्तिर्विलोक्यते। येन दाता दुर्लभः।

३२६. शतेषु जायते शूरः सहस्रेषु च पण्डितः। वक्ता शतसहस्रेषु दाता भवति वा न वा॥ ९०॥

10 इत्यादि किमुच्यते।] [5]परमः प्रासादः। परं दोषा अपि सन्ति। प्रासादापेक्षया सोपानानि ह्रस्वानि १; स्तम्भे बिम्बान्याशातनाभाजनं स्युः २; द्वारप्रदेशे व्याघ्ररूपाणि पूजाऽल्पत्वाय स्युः ३; [6]जिनपृष्ठे पूर्वजरोपणा[7] पाश्चात्यानामृद्धिनाशिनी[8] ४; आकाशे जैनमुनिमूर्त्तिरोपणा त्वत्परं दर्शनपूजाऽल्पत्वाय ५; [गूहली कृष्णा न मङ्गलाय ६; भारपट्टाः द्वादशहस्तप्रलम्बाः–कालेन स कोऽप्येवंविधो न भविष्यति यो विनाशे ईदृशः प्रक्षेपयिष्यति ७*] इत्यादि श्रुत्वा सत्यं मत्वा

15 न चुकोप[9]। भवितव्यतां चाप्रतिकारां निश्चिक्ये। विविधदानैर्विक्रमादित्य इव प्रकाश्य महिमानम्, विसृज्य स्वस्थाने लोकम्, सपरिजनो धवलक्ककं गत्वा प्रभुं [10]नत्वा सुखं तस्थौ।

§१५०) इतश्च श्रीवीरधवलस्य द्वौ पुत्रौ स्तः। एको वीरमः, अपरो वीसलः। तत्र वीरमो यौवनस्थः शूरेषु रेखाप्राप्तः[11]। यो वर्षाकालेऽकस्मादुपरि पतन्त्या विद्युत उद्देशेन कृपाणीमाकृषत्। स एकदा क्वचिदेकादशीपर्वणि धवलक्ककमध्ये तरुतलमगमत्। तत्र पर्वण्यसौ रीतिः–वैष्णवैः सर्वै-

20 रष्टोत्तरशतं वदराणां[12] वा आमलकानां [13]वा द्रम्माणां वा मोक्तव्यं तरोरधः। वीरमेनाऽष्टोत्तरं शतं द्रम्मा मुक्ताः। एकेन तु वणिजा तस्यामेव सभायां [14]स्थितेनाष्टोत्तरं शतं [15]आछूनां [16]मुक्तम्। वीरमेण तस्योपरि कृपाणिका कृष्टा–रे! असत्तः किमधिकं करोषीति च[17] वदन्नसौ वणिजं हन्तुमन्वधावत। वणिग् नष्ट्वा[18] वीरधवलाध्यासितां सभामाविशत्। जातः कलकलः। ज्ञातं पारम्पर्यं वीरधवलेन। वणिजि पश्यति वीरमो [आकार्य*] हक्कितः–का ते चर्चा, यद्ययं त्वदधिकं करोति?।

25 अस्माकं न्यायं न वेत्सि। दूरे भव; पुनर्मद्दृष्टौ[19] हि[20] नागन्तव्यं [21]भवता। वणिजो मम जङ्गमः कोशः। मयि जीवति[22] केनाभिभूयन्ते?। इत्युक्त्वा तं वीरमग्रामाख्ये आसन्नग्रामेऽतिष्ठपत्[23]। स तु कोणिककुमारवत् कंसवत् पितरि द्विष्टो जीवन्मृतमन्योऽस्थात्। वीसलस्तु [24]राणश्रीवीरधवलस्य[25] वल्लभः श्रीवस्तुपालस्य च। अत्रान्तरे श्रीवीरधवलोऽचिकित्स्येन व्याधिना जग्रसे। तदा वीरमः स्वसहायैर्बलवान् भूत्वा[26] राज्यार्थी[27] राणकमिलनमिषेण धवलक्ककमागात्। तदैव श्रीवस्तु-

1 P विधावस्माक०। 2 P श्रुत्वा। 3 P ततोऽपि न युक्तम्। 4 B एकदा मगुली, DE एकदा एकदा०। * कोष्ठकगत पाठ P पुस्तक एव दृश्यते, स च प्रक्षिप्तप्राय। 5 P प्रासाद परमतमः। 6 V निज०। 7 P ०रोपणात्। 8 P ऋद्धिनाशो भविता। 9 A सत्य सत्यं मन्वान चुकोप; C D सत्यं मन्वन०, P ०न चुकोप कोऽपि। 10 A नास्ति 'प्रभुं नत्वा'। 11 P रेखा प्राप्त। 12 V वदिरफलानां। 13 P 'वा' नास्ति। 14 P तत्र स्थितेन०। 15 'आछूनां' स्थाने P 'दुष्कृता'। 16 P मुक्ता। 17 P 'च' नास्ति। 18 P नष्टो। 19 V मे दृष्टिं। 20 'हि' नास्ति PB। 21 PB नास्ति 'भवता'। 22 P जीवति सति। 23 P अतिष्ठिपत्। 24 BV 'राणश्री' नास्ति। 25 A वीरस्य। 26 V सम्भूय। 27 P राज्यार्थं।

पालेन तं दुराशयं ज्ञात्वा प्रत्युत्पन्नमतित्वादश्व-गजहेमादिषु परमाप्तमानुषैः परमो यत्नः कृतः । वीरमः प्रभवितुं न शशाक । धवलक्कक एव स्वसौधे विपुलेऽवतस्थे । दिनैस्त्रिभिर्वीरधवलो दिवं गतः । लोकः शोकसमुद्रे[1] पतितः । बहुभिश्चितारोहणं कृतम् । मन्त्री तु सपरिजनः काष्ठानि भक्षयन्नपरापरैर्मन्त्रिभिर्निषिद्धः । उक्तं च-देव! त्वयि सति राणपादाः 'स्वयं'[2] जीवन्तीव [लक्ष्यन्ते*] त्वयि तु लोकान्तरिते परिपूर्णाः पिशुनानां मनोरथाः । गता गूर्ज्जरधरा [इति ज्ञेयम्*] । ततो न मृतो मन्त्री । उत्थापनदिने मन्त्री श्रीवस्तुपालः सभासमक्षं पठति- 5

३२७. आयान्ति यान्ति च परे ऋतवः क्रमेण, सञ्जातमेतदृतुयुग्ममगत्वरं तु ।
वीरेण वीरधवलेन विना जनानां, वर्षा विलोचनयुगे हृदये निदाघः ॥ ९१ ॥

अतीव निःश्वस्य गताः सर्वेऽपि स्वस्थानम् । ततश्च मृते वीरधवले तद्राज्यलिप्सुर्वीरमः सन्नह्य गृहान्निर्गमिष्यति यावता, तावता श्रीवस्तुपालेन वीसलः कुमारो राज्ये विनिवेशितः[3] । वीसल-10 देव इति नाम प्रख्यापितम् । सर्वराज्याङ्गेष्वासनरै रक्षा कारिता । स्वयं वीसलं गृहीत्वा साराऽश्वखुरपुटक्षुण्णक्षमापीठोच्छलदूरजःपुञ्जस्थगितव्योमा राजन्यकरक्रूरकरवालशल्यभल्लकिरणद्विगुणद्योतितरविकिरणो वीरमसम्मुखं[4] ययौ । दारुणः समरो जज्ञे । वीरमः स्वस्य तेजसोऽनवकाशं मन्यमानो नष्ट्वा श्वशुरेण राजकुलेन उदयसिंहेनाधिष्ठितं जावालिपुरं[5] प्रत्यचालीत् । मन्त्री तस्याशयं दक्षतया ज्ञात्वा षोडशयोजनिकान्नरानुदयसिंहान्तिके[6] प्रैषीत् । आख्यापयत्, यथा-15 अमुं राजद्विष्टकारकं जामातृज्ञातेयेन[7] यदि स्वान्तिके स्थापयिष्यसि, तदा ते न राज्यं न जीवितं च । हन्याश्चैनम् । ततो यदा वीरमो जावालिपुरोद्यानं [8]प्राप्तस्तदा विश्राम्यन्नङ्गरक्षिकां[9]मुत्तारयन्नलसायमान उदयसिंहनियुक्तैर्धनुर्द्धरैः शरैः [10]शतजर्ज्जरश्चालनीप्रायकायः कृतः मृतस्तत्र । तस्य शिरो वीसलदेवाय प्रहितं उदयसिंहेन । ततो[11] जातं निष्कण्टकं वीसलदेवराज्यम् । यावन्मात्रं वीरधवलेन साधितं तावन्मात्रान्न किमपि न्यूनमासीत् । केवलं लब्धप्रसरेण वीसलेन 20 श्रीवस्तुपालो लघुतया दृष्टः ।

३२८. पुरुषः [12]सम्पदामग्रमारोहति यथा यथा । गुरूनपि लघुत्वेन संपश्यति तथा तथा ॥ ९२ ॥

§ १९१) राज्ञा पूर्वप्रीत्या[13] [वृद्धनगरीय] नागडनामा विप्रः प्रधानीकृतः । मन्त्रिणः[14] पुनर्लघुश्रीकरणमात्रं दत्तम् । [अस्मिन् प्रस्तावे*] एकः[15] समराकनामा[16] प्रतीहारो राज्ञोऽस्ति । स प्रकृत्या नीचः पूर्वमन्यायं कुर्वाणो मन्त्रिश्रीवस्तुपालेन पीडितोऽभूत् । स लब्धावकाश उपराजं ब्रूते-देव ! 25 अनयोः पार्श्वेऽनन्तं धनमास्ते तद्याच्यताम् । राजापि[17] तावाहूयावादीत्-अर्थो दीयताम् । ताभ्यामुक्तम्-[18]अर्थः शत्रुञ्जयादिषु तीर्थेषु[19] व्ययितत्वान्नास्ति नः[20] । राज्ञोक्तम्-तर्हि दिव्यं दीयताम् । मन्त्रिभ्यामभिहितम्-यद्दिव्यं भवद्भ्यो रोचते तदादिश्यताम् । राज्ञा [21]घटसर्प्पः पुरस्कृतः । लवणप्रसादो [तदा जीवन्नभूत्, स *] निषेधयति तदकृत्यम् । नतु तद्वचनं राजा शृणोति, अभिनवदर्प्पवशात् । तदा सोमेश्वरेणोक्तं काव्यमेकं वीसलं प्रति- 30

---

1 A शोकाब्धौ । 2 V नास्ति 'स्वयं' । 3 V निवे० । 4 AB ०सम्मुखो । 5 P जालहुरपुरं । 6 A उदयसिंहाधिष्ठितं जावालिपुरं । 7 PCD जामातृसम्बन्धेन । 8 A गतः । 9 A अङ्गरक्षकान् । 10 P शतमितैः । 11 P तदनु । 12 V सम्पदामुग्रा० । 13 V आदर्शे एवैतत्पदं दृश्यते । 14 AP मन्त्रिणोः । 15 AP एकश्च । 16 CD समरानामा । 17 P कृतघ्नेन राज्ञापि । 18 BCD दृढ अर्थः । 19 V आदर्शे एवेदं पदं लभ्यते । 20 P नः पार्श्वे । 21 A घटे सर्प्पः ।

३२९. मासान्मांसलपाटलापरिमलव्यालोलरोलम्बतः, प्राप्य प्रौढिमिमां समीर! महतीं हन्त त्वया किं कृतम्?।
सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य यत्, पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥९३॥
निवर्त्तितं दिव्यं राज्ञा।

§१५२) अथ [1]कदाचिद् धवलक्कके मन्त्रिणि वसति सति, पौषधशाला एका आस्ते, तस्या[1]
5 उपरितनं पुञ्जकं क्षुल्लकोऽधः क्षिपन्नासीत्। [तस्याज्ञानात्*] सः पुञ्जको वीसलदेवमातुलस्य सिंहनाम्नो [2]याप्ययानारूढस्याधो रथ्यायां गच्छतः शिरसि पतितः। क्रुद्धः सः। मध्ये आगत्य क्षुल्लकं दीर्घेण[3] तर्जनकेन पृष्ठे दृढमाहत्य–रे! मां जेठुआकं सिंहं[4] राजमातुलं न जानासीति वदन् स्वगृहं गतः। तं वृत्तान्तं मध्याह्ने मन्त्रिवस्तुपालं भोजनारम्भे उत्क्षिप्तप्रथमकवलं [आगत्य*] रुदन्नुद्[5]घाटितपृष्ठोऽजिज्ञपत्[6] क्षुल्लकः। मन्त्रिणाऽभुक्तेनैव उत्थाय क्षुल्लकः सन्धार्य प्रस्थापितः।
10 [शालायां प्रेषितश्च। तदनु *] स्वयं स्वकीयः परिग्रहो भाषितः–भोः क्षत्रियाः! स कोऽप्यस्ति युष्मासु [मध्ये*] यो मम[7] मनोदाहमुपशमयति। [तन्मध्ये*] एकेन राजपुत्रेण भूणपालाख्येनोक्तम्–देव! [8]आदेशं देहि। [अहं तु*] प्राणदानेऽपि तव प्रसादानां नानृणीभवामः। [स एकान्ते नीत्वा*] छन्नं[9] मन्त्रिणादिष्टम्–[याहि*] जेठुआवंशस्य राजमातुलस्य सिंहस्य दक्षिणं पाणिं छित्त्वा मे ढौकय[10]। स राजपुत्रस्तथेत्युक्त्वा एकाकी मध्याह्नोद्देशे[11] सिंहावासद्वारे तस्थौ। तावता
15 राजकुलात् सिंह आगात्। राजपुत्रेणाग्रे भूत्वा प्रणिपत्य सिंहाय उक्तम्–मन्त्रिणा श्रीवस्तुपालदेवेनाहं वः समीपं केनापि गूढेन[12] कार्येण प्रेषितोऽस्मि। [तेन*] इतो भूत्वा प्रसद्याऽवधार्यताम्। इत्युक्ते स किञ्चित्पराग् [13]भूत्वा यावद् वार्त्तां श्रोतुं यतते, तावन् मन्त्रिभृत्येन सिंहस्य करः स्वकरे कृतः[14], सहसा छुर्या [15]छिन्नश्च। तं छिन्नं करं गृहीत्वा–रे! वस्तुपालस्य भृत्योऽस्मि। पुनः श्वेताम्बरं परिभवेरिति वदंश्चरणबलेन पलाय्य भूणपालो मन्त्र्यन्तिकमगमत्, करमदीदृशत्। मन्त्रिणा
20 श्लाघि[16]तोऽसौ। स करः स्वसौधाऽग्रे बद्धः। स्वमानुषाणि परमासनरगृहे मुक्तानि। [आत्मीय*] परिग्रहो भाषितः–यस्य जीविताशा स स्वगृहं यातु, जीवतु [चिरम्*]। अस्माभिर्बलवता सह वैरमुपार्जितम्। मरणं करस्थमेव, जीविते सन्देहः। तैः सर्वैरप्युक्तम्–देवेन सह मरणं जीवितं च। [17]स्थिताः [स्मो वयम्, एतदर्थे निश्चयो ज्ञातव्यः]। ततो गोपुराणि दत्त्वा गृहं नरैः स्वावृतं कृत्वा स्वयं स्वसौधोपरि [सज्जीभूय*] तस्थौ। निषङ्गी, कवची, धनुष्मान्। ततः सिंहस्यापि
25 परिच्छदो मिलितो बान्धवादिर्भूयान्। [तैः सर्वैरभाणि–*] गत्वा वस्तुपालं सपुत्रपशुबान्धवं हनिष्याम इति प्रतिजज्ञे। चलितं जेठुआकसैन्यम्। यावद्राजमन्दिराग्रे आयातं कलकलायमानं तत्[18], तावदेकेन ज्यायसोक्तम्–[एवंविधं व्यतिकरं यदि*] राजा[19] विज्ञप्यते [तदा वरं*] मा स्म सहसाकारे[20] तत्कोपोऽभूत्। ततो विज्ञप्तं राज्ञे। राज्ञा वार्त्तां ज्ञात्वा विमृश्य भणितम्–अनपराधे वस्तुपालो[21] न पीडयति कञ्चित्[22]। युष्माभिरन्याय्यं कृतम्; मन्त्रिणो गुरुरपीडि[23]। [राजा प्राह–
30 यदीत्थं कृतं*] तस्मात्तिष्ठतात्रैव[24]। वयं स्वयं करिष्यामो यदुचितम्। ततः सोमेश्वरदेवः

---

1 A तस्या उपरि उपरितन। 2 P यानाधिरूढस्य। 3 P दीर्घया। 4 BCD सिंहराजकुलं, P सिंहनामानं। 5 B उद्घाटित। 6 BC अभ्यजिज्ञपत्। 7 A मे। 8 P ममादेशं। 9 V मन्त्रिणा प्रच्छन्नमादिष्टम्, P मन्त्रिणा छन्नं कर्णे प्रविश्य समादिष्टं। 10 B ढौकय मम। 11 P मध्याह्ने। 12 PC गूढकार्येण। 13 A पराङ् भूत्वा, P किञ्चिद् गत्वा पराङ्मुखो भूत्वा। 14 P कृत्य। 15 P कक्कलोहछुर्या छिन्न.। 16 P श्लाघेऽसौ। 17 A स्थित। 18 V तत। 19 B राज्ञो। 20 P माऽस्मत्सहसाकारित्वे तस्य कोपोऽभूत्। 21 P केषामपि वस्तुपालो। 22 V काश्चित्, P किञ्चित्। 23 P कृत भावि। तैरुक्तम्–मन्त्रिणो गुरु पीडित। 24 A तिष्ठता तत्रैव।

पृष्टः–गुरो ! किमत्र युक्तं स्यात् । गुरुणोक्तम्–मां तत्पार्श्वे प्रहिणुत । आयाति पथ्यं करिष्ये । प्रहितः सः । प्राप्तो मन्त्रिसौधद्वारम् । प्राप्तो मन्त्र्यनुज्ञया मन्त्रिपार्श्वं पुरोहित आह–मन्त्रिन् ! किमेतत् ? । अल्पे कार्ये कियत्कृतं भवद्भिः ! । जेठुअका मिलिताः सन्ति । राजापि तद्भागिनेयः[1] क्रुद्धः । शम्यन्ताम्[2], येन सन्धिं कारयामि[3] । अथ मन्त्रीशः प्राह–मरणात् किं भयम् ? । 5

३३०. *जिते च लभ्यते लक्ष्मीर्मृते चापि सुराङ्गना । क्षणविध्वंसिनी काया, का चिन्ता मरणे रणे ॥ ९४ ॥

गुरुपरिभवो दुस्सहः । [अथ किं*] व्यापृतम्, जग्धम्, पीतम्, दत्तम्, गृहीतम्, विलसितम् । यदा तदा यथा तथा मर्त्तव्यमेव । इदमेकं मरणमित्थं भवतु ।

३३१. जीवितैकफलमुद्यमार्जितम्, लुण्ठितं पुरत एव यद् यशः ।
ते शरीरकपलालपालनं, कुर्वते वत कथं मनस्विनः ॥ ९५ ॥

इत्यादिगीर्भिर्मृतिकृतनिश्चयं मन्त्रिणं ज्ञात्वा गुरुर्गत्वा राजानमूचे–राजेन्द्र ! म्रियत एवात्र प्रघट्टके[4] मन्त्री । [5]अग्रेऽपि युद्धशूरस्तेषु स्थानेषु [जयश्रीवरो जातः । तत्र वक्तुं न पार्यते । अपि च*] 'तृणं शूरस्य जीवितम्' [इति वचनात्*] ईदृशो योधः क्वचिद्विषमे कार्येऽग्रे धृत्वा घात्यते नैवं वृथा । बहुधा भवतामुपकारी । [अन्यच्च*] स किंप्रभुर्यो जीर्णभृत्यानां द्वित्रान्मन्तून्[6] सहते । अस्मदादीनामपि[7] मनसि देवस्य कीदृशी आशा भाविनी । इत्यादि दृढं मृदुसारं निगद्य हस्ते कृतो राजा । [यदुक्तम्–*] 15

३३२. §वल्ली नरिन्दचित्तं वक्खाणं पाणियं च महिलाओ । तत्थ य वचन्ति सया जत्थ य धुत्तेहिं निज्जन्ति ॥९६॥

[राजा*] प्रोवाच–मन्त्रीह धीरां दत्त्वा सम्मान्य समानीयताम् । गतो गुरुस्तत्र । राज्ञोक्तमुक्त्वा नीतो मन्त्री । परं सन्नद्धबद्धः [एव मिलितः*] । राज्ञा विविधतदुपकृतिस्मृत्या आर्द्रनयनमनसा पितृवदुपशमितो मन्त्री । [†मन्त्रिन् ! भवत्समो मम राज्ये न परो राज्यवर्द्धकः । पूर्वं भवान् अधिकारी अभूत्, सांप्रतं तु राज्याधिष्ठाता मुख्यः । मत्प्रकृती राज्यं भवदीयमेव । नागडस्तु 20 तवादेशकर्ता मन्तव्यः ।] मातुला मन्त्रिपादयोर्लगिताः[8] । [†ग्रामशतं मन्त्रिणो ग्रासे शाश्वतं कृतम् ।] स मन्त्रिच्छेदितः सिंहहस्तो लोके दर्शितः । [9]बहुराजलोकसमक्षं शब्दः प्रलापितः–यो मन्त्रिगुरु-देवहन्ता तस्य प्राणान् हनिष्यामः [†मम राज्ये न्यायान्यायनिरीक्षणा मन्त्र्यधीना] इत्युक्त्वा जिनमतस्य मन्त्रिणश्च गौरवमवृधद्[10] वीसलदेवः । [†इत्यादि यावता श्रीवीसलदेवेन समं श्रीवस्तुपालस्य परमप्रीतिरभूत् ।] 25

३३३. ‡यत्कृतं वस्तुपालेन नान्यथा तत्कथं च न । सौभाग्यभाग्यतः शश्वद्वर्द्धतेऽनुदिनं यशः ॥ ९७ ॥

§१५३) [11]अथ विक्रमादित्यात् १२९८ वर्षं प्राप्तम् । श्रीवस्तुपालो ज्वररुक्[12]लेशेन पीडितः । [तदा] तेजःपालं सपुत्रपौत्रं स्वपुत्रं[13] च जयन्तसिंहमभाषत–वत्सा ! श्रीनरचन्द्रसूरिभिर्मल्लधारिभिः संवत् १२८७ वर्षे भाद्रपदवदि १० दिने [14]दिवंगमसमये [15]वयमुक्ताः–मन्त्रिन् ! भवतां १२९८

---

1 AB तद्भागिनेयः । 2 P तद्भागिनेयः । तेन क्रोधः शम्यताम् । 3 V कारापयामि । * P पुस्तक एवैष श्लोको लभ्यते । 4 P झगटके । 5 P स अग्रे० । 6 P द्वित्रान्नपराधान् । 7 A 'अपि' नास्ति । § P पुस्तक एवेयं गाथा लभ्यते । [†] एतदङ्किताः पाठाः V आदर्शे एव लभ्यन्ते । 8 P लगापिताः । 9 P विना सर्वत्र 'बहू राजलोकः' इत्येव । 10 P अवीवृधत् । ‡ V आदर्शे एवैष श्लोको लभ्यते । 11 P एवं काले गच्छति विक्र० । 12 P ०रुक्क्लेशेन । 13 P नास्ति 'स्वपुत्रं' । 14 P तेषां देवगमन० । 15 P वयमेवमुक्ताः ।

वर्षे स्वर्गारोहो भविष्यति। तेषां च वचांसि न चलन्ति, गीःसिद्धिसम्पन्नत्वात्। ततो वयं श्रीशत्रुञ्जयं गमिष्याम एव।

३३४. गुरुर्भिषग्[1]युगादीशप्रणिधानं रसायनम्। सर्वभूतदयापथ्यं सन्तु मे भवरुग्भिदे ॥ ९८ ॥

३३५. लब्धाः श्रियः सुखं स्पृष्टं मुखं दृष्टं तनूरुहाम्। पूजितं दर्शनं जैनं न मृत्योर्भयमस्ति मे ॥ ९९ ॥

5 कुटुम्बेन [2]तन्मतम्। शत्रुञ्जयगमनसामग्री निष्पन्ना। वीसलदेवो मन्त्रिणा साश्रुलोचनः समापृष्टः। [मुत्कलापितश्च कतिपयपदानि सम्प्रेषणायायातः।*] ततो नागडगृहं[3] मन्त्री स्वयमगात्। तेनाऽऽसनादिभिः सत्कृतो [पृष्टः कार्यविशेषं मन्त्री*] बभाषे–वयं भवान्तरशुद्धये विमलगिरिं प्रतिष्ठामहे। भवद्भिर्जैनमुनयोऽमी ऋजवः सम्यग्रक्षणीयाः क्लिष्टलोकात्। [यतः*]–

३३६. [4]गौर्जरात्रमिदं राज्यं वनराजात् प्रभृत्यपि। स्थापितं जैनमन्त्रौघैस्तद्[5]द्वेषी नैव नन्दति ॥ १०० ॥

10 इति ज्ञातव्यम्। मन्त्रिनागडेनोक्तम्–श्वेताम्बरान् भक्त्या गौरवयिष्यामि। चिन्ता [एषा*] न कार्या। स्वस्त्यस्तु वः। इति तद्वचसा समतुषत्।

§ १५४) अथ चचाल वस्तुपालः। [6]अङ्केवालिआग्रामं यावत्प्राप, तत्र शरीरं बाढमसहं दृष्ट्वा तस्थौ। तत्र सहायाताः सूरयो निर्यामणां कुर्वन्ति। मन्त्रीश्वरोऽपि समाधिना सर्वं श्रृणोति, श्रद्दधाति च। अनशनं प्रतिपद्य यामे गते स्वयं भणति–

15 ३३७. न कृतं सुकृतं किञ्चित् सतां संस्मरणोचितम्। मनोरथैकसाराणामेवमेव गतं वयः ॥ १०१ ॥

३३८. यन्मयोपार्जितं पुण्यं जिनशासनसेवया। जिनशासनसेवैव तेन मेऽस्तु भवे भवे ॥ १०२ ॥

३३९. या रागिणि विरागिण्यः स्त्रियस्ताः कामयेत कः। तामहं कामये मुक्तिं या विरागिणि रागिणी ॥ १०३ ॥

३४०. शास्त्राभ्यासो जिनपदनुतिः[7] सङ्गतिः सर्वदाऽऽर्यैः, सद्वृत्तानां गुणगणकथा दोषवादे च मौनम्।
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे, सम्पद्यन्तां मम भवभवे यावदाप्तोऽपवर्गः ॥ १०४ ॥

20 इति भणन्नेवास्तमितो [8]जैनशासनगगनमण्डलमृगाङ्कः श्रीवस्तुपालः। तदा निर्ग्रन्थैरपि तारपूत्कारमरोदि; का कथा सोदरादीनाम्। [*मन्त्रिणि दिवंगते श्रीवर्द्धमानसूरयो वैराग्यादाम्बिलवर्द्धमानतपः कर्तुं प्रारेभुः। मृत्वा शंखेश्वराधिष्ठायकतया जाताः। तैर्मन्त्रिणो गतिर्विलोकिता, परं न ज्ञाता। ततो महाविदेहे गत्वा श्रीसीमन्धरो नत्वा पृष्टः। स्वाम्याह–अत्रैव विदेहे पुष्कलावत्यां पुण्डरीकिण्यां पुरि कुरुचन्द्रराजा संजातः। स तृतीये भवे सेत्स्यति। अनुपदेजीवस्तु
25 अत्रैव श्रेष्ठिसुताऽष्टवार्षिकी मया दीक्षिता पूर्वकोट्यायुः। प्रान्ते केवलं मोक्षश्च। सा एषा साध्वी व्यन्तरस्य दर्शिता। तदनु तेन व्यन्तरेणात्रागत्य तयोर्गतिः प्रकटिता।]

तत्र तेजःपालो विलपति–

३४१. आल्हादं कुमुदाकरस्य जलधेर्वृद्धिः सुधास्यन्दिभिः, प्रद्योतैर्नितरां चकोरवनितानेत्राम्बुजप्रीणनम्।
एतत्सर्वमनादरादहृदयो[9]ऽनादृत्य राहुर्हहा!, कष्टं चन्द्रमसं ललाटतिलकं त्रैलोक्यलक्ष्म्याः पपौ ॥ १०५ ॥

30 जयन्तसिंहो वदति–

३४२. खद्योतमात्रतरला गगनान्तरालमुच्चावचाः कति न दन्तुरयन्ति ताराः।
एकेन तेन रजनीपतिना विनाऽद्य सर्वा दिशो मलिनमाननमुद्वहन्ति ॥ १०६ ॥

---

1 A युगादीनां। 2 P तन्मानित। 3 P नागडप्रधानगृहं। 4 P गौर्जराणां। 5 P मन्त्रैस्तु। 6 A आकवालिया०। 7 PA जिनपति०। 8 AB जिन०। * कोष्ठकगतः एष सर्वोऽपि पाठः P पुस्तके लभ्यते, नान्यत्र ABCD आदर्शेषु, अत प्रक्षिप्तप्रायोऽयम्। 9 A अहृदयेनाहत्य।

कवयः प्राहुः—

३४३. मन्ये मन्दधियां विधे ! त्वमवधिर्वैरायसे[1] चार्थिनां, यद्वैरोचन-सातवाहन-बलि-श्वेताजं-भोजादयः[2] ।
कल्पान्तं चिरजीविनो न विहितास्ते विश्वजीवातवो, मार्कण्ड-ध्रुव-लोमशाश्च मुनयः स्पृष्टाः[3] प्रभूतायुषः ॥१०७॥

लोकास्तु वदन्ति—

३४४. किं कुर्मः [4]कमुपालभेमहि किमु ध्यायाम कं वा स्तुमः, कस्याग्रे स्वसुखं स्वदुःखमलिनं सन्दर्शयामोऽधुना । 5
शुष्कः कल्पतरुर्यदङ्गणगतश्चिन्तामणिश्चाजरत्, क्षीणा कामगवी च कामकलशो भग्नो हहा ! दैवतः ॥१०८॥

ततस्तेजःपाल-जयन्तसिंहाभ्यां मन्त्रिदेहस्य शत्रुञ्जयैकदेशे संस्कारः कृतः । संस्कारभूम्या-सन्नः स्वर्गारोहणनामा प्रासादो नमि-विनमियुत-ऋषभसनाथः कारितः । मन्त्रिण्यौ[5] ललितादेवी-सौख्यौ[6] अनशनेन मम्रतुः ।

§ १५५) श्रीतेजःपालस्त्वनुपमासहितो मध्यमव्यापारभोगभाग् [7]लेशतस्तथैव दानं तन्वन्[8] 10
१३०८ वर्षे द्यामगमत् । [9]शनैः श्रीजयन्तसिंहोऽपि परलोकमभजत् । श्रीअनुपमापि तपसा स्वर्ग-मसाधयदिति भद्रम् ।

§ १५६) एतयोश्च श्रीवस्तुपाल-तेजःपालयोर्धर्मस्थानसङ्ख्यां कर्तुं क ईश्वरः, परं गुरुमुखश्रुतं किञ्चिल्लिख्यते—लक्षमेकं सपादं जिनबिम्बानां विधापितम् । अष्टादश कोट्यः षण्णवतिर्लक्षाः श्रीशत्रुञ्जयतीर्थे द्रविणं व्ययितम्[10] । द्वादश कोट्योऽशीतिर्लक्षाः श्रीउज्जयन्ते । द्वादशकोट्यस्त्रि- 15
पंचाशल्लक्षा अर्बुदगिरिशिखरे लूणिगवसत्याम् । नवशतानि चतुरशीतिश्च पौषधशालाः कारिताः । पञ्चशतानि दन्तमयसिंहासनानां [कारापणं सूरीणां प्रत्येकमुपवेशनार्थमर्प्पणम्*]; पञ्चशतानि पञ्चोत्तराणि समवसरणानां जादरमयानां [कारणं श्रीकल्पवाचनाक्षणे मण्डनार्थम्*]; ब्रह्मशालाः सप्तशतानि । [ब्रह्मपुर्यः*] सप्तशतानि सत्रागाराणाम् । सप्तशती तपस्वि-कापालिक-भगवद्द्योगिनां मठानाम् । [तेषां*] सर्वेषां भोजननिर्वापादिदानं निश्चितं कृतम् । 20
[†]त्रिंशच्छतानि द्व्युत्तराणि महेश्वरायतनानाम् । त्रयोदशशतानि चतुरुत्तराणि शिखरबद्धजैनप्रासादानाम् । त्रयोविंशतिशतानि जीर्णचैत्योद्धाराणाम् । अष्टादशकोटिव्ययेन सरस्वतीभाण्डागाराणां[11] त्रयाणां स्थानत्रये करणम् [धवलक्क-स्तम्भतीर्थ-पत्तनादौ*] । पञ्चशती [12]ब्राह्मणानां नित्यं वेदपाठं करोति[13] स्म [तेषां गृहमानुषाणां निर्वाहकरणम्*] । वर्षमध्ये सङ्घपूजात्रितयं [सर्वदर्शनिनाम्*] पञ्चशती[14] श्रमणानां नित्यं गृहे विहरति स्म । तटिक-कार्पटिकानां[15] सहस्रं समधिकं 25
प्रत्यहमभुक्त । त्रयोदशयात्राः सङ्घपतीभूय कारिताः [लोकानाम्*] । तत्र प्रथमयात्रायां चत्वारि सहस्राणि पञ्चशतानि शकटानां सशय्यापालकानाम् । सप्तशती सुखासनानाम् । अष्टादशशती वाहिनीनाम् । एकोनविंशतिशतानि श्रीकरीणाम् । एकविंशतिशतानि श्वेताम्बराणाम् । एकादशशती दिगम्बराणाम् । चत्वारि शतानि सार्द्धानि जैनगायनानाम् । त्रयस्त्रिंशच्छती वन्दिजनानाम् । [चतुःसहस्रतुरगाः । द्विसहस्रोष्ट्राः । चतुश्चत्वारिंशदधिकशतं देवार्याः । 30
सप्तलक्षमनुष्याः । इदं प्रथमयात्राप्रमाणम् । अग्रेतना तदधिका ज्ञेया*] (द्वितीययात्रायां सम-

1 P वैराय सेवार्थिनां । 2 CD श्वेतोऽब्जभोजा० ; B श्वातोब्जभो० ; P श्वेताजभो० । 3 P तृप्ताः । 4 A किमुपा० । 5 P मन्त्रिणः पत्न्यौ । 6 A सौख्यौ, P सोपू । 7 P लेशवतोऽपि । 8 P तन्वानः । 9 P ततः । 10 A व्ययोषितं । † P पञ्चविंशतिशतानि हरिहरब्रह्मादिमहेश्वरा० । 11 V ०गारत्रयं स्थानत्रये । 12 V विप्राणां । 13 ACD कुर्वंति स्म; P कारयति स्म । 14 AP पञ्चदशशती । 15 P बहुकटिर्कार्पटिकानां ।

धिकम् V)। तथा चतुरशीतिस्तडागाः सुबद्धाः। चतुःशती चतुःषष्ट्यधिका वापीनाम्। पाषाणमयानि द्वात्रिंशद् दुर्गाणि। चतुःषष्टिर्मशीतयः†। तथा दन्तमयजैनरथानां चतुर्विंशतिः। विंशं शतं शाकघटितानां रथानाम्। [एकविंशत्याचार्यपदानि कारितानि*] सरस्वतीकण्ठाभरणादीनि चतुर्विंशतिविरुदानि [भाषितानि कविजनैः।*] श्रीवस्तुपालस्य दक्षिणस्यां दिशि 5 श्रीपर्वतं यावत्, पश्चिमायां प्रभासं[1] यावत्, उत्तरस्यां केदारपर्वतं यावत्, पूर्वस्यां वाणारसीं यावत्, तयोः कीर्त्तनानि [श्रूयन्ते]। सर्वाग्रेण त्रीणि कोटिशतानि चतुर्दशलक्षा अष्टादशसहस्राणि अष्टशतानि द्रव्यव्ययः [पुण्यस्थाने]। त्रिषष्टिवारान् सङ्ग्रामे जैत्रपदं गृहीतम्। अष्टादश वर्षाणि तयोर्व्यापृतिः[2] ॥

॥ इति श्रीवस्तुपाल-तेजःपालयोः प्रबन्धः ॥

---

§ V 'द्वादश यात्रा संघपतीभूय संपूर्णा। त्रयोदशमी यात्रा अवसानकाले मार्गे मनसा पूर्णा।' † एतद्वाक्याग्रे 'एवं लौकिकमपि कृत मनो विनापि' इद प्रक्षिप्तमधिकं वाक्यं लभ्यते P पुस्तके। 1 P पञ्चनदं। 2 व्यापारः।

# ग्रन्थकारप्रशस्तिः ।

श्रीप्रश्नवाहनकुले कोटिकनामनि गणे जगद्विदिते ।
श्रीमध्यमशाखायां हर्षपुरीयाभिधे[1] गच्छे ॥ १ ॥
मलधारिविरुदविदितश्रीअभयोपपदसूरिसन्ताने ।
श्रीतिलकसूरिशिष्यः सूरिः श्रीराजशेखरो जयति ॥ २ ॥ 5
तेनायं मृदुगद्यैर्मुग्धो मुग्धावबोधकामेन ।
रचितः प्रबन्धकोशो जयताज्जिनपतिमतं यावत् ॥ ३ ॥

तथा–

कट्टारवीरदुस्साधवंशमुकुटो नृपौघगीतगुणः ।
बब्बूलीपुरकारितजिनपतिसदनोच्छलत्कीर्तिः ॥ ४ ॥
बप्पकसाधोस्तनयो गुणदेवोऽजनि सपादलक्षभुवि । 10
तद्भूर्नूनकनामा तत्पुत्रः साढको दृढधीः ॥ ५ ॥
तत्सूनुः सामन्तस्त[2]त्कुलतिलकोऽभवज्जगत्सिंहः ।
दुर्भिक्षदुःखदलनः श्रीमहमदसाहिगौरवितः ॥ ६ ॥
तज्जो जयति सिरिभवः षड्दर्शनपोपणो महणसिंहः ।
ढिल्ल्यां स्वदत्तवसतौ ग्रन्थमिमं कारयामास ॥ ७ ॥ 15
शरगगनमनुमिताब्दे (१४०५) ज्येष्ठामूलीयधवलसप्तम्याम् ।
निष्पन्नमिदं शास्त्रं श्रोत्रध्येत्रोः सुखं तन्यात्* ॥ ८ ॥

॥ इति चतुर्विंशतिप्रबन्धाऽपरनामा प्रबन्धकोशो ग्रन्थः सम्पूर्णः ॥

# १. परिशिष्टम्–प्रथमम् ।

## मन्त्रिवस्तुपालकृतसुकृतसूचिः ।

[ V सञ्ज्ञकादर्शप्रान्तभागे इयं सूचिर्लिखिता लभ्यते । ]

महं श्रीवस्तुपालेन अष्टादशभिर्वर्षैर्यावन्मात्रं सुकृतं कृतं तावन्मात्रं वैतरणीतीरे सन्तिष्ठमान-
5 सोपारा-आदिनाथदेवालय[स्थि]तप्राकृतप्रशस्तेर्ज्ञेयम् ।

श्रीजिनबिंब ल० १ स० २५......लेकतपोधनसत्कमठ......७०० । पोषधसाला ९८४ ।......
सिंहासन ५०० । जिनप्रासाद १३५७४ । तेषां मध्ये हेमकुम्भमय २४ । जैनतपोधनावासे अन्न-
पानं विहरंति पंचदश, सह० १५००० ।

श्रीशत्रुञ्जयपर्वते कोडि १८ ल० ९६ । सोमेश्वरे कोडि १० । ब्रह्मशाला ७०० । पाखाणबद्ध
10 सरोवर २८४ । जादरमय समोसरण ५०५ । तीर्थयात्रा वार १२॥ । प्रतिवर्ष संघपूजा वार २३ ।
प्रतिवर्ष संघवात्सल्य वार २५ । तोरण सह० ३ जैन-माहेशप्रासादेषु । नानामार्गे प्रपा १०० ।
माहेश प्रा० ३००२ । ब्राह्मण ५०० वेदपाठं कुर्वंति । आचार्यपद कारापित २१ । जीर्णोद्धार प्रासाद
२०००, शत ३०० जैन-माहेश्वराणाम् । पाखाणमयमढ सह० ४००० । कूप ७०० । श्रीगिरनारि
व्यये कोटि १२ ल० ८० । अर्बुदाचले १२ कोडि, लक्ष ३५ लूणिकवसत्यां पुण्यवरः । श्रीअचलेश्वरं
15 प्रति वृद्धदेवलोकजनानां दत्तद्रव्यलक्ष १, प्रतिदिनावासे कार्पटिकानां १ सह० भोजनम् । ब्राह्म-
णदत्तगौ १००० । ब्रह्मपुरी कारिता शत ७०० । वापीनां शत ४६५ । श्रीभृगे स्नानं कृत्वा दत्ता
लक्ष ५ । श्रीभृगुपुरे श्रीजैनप्रासादमध्ये दत्ता को० २ । जैन-माहेश्वरग्रंथलेखने कोडि १८ द्रव्य-
व्ययः । रेवातीरे शुक्लतीर्थे स्नानं विधाय श्वेतवाराहं नत्वा दत्ता लक्ष २ । दर्भावत्यां वैद्यनाथे
१२०००० शत १ दत्ता । श्रीसेरीशके श्रीपार्श्वनाथं प्रणम्य दत्त लक्ष १ सह० १३ शत १६५ ।
20 नानास्थाने अकारि दुर्गं ४१६ । पाखाणमया ३२ । वाणारस्यां देवविश्वनाथपूजार्थं प्रहितद्रव्य ल०
१ । श्रीद्वारिकायां देवपूजार्थं प्रहितद्रव्य लक्ष १ स० ६१ श० १ । प्रयागतीर्थे प्रहितद्रव्य लक्ष १ ।
गंगातीर्थे प्रहितद्रव्य ल० ५ (?) । श्रीस्तंभने द्रव्य ल० १ । श्रीसंखेश्वरे द्रव्य ल० २ । सोपारा-
आदिनाथ..... ग्रे द्रव्य ल० ४ । ग(गो)दावर्यां द्रव्य ल० १ । तपत्यां प्रहित द्रव्य ल० १ ।
मसीति ६४ । हजतो० १ ।

25 संघचालतां शकटशत ४५००, वाहणिशत १८, सुखासन ७००, पालषी ५००, दंतरथ २४,
रक्तसांढि ७०० । संघरक्षणाय राणा ४, सीकरि १९०० । श्वेतांबर सह० २०००, शत १००,
दिगंबर ११०० । जैनगायिनि ४००० (?) ४५०, भट्टशत ३३००, अपरगायिन सह० १००० । सर-
स्वतीकण्ठाभरण [ आदि ] विरद २४ । नर्तकी १०० । वेसरशत १ संप्रदायसमं (?) । अश्ववैद्य
१०, नरवैद्य १०० ।

30 श्रीवस्तुपालस्य दक्षिणस्यां दिशि श्रीपर्वतं यावत् कीर्तनानि ।

संग्रामे श्रीवीरधवलकार्ये वार ६३ जेत्र(तृ)पदम् । सर्वाग्रे त्रीणि कोटिशतानि, १४ लक्ष, १८
सहस्र, ८ शतानि द्रव्यव्ययः ॥

॥ इति श्रीवस्तुपालमंत्रीश्वरधर्मवरः सर्वाग्रः ॥ छ ॥

# २. परिशिष्टम्–द्वितीयम् ।

[ असमत्सङ्गृहीतादर्शमध्यात् केवलं BDE सञ्ज्ञकानामादर्शानां अन्तभागे एषा वंशावली लिखिता लभ्यत इति–सम्पादकः । ]

## सपाद-लक्षीयचाहमानवंशो लिख्यते–

१ सं० ६०८ राजा वासुदेवः ।
२ सामंतराजः ।
३ नरदेवः ।
४ अजयराजः । अजयमेरुदुर्गकारापकः ।
५ विग्रहराजः ।
६ विजयराजः ।
७ चंद्रराजः ।
८ गोविंदराजः ।
९ दुर्लभराजः । सुरत्राणस्य वेगवरिसनाम्नो जेता ।
१० वत्सराजः ।
११ सिंहराजः ।
१२ दुर्योजनः । सुरत्राणस्य हेजिवदीननाम्नो 'जैटाणाकजेता[1] ।
१३ विजयराजः । निसरदीनसुरत्राणजेता ।
१४ बप्पइराजः ।
१५ दुर्लभराजः । शाकंभर्यां देवताप्रसादाद् हेमादि[2] स्वानि संपन्नः[3] ।
१६ गंडू ।
१७ बालपदेवः । महमदसुरत्राणजेता ।
१८ विजयराजः ।
१९ चामुंडराजः ।
२० दूसलदेवः । सुरत्राणभंक्ता ।
२१ वीसलदेवः । तेन गूर्जरात्राधिपतिर्बद्ध्वाऽऽनीतः । अजयमेरुमध्ये [illegible] कारितः । स च स्त्रीलम्पटः । महासत्यां माधण्यां विलग्नो पतत् । तच्छापात् कुष्ठ-व्रणसङ्क्रमे मृतः ।
२२ वृहत्पृथ्वीराजः । वगुलीसाहसुरत्राणभुजमर्दी[4] ।
२३ आल्हणदेवः । सहावदीनसुरत्राणजितः ।
२४ अनलदेवः ।
२५ जगद्देवः ।
२६ वीसलदेवः ।
२७ अमरगांगेयः । तुरुष्कजित् ।

---

1 B जेवाणाक° । 2 B 'स्वानि' नास्ति । 3 DE संपन्नाः । 4 B °भुजगती ।

| | |
|---|---|
| २८ पान्थडदेवः[1] । | |
| २९ सोमेश्वरदेवः । | |
| ३० पृथ्वीराजः । | सं० १२३६ राज्यम् । वीरः १२४८ मृतः । |
| ३१ हरिराजदेवः । | |
| 5 ३२ राजदेवः । | |
| ३३ वालणदेवः । | बाबरीयालविरुदं तस्य । |
| ३४ वीरनारायणः । | तुरुष्कसमसदीनयुद्धे मृतः । |
| ३५ वाहडदेवः । | मालवजेता । |
| ३६ जैत्रसिंहदेवः । | |
| 10 ३७ श्रीहम्मीरदेवः* । | सं० १३४२ राज्यम् । १३५८ युद्धे मृतः । हस्ती ४, हस्तिनी ४, अश्वसहस्र ३०, दुर्ग १० एवं प्रभुः सत्त्ववान् । |

1 B पान्यदेव । * DE आदर्शे नास्ति एतन्नाम । 2 C ८ ।

# ३. परिशिष्टम्–तृतीयम्।

## प्रबन्धकोषान्तर्गत-
## सुभाषितस्वरूपवाक्यानां पादानां न्यायवचनानां च उद्धरणम्।

गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। पृ० २; पं० २३. 5
राजभिः पूज्यते यश्च सर्वैरपि स पूज्यते। पृ० ३; पं० ११.
शोकापनोदो धर्माचार्यः। पृ० ३; पं० २७.
तपो हि वज्रपञ्जरप्रायं महामुनीनां परप्रेरितप्रत्यूहपृषत्कदुर्भेदतरम्। पृ० ४; पं० १९.
कुञ्जरस्कन्धाधिरूढोऽपि भषणैर्भक्ष्यते। पृ० ४; पं० २२.
लोकः पूजितपूजकः। पृ० ६; पं० १३.
यच्चिन्त्यते परस्य तदायाति सम्मुखमेव। पृ० ९; पं० ६. 10
एकं वानरी, अपरं वृश्चिकेन जग्धा। पृ० ९; पं० १८.
हनूमति रक्षति सति शाकिन्यः पात्राणि कथं ग्रसन्ते। पृ० १०; पं० २१.
जर्जरापि यष्टिः स्थालीनां भञ्जनाय प्रभवत्येव। पृ० १३; पं० २५.
मृत्वापि पञ्चमो गेयः। पृ० १४; पं० २८.
यः कालज्ञः स सर्वज्ञः। पृ० २५; पं० २१. 15
तेजसां हि न वयः समीक्ष्यते। पृ० २६; पं० २५.
रत्नानि पुण्यप्रचयप्राप्यानि। पृ० २६; पं० २८.
नष्टं मृतं सहन्ते हि पितरो निजतनयम्। पृ० २७; पं० ३.
धनार्जकस्य कृच्छ्रमस्थानव्ययी पुत्रो न वेत्ति तातस्य। पृ० २७; पं० १३.
स्वनाम नामाददते न साधवः। पृ० २७; पं० २०. 20
वात्याभिर्न चलति काञ्चनाचलः। पृ० ३४; पं० १४.
विद्वान् सर्वत्र पूज्यते। पृ० ३७; पं० १२.
काकतालीयन्याय। पृ० ४०; ३१.
अन्धवर्तकीन्याय। पृ० ४०; ३१.
अङ्गीकृतसाहसानां न किञ्चिदपि दुष्करम्। पृ० ५०; पं० २५. 25
सेवकस्य च हिताहितविचारो नास्ति। पृ० ५१; पं० ४.
अर्थो हि परावर्तयति त्रिभुवनम्। पृ० ५१; पं० १७.
बलवद्भिः सह का विरोधिता। पृ० ५२; पं० १९.
बुभुक्षितः किं न करोति पापम्। पृ० ५३; पं० २६.
अतिप्रज्ञापि दोषाय। पृ० ५५; पं० प० ७. 30
रसावेशे हि कालो गच्छन्नपि न लक्ष्यते। पृ० ६३; पं० ७.
अशुभस्य कालहरणम्। पृ० ७०; पं० १६.
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्। पृ० ७८; पं० १२.
कुतूहली ह्यलसो न भवेत्। पृ० ८३; पं० २०.

विद्या-कन्या-लक्ष्म्यो हि कुस्थाने निवेशिता निवेशयितारं शपन्ति । पृ० ८८; पं० ५.
पापं पच्यते हि सद्यः । पृ० ९८; पं० २८.
इयं गूर्जरधरा कालवशादन्यायपरैः पापैः स्वाम्यभावात् 'मात्स्यन्यायेन' कदर्थ्यमाना आस्ते म्लेच्छैरिव गौः । पृ० १०१; पं० २०.
5 लब्धास्वादः पुमान् यत्र तत्रासक्तिं न मुञ्चति । पृ० १०३; पं० २४.
अदृष्टपरशक्तिः सर्वोऽपि भवति बलवान् । पृ० १०४; पं० ६.
यद्दीयते तल्लभ्यते–इति न्यायः । पृ० १०४; पं० ३०.
नेदीयानिद्धबाह्ननामाहवो हि महामहः । पृ० १०५; पं० ३१.
जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः । पृ० १०५; पं० २५.
10 कण्ठीरवे तु दृष्टे कुण्ठाः सर्वे वन्याः । पृ० १०५; पं० २९.
दानेन भूतानि वशीभवन्ति । पृ० ११२; पं० ९.
तृणं शूरस्य जीवितम् । पृ० १२७; पं० १२.
स किं प्रभुर्यो जीर्णभृत्यानां द्वित्रान्मन्तूंश्च सहते । पृ० १२७; पं० १३.

# प्रबन्धकोशग्रन्थान्तर्गत-उद्धृतपद्यानां सूचिः ।

## -: अकाराद्यनुक्रमेण :-

# प्रबन्धकोशान्तर्गतविशेषनाम्नां सूचिः ।

## अकाराद्यक्षरानुक्रमेण

## स



## ह